# PREFACE

THE Adyar Library is happy to bring out this edition of the *Lakṣmī-tantra*, an important Pāñcarātra text, as the eighty-seventh volume in the Adyar Library Series. This is the second Pāñcarātra work published by the Library; the first was the *Ahirbudhnya Saṃhitā* edited under the supervision of Dr. F. Otto Schrader and published in 1906.

The present edition of the *Lakṣmī-tantra* is based on the following material:

A. The *Lakṣmī-tantra* printed in 1888 in Telugu characters by the Sadvidyāmandira Press, Mysore.

B. Adyar Library MS. No. 73675 (palm-leaf) containing *adhyāya-s* 1 to 50.

C. Adyar Library MS. No. VB 1004 (palm-leaf) containing *adhyāya-s* 1 to 50, but lacking a few lines at the end.

D. Government Oriental Manuscripts Library, Madras, MS. R. No. 6040*b* (palm-leaf) containing *adhyāya-s* 1 to 31, the last *adhyāya* being incomplete.

E. Government Oriental Manuscripts Library, Madras, MS. D. No. 16058 (palm-leaf) containing *adhyāya-s* 1 to 17.

F. Government Oriental Manuscripts Library, Madras, MS. R. No. 28 (paper) containing *adhyāya-s* 1 to 50 with a gap in the 17th *adhyāya*. This is said to be a transcript of a MS. belonging to Śrī M. O. Anandalvar of Bangalore.

G. Sri Venkatesvara Oriental Manuscripts Library, Tirupati, MS. No. 3852 (paper) containing *adhyāya-s* 1 to 50.

I. Government Oriental Manuscripts Library, Madras, MS. R. No. 5218 (palm-leaf) containing *adhyāya-s* 1 to 57, but lacking the end of the 55th, the whole of the 56th and the beginning of the 57th *adhyāya-s*.

We thank the authorities of the Government Oriental Manuscripts Library, Madras, and the Sri Venkatesvara Oriental Institute, Tirupati, for lending their manuscripts

Pandit V. Krishnamacharya, with his experience in the editing of texts and his knowledge of Vaisnava literature, is well qualified to edit the *Lakṣmī-tantra.* It is hoped that his Sanskrit gloss on the text as well as the introduction will prove to be of much use to readers. Pandit K. Ramachandra Sarma has assisted the editor in preparing the indices and the copy for the press. Dr. Sreekrishna Sarma and Mrs. Radha Burnier have also read the proofs.

We tender our grateful thanks to Dr. V. Raghavan of the University of Madras who has not only given valuable advice but has also gone through the proofs.

ANN KERR
*Director, Adyar Library*

1st February 1959

"शतकोटिप्रविस्तारात्लक्ष्मीतन्त्रमहार्णवात् ।
अयं सारः समुद्धृत्य स्निग्धया दर्शितो मया ॥"

"रहस्यानेकसंभेदं नानावाक्योपशोभितम् ।
लक्ष्मीतन्त्राह्वयं सम्यक् सद्यः प्रत्यायकं नृणाम् ॥"
(लक्ष्मीतन्त्रम् ४४-५२ ; ५१-४)

# CORRIGENDA

| *Page* | *Verse* | *For* | *Read* |
|---|---|---|---|
| ४२ | ५२ | चतुर्विध | चतुर्विधा . |
| ,, | ५५ | प्रोक्त | प्रोक्ता |
| ४३ | ५ | अपूर्वं | अपूर्वां |
| १०५ | ५४ | मंस्य | मस्य |
| ११० | ५७ | वामे. | वामैः |
| ११५ | ३९ | गढो | गूढो |
| १२७ | २७ | द्रतं | द्रुतं |
| १३४ | ४५ | अनिदेश्यो | अनिर्देश्यो |
| १३५. | ५५ | रिनाना | विम्नाना |
| १६० | ८६ | वह्निभिर्वा | वह्नीभिर्वा |
| १७० | ११ | सारर्पिणी | साकर्पणी |
| १८६ | १२१ | रुपास्यव | रुपास्यैवं |
| २१६ | २३६ | २६६ | २३६ |

# उपोद्घातः

## १. आगमाः

आगमो नामानादिसंप्रदायसिद्धगुरुशिष्यपरंपरोपदेशक्रमागतः शास्त्रसंदर्भः । आगमशब्दो वैदिकानिवावैदिकानप्यागमान् क्रोडीकरोति । तत्रावैदिका बौद्धाद्यागमाः । वैदिकास्तु वेदा इतिहासपुराणानि तन्त्राणि च । वेदा निगमापरपर्यायनामानः ऋगादिभेदाश्चतुर्विधाः प्रसिद्धाः । इतिहासपुराणानि महाभारतपाद्मादीनि । आगमापरनामानि तन्त्राणि शैवशाक्तवैष्णवभेदेन त्रेधा भिद्यन्ते । तत्र प्रथमे कापालकालामुखपाशुपतशैवभेदेन चतुर्धा भवन्ति । तत्रापि चरमे काश्मीरशैवसिद्धान्तभेदेन द्विधा भिद्यन्ते । सर्वेऽपीमे शैवागमाः शिवपारम्यं शिवपूजादिकं च प्राधान्येन प्रतिपादयन्ति । काश्मीरागमाणामुत्तरदेशेष्वेव प्रचुरः प्रचारः; कचिद्दक्षिणदेशेष्वपि । शैवसिद्धान्तागमानां तु दक्षिणदेशेष्वेव प्रचारः । शाक्तागमा दक्षिणाचारवामाचारभेदेन द्विविधा भवन्ति । दक्षिणाचारः प्रायेण वैदिकमार्गानुसारी । वामाचारस्तु वैदिकमार्गपरिभ्रष्ट इति वदन्ति । तथा चाह भास्कररायदीक्षितः—"वामाः वाममार्गरताः । पञ्चयज्ञादिविलोपकत्वात् कुत्सिता इति वामकाः" (ललितासहस्रनामभाष्यम्, श्लो. २२५) इति । उभयेऽपीमे शक्तिपारम्यं शक्तिपूजादिकं च विशेषतः प्रतिपादयन्ति । वैष्णवागमाश्च वैखानसपाञ्चरात्रभेदेन द्विविधा भवन्ति । उभयेऽपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति ।

## २. वैखानसपाञ्चरात्रयोस्तारतम्यम्

वैखानसप्रक्रियायां वैखानससूत्रिणां द्विजानामेवाधिकारः; नान्यसूत्रिणां नान्यद्विजानाम् । भगवान् वैखानसो हि आपस्तम्बबोधायनादिवत् यजुःशाखानुसारी श्रौतगृह्यधर्मसूत्राणां रचयिता । तदीयसूत्रेषु भगवतो नारायणस्य पूजां संग्रहेण प्रतिपादितामवलम्ब्य भृगुमरीच्यादयो महर्षयो विस्तरेण भगवत्पूजां प्रतिपिपादयिषवो विविधानागमग्रन्थानरचयन् । ते च भृगुसंहिता, मरीचिपटलः, आनन्दसंहितेत्यादिनाम्ना प्रथन्ते । अतो वैखानसप्रक्रियायां ये निज पितृपितामहादिवंशपरंपरया वैखानससूत्रसंबन्धिनो वैखानससूत्रोक्तप्रक्रिययैव जातकर्मनामकरणादिसंस्कारान् कुर्वते तदुक्तधर्मांश्चानुतिष्ठन्ति, तेषामेवाधिकारः, नान्येषामिति व्यवस्थितिः । यथोक्तं श्रीप्रश्नसंहितायाम्—

> "वैखानसऋषिर्देवि ब्रह्मणो मानसः सुतः ।
> हिमवच्छिखरे रम्ये गङ्गाद्वारे तपस्यति ॥

A

पाञ्चरात्रसमं शास्त्रं मत्पूजार्थं करिष्यति ।
तच्छिष्या भृगुमुख्या वै वैखानसमुनीरितम् ॥
शास्त्रं वैखानसं नाम ह्यधीत्य मुनिपुंगवाः ।
तच्छास्त्रोक्तविमानानि बिम्बानि ह्यालयानपि ॥
तच्छास्त्रेण प्रतिष्ठाप्य पूजयिष्यन्ति वै त्वमे ।
एवं शैवादिशास्त्राणि भविष्यन्ति च भूतले ॥
तदाराधकमर्त्यैश्च तच्छास्त्रेण च दीक्षितैः ।
एतच्छास्त्रान्यसिद्धान्तदीक्षितैरन्यगोत्रिभिः ।
मन्त्रसिद्धान्तबिम्बानि न स्पृश्येरन् कदाचन ॥"
(अ. ९०, श्लो. १६०-१६९)

इति । पाञ्चरात्रप्रक्रियाया तु स्वार्थे गृहार्चायजने सर्वेषामधिकारः । परार्थे देवालययजने तु, ये किल प्रसिद्धेषु देवालयेषु वंशपरंपरया दीक्षाविशेषपुरःसरं समाराधनेऽधिकृताः, तद्वंशजानामेव मुख्योऽधिकारः; अन्येषां तु गौणोऽधिकार इति सम्प्रदायः । उभयेषामपि दीक्षाविशेषोऽवर्जनीयः । अद्यतनः शिष्टाचारोऽप्येवमेव । आह च भगवान् व्यासः पञ्चमाम्नायभूते महाभारते—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥
सात्वतं विधिमास्थाय गीतः संकर्षणेन यः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥"
(भीष्मपर्व, ६६-३९, ४०)

इति । तथा ग्रन्थान्तरेऽपि—

"कर्मणा मनसा वाचा सम्यग्भक्तानां परमेश्वरे ।
चतुर्णामधिकारो वै प्राप्ते दीक्षाक्रमे सति ॥"
(सात्वतसंहिता, २-११)

इति । अत्र हि ब्राह्मणैरित्यादिना गोत्रप्रवरसूत्रादिविशेषानुदरेण सर्वेषां ब्राह्मणादीनामधिकारः प्रतिपादितः । परार्थयजने तु विप्राणामेवाधिकार, नान्येषामिति पाद्मसंहितायामुक्तम्; यथा—

"परार्थयजनं कुर्युर्विप्रा मुख्यानुकल्पयोः ।
नैवाधिकारिणो गौणा दीक्षासंस्कारवर्जिताः ॥"
(चर्यापादः, १-८)

इति ।

## ३. आगमानां प्रामाण्यम्

पूर्वोक्तानां त्रिविधागमानां प्रामाण्ये किं सर्वेषामप्यास्तिकाना महर्षीणामाचार्याणां चैकमत्येन सम्प्रतिपत्तिः, उत केषाचित्समस्ति विप्रतिपत्तिरिति विमर्शे, शैवागमानां शाक्तागमाना च विषये तत्तत्तन्त्रनिष्ठा एव प्रामाण्यमभ्युपगच्छन्ति, नेतरे। निखिलधर्मस्थेयतया सर्वैरप्याचार्यैः परिगृहीतो भगवान् बादरायणः शारीरके शास्त्रे पाशुपताधिकरणे "पत्युरसामञ्जस्यात्" (२-२-३५) इत्यादिना शैवागमाना श्रुतिविरोधात् अप्रामाण्यमातिष्ठतेति नैतदपह्नवार्हम्। तुल्यन्यायतया शाक्तागमानामप्यप्रामाण्यमेव तदभिमतमित्यवगम्यते। वैष्णवागमानां विषये तु वैखानसागमसम्प्रदायस्य परमभागवतवैखानसमुन्युपज्ञत्वात् तदनुसारित्वाच्च भृगुमरीच्यादिसहिताना वेदविरोधगन्धाभावात् सर्वथा सुप्रतिष्ठितमेव प्रामाण्यम्।

पाञ्चरात्रविषये तु भवति केषाचित् विप्रतिपत्ति.। तथाहि—तत्र शास्त्रे "वासुदेवात् सङ्कर्षणो नाम जीवो जायते" इति वेदविरुद्धाया जीवोत्पत्तेरभिधानात् अवैदिकमिद पाशुपतादिवत् अप्रमाणमेवेति केचिदभिप्रयन्ति। व्याचक्षते च स्वाशयानुगुणं शारीरकसूत्रस्थमुत्पत्त्यसम्भवाधिकरणम्। पाञ्चरात्रिणस्तु तस्य शास्त्रस्य वेदविरोधगन्धाभावात् सर्वतोमुख प्रामाण्यमातिष्ठन्ते। आचक्षते च—"सङ्कर्षणो नाम जीवो जायते" इति वचन न जीवोत्पत्तिप्रतिपादनपरम्; तस्मिन्नेव शास्त्रे "स ह्यनादिरनन्तश्च परमार्थेन तिष्ठति" (परमसहिता, २-१९) इत्यादिना जीवोत्पत्तिप्रतिषेधात्। किंतु जीवाभिमानिसङ्कर्षणाख्यभगवदवतारपरमिदं वचनम्। भगवदवताराश्च "अजायमानो बहुधा विजायते" (तैत्तिरीयारण्यकम्, ३-१३-१) इत्यादिश्रुतेः,

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥"
(भगवद्गीता, ४-६)

इत्यादिस्मृतेश्च सम्मता एव। अत सर्वथा प्रमाणमेवेद शास्त्रमिति। व्याकुर्वन्ति च स्वसिद्धान्तानुगुण शारीरकमुत्पत्त्यसम्भवाधिकरणम्। एव सर्वथा सुप्रतिष्ठित पाञ्चरात्रप्रामाण्यमभिसधायैव न्यायमञ्जर्यामागमप्रामाण्यप्रकरणे जयन्तभट्टोऽप्याह—

"पाञ्चरात्रेऽपि तेनैव प्रामाण्यमुपवर्णितम्।
अप्रामाण्यनिमित्तं हि नास्ति तत्रापि किंचन॥"
(आह्निकम्, ४)

इति। भामतीकारोऽपि औडुलोमिं पाञ्चरात्रमतानुसारिण मन्यते। तथा चाह, "उत्क्रमिष्यत एव भावादित्यौडुलोमिः" इति सूत्रभाष्यव्याख्यानावसरे औडुलोमिमत निरूपयन्—"यथाहुः पाञ्चरात्रिका·—

आ मुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः॥"
(१-४-२१)

इति।

## ४. पाञ्चरात्रस्य वेदमूलकत्वम्

न केवलमस्य शास्त्रस्य वेदाविरोधित्वम्, किंतु वेदमूलकत्वेन तदनुरोधित्वमपि । तथा चोक्तम्—"श्रुतिमूलमिदं शास्त्रं प्रमाणं कल्पसूत्रवत्" (मार्कण्डेयसंहिता, पृ. ६) इति । विष्णुतन्त्रे—"श्रुतिमूलानि तान्येव पाञ्चरात्राणि पङ्कज" (१-३६) इति । विष्णुसंहितायामपि—

"वेदमूलतया तन्त्रमाप्तमूलतयापि च ।
पुराणवत् प्रमाणं स्यात् तथा मन्वादिवाक्यवत् ॥"
(पटल॰, २-११)

इति ।

तथा पारमेश्वरे सनकं प्रति भगवता वासुदेवेन—

"श्रुत्वैव प्रथमं शास्त्रं रहस्याम्नायसंज्ञितम् ।
दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम् ॥
भूयः सचोदितात्तस्मात् तेन लोकहितैषिणा ।
श्रुतं विस्तरतः शास्त्रं भोगमोक्षप्रदं हि यत् ॥
सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम् ।
तत्सर्वं विदितं सम्यक् शाण्डिल्यस्य महात्मनः ॥"
(ज्ञानपादः, अ. १, श्लो. १६-१९)

इति भगवतः सङ्कर्षणात् शाण्डिल्येन रहस्याम्नायशास्त्रस्य तन्मूलकसात्वतपौष्करजयाख्यपाञ्चरात्रसंहितानां चाध्ययनं प्रतिपादितम् । रहस्याम्नायशब्देनैकायनवेद एवाभिधीयते । तथाहि ईश्वरसंहितायाम्—"आद्यमेकायनं वेद रहस्याम्नायसंज्ञितम्" (२१-५३१) इति । पारमेश्वरेऽपि—

"आदिष्टोऽहं भगवता भवदर्थं तपोनिधे ।
इत्युक्त्वाध्यापयामास वेदमेकायनाभिधम् ॥
मूलभूतस्तु महतो वेदवृक्षस्य यो महान् ।
सद्ब्रह्मवासुदेवाख्यपरतत्त्वैकसंश्रयम् ॥"
(ज्ञानपादः, अ. १, श्लो ३२, ३३)

इति सनकेन शाण्डिल्यसकाशात् एकायनवेदस्याध्ययनमुक्तम् । पुनश्च तत्रैव सनकं प्रति शाण्डिल्यः—

"साक्षात् सङ्कर्षणादव्यक्तात् प्राप्त एष महत्तरः ।
एष एकायनो वेदः प्रख्यातः सात्वतो विधिः ॥

दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धैर्निषेव्यते ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥"
(ज्ञानपाद:, अ. १, श्लो. ९६, ९७)

इति । एवं श्रीप्रश्नसंहितायाम्—

"नम: श्रीवासुदेवाय सच्चिदानन्दमूर्तये ।
एकायनत्रयीं यस्तामुपादिक्षच्छ्रियै प्रभु: ॥
नम: श्रीवत्सवासिन्यै या जगत्क्षेमहेतवे ।
एकायनमुपादिक्षदेकताय महात्मने ॥"
(अ. १, श्लो. १, २)

इति । तत्रैव चान्यत्र—

"वेदमेकायनं नाम वेदानां शिरसि स्थितम् ।
तदर्थकं पाञ्चरात्रं मोक्षदं तत्क्रियावताम् ॥
यस्मिन्नेको मोक्षमार्गो वेदे प्रोक्त: सनातन: ।
महाराधनरूपेण तस्मादेकायनं भवेत् ॥"
(अ. २, श्लो. ३८, ३९)

इति । तथा पारमेश्वरे—

"तस्मादेकायनं नाम प्रवदन्ति मनीषिण: ।
श्वेतद्वीपे पुराधीतो नारदेन सुरर्षिणा ॥"
(ज्ञानपाद:, अ. १, श्लो. ९८)

इति नारदेनैकायनाध्ययनं प्रतिपादितम् । तथा रत्नत्रयमिति प्रसिद्धासु सात्वतपौष्करजयाख्यसहितासु भगवतो वासुदेवस्याराधनविधौ पठनीयेषु वेदेषु ऋग्यजु:सामभि: सार्धमेकायनस्यापि पाठ: प्रतिपाद्यते । न केवलं पाञ्चरात्रग्रन्थेष्वेवैकायनवेदस्य नाम्ना निर्देश:, किंतु त्रय्यन्तेष्वपि । यथा छान्दोग्ये भूमविद्याप्रस्तावे सनत्कुमारं प्रति नारदवचनम्—"ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्याम्" (७-१) इत्यादि । तथा काश्मीरकेणोत्पलाचार्येण स्वकीयस्पन्दप्रदीपिकायां पाञ्चरात्रश्रुतिरिति पाञ्चरात्रोपनिषदिति च निर्दिश्य कतिपयवाक्यान्युदाहृतानि । तानि च एकायनवेदस्यान्येव भवितुमर्हन्ति । तदेवमुदाहृतैस्तत्तत्स्ववाक्यैरप्येकायनवेदस्य चिरन्तनी प्रसिद्धिरवगता । अध्येतृपारंपर्यविच्छेदेनाधुना तस्य विलोप: स्मरणीयतादशा च समापन्नेति नेदमस्यैव, किंतु बहूनामपि वेदशाखानामिति प्रामाणिक: पन्था: । काश्मीरागमप्रामाण्ये एकायनवेदस्यापौरुषेयत्वं प्रसाधितमिति यामुनाचार्यैरागमप्रामाण्ये उक्तम् । भोजराजवरुदेवाचार्यवासुदेवस्वाम्यादिभिरपीमं

वेदमागमधिकृत्य ग्रन्था प्रणीता इति पाञ्चरात्ररक्षायामुक्तम् । परन्तु नेते ग्रन्था अधुनोपलभ्यन्ते । कण्वशाखामहिमसंग्रहाख्ये ग्रन्थे नागेशेन एकायनवेदो मूलशाखेति प्रथिता कण्वशाखेति वर्णितम्, यथा—

"इयं शुक्लयजुः शाखा प्रथमेत्यभिधीयते ।
मूलशाखेति चाप्युक्ता तथा चैकायनीति च ॥
अयातयामयजुषा तथा मोक्षैकसाधिका ।
इत्याद्यनेकनामानि सन्त्यस्यास्तत्र तत्र वै ॥
तत्तन्नामनिमित्तानि युक्तियुक्तानि भूरिशः ।
कथितानि च माहात्म्ये तत्तदाख्यासु शोभते ॥
भारते शान्तिपर्वाख्ये त्रिधा प्रोक्तोऽयमुत्तम ।
समाश्वसभवाख्येषु पर्वस्वपि तथादित ॥"

इत्यादि । ईश्वरसंहितायामपि—

"काण्वीं शाखामधीयानान् वेदवेदान्तपारगान् ।
संस्कृत्य दीक्षया सम्यक् सात्वतायुक्तमार्गत ॥"
(२१ ५५४)

इत्युक्तम् ।

वेदमूलकत्वाविशेषेऽपि मन्वादिस्मृतीना कर्मकाण्डोपबृंहणरूपत्व, तन्त्राणा तु ब्रह्मकाण्डोपबृंहणरूपत्वमिति विशेष । एव पाञ्चरात्रागमाणा वैदिकत्वेऽपि, पूर्वनिर्दिष्टेन "ब्राह्मणै क्षत्रियैर्वैश्यै" इत्यादिप्रमाणेन पाञ्चरात्रप्रक्रियया शूद्रस्याप्यर्चनाविधिस्तु न विरुध्यते । अनया विशेषस्मृत्या तस्यापि वासुदेवार्चनारूपकर्मविशेषेऽधिकारोऽङ्गीकरणीय । कथमन्यथा "हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहीति राजन्यस्य, हविष्कृदाद्रवेति वैश्यस्य, हविष्कृदाधावेति शूद्रस्य" (आपस्तम्बश्रौतसूत्रम्, १-१९ ९) इति श्रौते कर्मणि शूद्रस्याधिकार उच्यमान सगच्छताम्? कथ वा "सत्य वद, धर्मं चर, मातृदेवो भव" (तैत्तिरीयोपनिषत्, १-२) इत्यादिभिर्विहिताना सत्यवदनादीना शूद्रधर्मत्वमपि । सत्यवदनादीना सामान्यधर्मत्वेन वैदिकमन्त्रोच्चारणानपेक्षत्वेन च न दोष इति चेत्, तुल्यमत्रापि । भगवत्पूजा हि सर्वसाधारणी पाञ्चरात्रोक्ततान्त्रिकमन्त्रैरपि कर्तुं शक्यते । अयमत्र विशेषोऽवधारणीय —पाञ्चरात्रशास्त्रेषु भगवदर्चनादिविधौ वैदिकास्तान्त्रिकाश्च मन्त्रा उपयोज्यतया विहिता । तत्र वैदिकमन्त्रेषु त्रैवर्णिकानामेवाधिकार, तान्त्रिकेषु तु त्रैवर्णिकानामत्रैवर्णिकानामप्यधिकार इति । तस्मात् श्रुतिमूलकत्वात् पाञ्चरात्रागमाणा सर्वथा प्रामाण्यमिति सिद्धम् ।

किंचेश्वरवक्तृकत्वात् वेदतुल्य स्वत प्रामाण्यमपि तेषाम् । तथाहि महाभारते "सांख्यस्य वक्ता कपिल" इत्यारभ्य "पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायण स्वयम्" (शान्तिपर्व, अ ३५९, श्लो ६५-६८) इति शास्त्रमिदं भगवता नारायणेनाविष्कृतमित्युक्तम् । एव तत्रैव,

"इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
वेदान्तेषु यथासारं संगृह्य भगवान् हरिः ।
भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम् ॥"
(शान्तिपर्वे, अ. ३४८, श्लो. ६३, ६४)

इत्युक्तम् । अतो भगवन्मुखारविन्दोद्भूतत्वात् वेदानामिवास्य शास्त्रस्य स्वतःप्रामाण्यमपि सिद्धम् । पाञ्चरात्रशास्त्रस्य वेदतुल्यप्रामाण्यमागमप्रामाण्ये न्यायपरिशुद्धौ श्रुतप्रकाशिकादौ च स्पष्टमुपपादितम् । पाञ्चरात्रशास्त्रोक्ताः पञ्चसंस्कारादयः स्वस्वगृह्योक्तसंस्काराविरोधेनैवाचर्यन्त इति पाञ्चरात्रिणां स्वगृह्योक्तकर्मविलोपशङ्काया उत्सूत्रत्वशङ्कायाश्च नावकाशः ।

५. वैखानसपाञ्चरात्रसंहितासु परस्परनिन्दावाक्यानि

तदेवं वैष्णवागमाः वैखानसपाञ्चरात्रसमयभेदेन द्विविधा अपि प्रामाणिका एवेति सिद्धान्तः । एवं स्थिते यान्युभयत्रापि परस्परनिन्दापराणि कानिचित् वचनानि, तानि 'न हि निन्दा' न्यायेन स्वस्वागमप्राशस्त्यपराणीति मन्तव्यम् । तथाहि वैखानसे मरीचिप्रोक्तायामानन्दसंहितायाम्—

"वैखानसं पाञ्चरात्रं वैदिकं तान्त्रिकं क्रमात् ।
तयोर्वैखानसं श्रेष्ठमैहिकामुष्मिकप्रदम् ॥
वैखानसेन तन्त्रेण देवदेवस्य शार्ङ्गिणः ।
अर्चनं सर्वशान्त्यर्थं राजराष्ट्रविवर्धनम् ।
तान्त्रिकं पूजनं चैव राजराष्ट्रविनाशनम् ॥"
(अ. १२, श्लो. १-४)

इति पाञ्चरात्रनिन्दा क्रियते । तथा पाञ्चरात्रेऽपि—

"अश्रीकरमसौम्यं च वैखानसमसात्त्विकम् ।
तद्विधानं परित्यज्य पाञ्चरात्रेण पूजयेत् ॥"
(तन्त्रसारसमुच्चयस्थमिति पाञ्चरात्ररक्षायामुद्धृतम्)

इति वैखानसनिन्दा क्रियते । एतादृशवाक्यानि उदितानुदितहोमनिन्दावत् स्वस्वशास्त्रप्रशंसापराणीति तान्त्रिकाणां पन्थाः । एतादृशानि निन्दावचनानि न केवलं स्मृतिषु, स्वतःप्रमाणतया सर्वाभ्युपगतेषु वेदेष्वपि दृश्यन्ते ; यथा ऐतरेयारण्यके—"ऋगाथा कुम्भ्या तन्मितं यजुर्निगदो वृथा वाक् तद्रमितम्" (२-३-६-८) इति । अत्र चेत्थं सायणीयविवरणम्—"अर्धपादव्यवस्थोपेतो मन्त्रः ऋक्; यथा 'अग्निमीळे पुरोहितम्' इत्यादिका ।

तस्यामेव सर्वलोकप्रसिद्धार्थप्रतिपादिका 'प्रात प्रातरनृत ते वदन्ति' इत्यादिका गाथा। 'ब्रह्मचार्यसि, अपोशान' इत्याद्याचारशिक्षारूपा कुम्ब्या। तदेतत्त्रय छन्दोरूपेण नियतपरिमाणत्वात् मितमित्युच्यते। 'इषे त्वा' इत्यादिक मन्त्रजात यजु। तद्विरोप 'अग्ने महा२ असि' इत्यादिर्निगद। ब्राह्मणगता ये अर्थवादादय सर्वास्ता वृथा वाच। एतत्त्रयमप्यनियतपरिमाणत्वात् अमितमित्युच्यते" इति।

वस्तुतत्त्वे विचार्यमाणे वैखानसपाञ्चरात्रयो परस्पर विषयेषु सवादो दृश्यते। उभयमपि विष्णुपारम्यपरमेव। यथा पाञ्चरात्रे वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा भगवतो व्यूहभेदा, तथा वैखानसेऽपि पुरुषसत्याच्युतानिरुद्धाख्या व्यूहभेदा प्रतिपाद्यन्ते। भगवदाराधनप्रक्रियायामपि श्रीरङ्गहस्तिशैलादिषु पाञ्चरात्रविधया वेंकटाद्र्यादिषु वैखानसविधया भगवानाराध्यत इति, स चोभयविध क्रम सर्वास्तिकसप्रतिपन्न इति चोभयो समप्राधान्यमवगमयति। परव्यूहविभवार्चान्तर्यामिविभागोऽप्युभयत्र समान।

## ६ पाञ्चरात्रशब्दार्थ

तदिदमेकायनश्रुतिमूलक शास्त्र पाञ्चरात्रमिति व्यवह्रियते। पाञ्चरात्रशब्दार्थस्तु बहुत्र बहुधा कथ्यते, तथापि, ईश्वरसहिताया—

"पञ्चायुधाशास्ते पञ्च शाण्डिल्यश्चौपगायन।
मौञ्जायन कौशिकश्च भारद्वाजश्च योगिन॥"

इत्युपक्रम्य,

"पञ्चापि पृथगेकैकदिवारात्र जगत्प्रभु।
अध्यापयामास यतस्तदेतन्मुनिपुगवा।
शास्त्र सर्वजनैर्लोके पञ्चरात्रमितीर्यते॥"
(अ २१, श्लो. ५१९ ५३३)

इत्युक्तरीत्या पञ्चस्वहोरात्रेष्वध्यापितत्वात् अस्य शास्त्रस्य पाञ्चरात्रसज्ञेति युक्त वक्तुम्। तथा मार्कण्डेयसहितायामपि—

"सार्धकोटिप्रमाणेन कथित तस्य विष्णुना।
रात्रिभि पञ्चभि सर्व पञ्चरात्रमत स्मृतम्॥"
(पृ ४)

इत्युक्तम्।

अथवा शास्त्रस्यास्य पञ्चकालप्रक्रियाप्रतिपादनमसाधारणो विशेष इति सर्वसप्रतिपन्नम्। तदनुरोधेनाहोरात्रस्यैकस्याभिगमनोपादानेज्यास्वाध्याययोगाख्यभगवदाराधनार्हतया पञ्चधा विभागमधिकृत्य कृतत्वात् पाञ्चरात्रसज्ञा युक्तेति शक्यते वक्तुम्। उभयत्रापि पक्षे रात्रिशब्द अहोरात्रपर इति समानम्। द्वितीयं च प्रथमाचार्यश्रीसूक्तिरप्युपोद्बलयति, यथा—

"पञ्चकालव्यवस्थित्यै वेंकटेशविपश्चिता ।
श्रीपाञ्चरात्रसिद्धान्तव्यवस्थेय समर्थिता ॥"
(पाञ्चरात्ररक्षा, पृ. ४४)

इति । भारद्वाजसहिताया तु—

"प्रथम ब्रह्मरात्र तु द्वितीय शिवरात्रकम् ।
तृतीयमिन्द्ररात्र तु चतुर्थ नागरात्रकम् ॥
पञ्चममृषिरात्र तु पञ्चरात्रमिति स्मृतम् ।
एव जातमृषिश्रेष्ठ पञ्चरात्र पुरा युगे ॥"
(२ १२, १३)

इत्युक्तम् । नागरात्र विनान्यानि चत्वारि सनत्कुमारसहिताया पठितानि ।

## ७ पाञ्चरात्रशास्त्रविभाग

तच्चेद शास्त्र दिव्यमुनिभाषितमानुषभेदेन त्रिविधम् । तत्र भगवन्नारायणेन साक्षात्प्रवर्तित सात्वत-पौष्करजयाख्यादि दिव्यम् । तदन्यै ब्रह्मादिभिर्भाषितम् ईश्वरपारमेश्वरभारद्वाजादि मुनिभाषितम् । तदन्यैराप्ततमैर्मनुजैरुक्त मानुषमिति भिदा । तदिद त्रिविधमपि शास्त्र निरपपदेन दिव्यशास्त्रनाम्ना सिद्धान्तनाम्ना च तत्र तत्र व्यवह्रियते, यथा—

"दिव्यशास्त्राण्यधीयीत निगमांश्चैव वैदिकान् ।
सर्वाननुचरेत् सम्यक् सिद्धान्तानात्मसिद्धये ॥"
(ल त, २८, २९)

इति । पुनश्चेद मन्त्रागमतन्त्रतन्त्रान्तरभेदेन चतुर्धा भिद्यते । तत्र चाराधनसमये भगवद्वासुदेवादिव्यूहगुणपरिजनाद्यनुसधानभेद एव निदानम् ।

## ८ भागवतसात्वतादिनिर्देशविचार

पाञ्चरात्रसमयनिष्ठाश्च भागवता इति, सात्वता इति, एकान्तिन इति, परमैकान्तिन इति च तत्र तत्र शास्त्रेषु व्यवह्रियन्ते । तत्र भागवतशब्दार्थ उक्तो महाभारते, यथा—

"द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञ स वै भागवत स्मृत ॥"
(आश्वमेधिकपर्व, ११८-३३)

इति । सच्छब्देन वासुदेवाख्य पर ब्रह्मोच्यते । आराध्यत्वेन तद्वन्त सत्वन्त । त एव सात्वता । पाञ्चरात्रशास्त्रे षाड्गुण्य, चातुर्व्यूहमित्यादिरूपेण स्वार्थिकतद्धितान्ता शब्दा बहुश प्रयुज्यन्ते । तदेवानुसृत्य सत्वन्त इत्यर्थे सात्वता इति प्रयोगोऽपि विज्ञेय । वासुदेवाराधका इति तदर्थ । एतादृशान् प्रयोगानभिप्रेत्यैव भगवान् पतञ्जलि "प्रियतद्धिता दाक्षिणात्या" (महाभाष्यम्, १-१-१) इत्याह । भगवति वासुदेवे एकस्मिन्नेव "त्वमेव माता च पिता त्वमेव" (गद्यत्रयम्, १) इत्याद्युक्तरीत्या सर्वविधोऽन्तो निश्चयो येषा ते एकान्तिन । ये तु भगवन्तमुपायत्वेनोपेयत्वेन चाध्यवस्यन्ति, त एव परमत्वविशेषिता एकान्तिन परमैकान्तिनो भवन्ति ।

## ९ पाञ्चरात्रशास्त्रे पादविभाग

एतच्छास्त्रग्रन्थाश्च सहिता इति उपनिषद इति तन्त्राणीति च व्यवह्रियन्ते । तत्र केचन विस्तृता पाद्मसहितादय ज्ञानयोगक्रियाचर्याख्यपादे चतुष्पादा भवन्ति । सक्षिप्तास्तु पादविभागमन्तरैव तद्गतानर्थान् प्रतिपादयन्ति । तत्र ज्ञानपादे वासुदेवादिचतुर्व्यूहाना व्यूहान्तरादीना च स्वरूप तेषा व्यापार महिमेत्यादय, योगपादे तेषामुपासनाप्रकारा, क्रियापादे तेषामेवाल्यार्चाविग्रहादिनिर्माणप्रकारा, चर्यापादे तेषामाराधनविषयश्च प्रतिपाद्यन्ते ।

## १० पाञ्चरात्रसहितासख्यापरिगणनम्

एतच्छास्त्रसम्बन्धिन सहिताभेदाश्च पाद्ममार्कण्डेयकपिञ्जलभारद्वाजहयशीर्षसहिताविष्णुतन्त्रादिषु बहुधा नामतो निर्दिश्यन्ते । तत सगृह्यात्र तन्नामानि परिगण्यन्ते, यथा—

| | | |
|---|---|---|
| १. अगस्त्यसहिता | १३ ईश्वरसहिता | २५ कामतन्त्रम् |
| २ अङ्गिर सहिता | १४ उत्तरगार्ग्यम् | २६ कालिकतन्त्रम् |
| ३ अच्युतसहिता | १५ उपेन्द्रसहिता | २७ काश्यपसहिता |
| ४ अत्रिसहिता | १६ उमासहिता | २८ कुबेरतन्त्रम् |
| ५ अधोक्षजसहिता | १७ उमामहेश्वरसहिता | २९ कुमारतन्त्रम् |
| ६ अनन्तसहिता | १८ उशन सहिता | ३० कूर्मतन्त्रम् |
| ७ अनिरुद्धसहिता | १९ ऐन्द्रसहिता | ३१ कृष्णसहिता |
| ८ अम्बरसहिता | २० औपगायनसहिता | ३२ केशवतन्त्रम् |
| ९. अरुणसहिता | २१ कण्वसहिता | ३३ क्रतुतन्त्रम् |
| १०. अहिर्बुध्न्यसहिता | २२ कपिञ्जलसहिता | ३४ गजेन्द्रसहिता |
| ११ आग्नेयसहिता | २३ कपिलसहिता | ३५ गणेशसहिता |
| १२ आनन्दसहिता | २४. कात्यायनसहिता | ३६ गरुडध्वजसहिता |

३७. गरुडसंहिता
३८. गान्धर्वतन्त्रम्
३९. गार्ग्यसंहिता
४०. गालवसंहिता
४१ गोविन्दसंहिता
४२. गौतमीयतन्त्रम्
४३. चतुर्मूर्तिसंहिता
४४. जनार्दनसंहिता
४५ जयाख्यसंहिता
४६. जयोत्तरसंहिता
४७. जाबालसंहिता
४८. जामदग्न्यसंहिता
४९. जैमिनीयसंहिता
५०. ज्ञानार्णवसंहिता
५१. तत्त्वसागरसंहिता
५२. तार्क्ष्यसंहिता
(प्रायशः गरुडसंहिताया विहगेन्द्रसंहिताया वैतत् नामान्तरं स्यात्)
५३. त्रिपुष्करसंहिता
५४. त्रिविक्रमसंहिता
५५. त्रैलोक्यमोहनतन्त्रम्
५६. त्रैलोक्यविजयसंहिता
५७. दक्षसंहिता
५८. दत्तात्रेयसंहिता
५९. दधीचिसंहिता
६० दामोदरसंहिता
६१. दुर्गातन्त्रम्
६२. दुर्वासःसंहिता
६३. देवलसंहिता
६४. धनंजयसंहिता
६५. ध्रुवतन्त्रम्
६६. नलकूबरसंहिता
६७. नारदीयसंहिता
६८. नारदोत्तरसंहिता
६९. नारसिंहसंहिता
७०. नारायणतन्त्रम्
७१. नैर्ऋततन्त्रम्
७२. पञ्चतत्त्वसंहिता
७३. पञ्चप्रश्नसंहिता
७४. पद्मनाभसंहिता
७५. पद्मोद्भवतन्त्रम्
७६. परमपुरुषसंहिता
७७. परमसंहिता
७८. पाणिनीयसंहिता
७९. पाद्मसंहिता
८०. पारमेश्वरसंहिता
८१. पाराशर्यसंहिता
८२. पारिषदसंहिता
८३ पिङ्गलसंहिता
८४. पुण्डरीकाक्षसंहिता
८५. पुरुषसंहिता
८६. पुरुषोत्तमसंहिता
८७. पुलस्त्यसंहिता
८८. पुलहसंहिता
८९. पुष्कलसंहिता
९०. पुष्टितन्त्रम्
९१. पैङ्गलसंहिता
९२. पैप्पलसंहिता
९३. पौष्करसंहिता
९४. प्रद्युम्नसंहिता
९५. प्रह्लादसंहिता
९६. प्राचेतससंहिता
९७. बलभद्रसंहिता
९८. बृहस्पतिसंहिता
९९. बोधायनसंहिता
१००. ब्रह्मसंहिता
१०१. ब्रह्माण्डसंहिता
१०२. भागवतसंहिता
१०३. भारद्वाजसंहिता
१०४ भार्गवसंहिता
१०५. भूतन्त्रम्
१०६ भूमिसंहिता
१०७. मत्स्यतन्त्रम्
१०८. *मधुसूदनतन्त्रम्*
१०९ मनुसंहिता
११० मरीचिसंहिता
(मरीचिपटलात् भिन्ना स्यात्)
१११ महाज्ञानसंहिता
११२ महातन्त्रम्
११३ महापुरुषतन्त्रम्
११४ महालक्ष्मीतन्त्रम्
११५. महासनत्कुमारसंहिता
११६ महीप्रश्नसंहिता
११७ महेन्द्रतन्त्रम्
११८ माङ्गलिकतन्त्रम्
११९. माधवसंहिता
१२० मायातन्त्रम्
१२१ मेदिनीपतिसंहिता
१२२ मायावैभवतन्त्रम्
१२३. मार्कण्डेयसंहिता
१२४ मार्कण्डेयसप्रश्नसंहिता
१२५. माहेश्वरसंहिता
१२६. मिहिरसंहिता
१२७. मुकुन्दसंहिता
१२८ मूलसंहिता

१२९. मेरुसंहिता
१३०. मैत्रेयसंहिता
१३१. मौद्गलसंहिता
१३२. यज्ञमूर्तितन्त्रम्
१३३. यमसंहिता
१३४. याज्ञवल्क्यतन्त्रम्
१३५. योगरहस्यतन्त्रम्
१३६. योगहृदयतन्त्रम्
१३७. राघवसंहिता
१३८. रोमशसंहिता
१३९. लक्ष्मीतन्त्रम्
१४०. लक्ष्मीतिलकम्
१४१. लक्ष्मीनारायणतन्त्रम्
१४२. लक्ष्मीपतितन्त्रम्
१४३. लाङ्गलसंहिता
१४४. लैङ्गतन्त्रम्
१४५. वसुतन्त्रम्
१४६. वागीशतन्त्रम्
१४७. वामदेवसंहिता
१४८. वामनसंहिता
१४९. वायवीयसंहिता
१५०. वाराहसंहिता
१५१. वारुणतन्त्रम्
१५२. वाल्मीकितन्त्रम्
१५३. वासिष्ठसंहिता
१५४. वासुदेवसंहिता
१५५. विप्रवसंहिता
१५६. विरिञ्चिसंहिता
१५७ विश्वसंहिता
१५८. विश्वामित्रसंहिता
१५९. विष्णुनरवसंहिता
१६०. विष्णुतन्त्रम्
१६१. विष्णुतिलकम्
१६२. विष्णुयोगतन्त्रम्
१६३. विष्णुरहस्यम्
१६४. विष्णुवैभवम्
१६५. विष्णुसम्भवम्
१६६. विष्णुसंहिता
१६७. विष्णुसद्भावतन्त्रम्
१६८. विष्णुसारतन्त्रम्
१६९. विष्णुसिद्धान्ततन्त्रम्
१७०. विष्वक्सेनसंहिता
१७१ विहगेन्द्रसंहिता
१७२. वीरसंहिता
१७३. वैकुण्ठसंहिता
१७४. वैजयन्तीसंहिता
१७५. वैनतेयसंहिता
१७६. वैभवसंहिता
१७७ वैहायससंहिता
१७८. व्याससंहिता
१७९. शक्रसंहिता
१८०. शाकटायनसंहिता
१८१. शाकलसंहिता
१८२. शाण्डिल्यसंहिता
१८३. शातातपसंहिता
१८४ शान्तितन्त्रम्
१८५. शाबरतन्त्रम्
१८६. शाश्वतसंहिता
१८७. शुकप्रश्नसंहिता
१८८. शुकरुद्रसंहिता
१८९. शुक्रसंहिता
१९०. शेषसंहिता
१९१. शौनकीयसंहिता
१९२ श्रीकरसंहिता
१९३. श्रीतन्त्रम्
१९४. श्रीधरसंहिता
१९५. श्रीनिवासतन्त्रम्
१९६. श्रीप्रश्नसंहिता
१९७. श्रीवल्लभतन्त्रम्
१९८. श्वेतकेतुतन्त्रम्
१९९. सङ्कर्षणसंहिता
२०० संवर्तसंहिता
२०१. सत्यसंहिता
२०२ सदाविष्णुसंहिता
२०३. सनकसंहिता
२०४ सनत्कुमारसंहिता
२०५ सनन्दनसंहिता
२०६ सर्वमङ्गलसंहिता
२०७. साङ्ख्यायनतन्त्रम्
२०८ सात्वतसंहिता
२०९ सारस्वततन्त्रम्
२१० सुबोधकतन्त्रम्
२११. सौम्यतन्त्रम्
२१२. सौरसंहिता
२१३. स्कन्दसंहिता
२१४ स्वायम्भुवतन्त्रम्
२१५ हयग्रीवसंहिता
२१६. हरितन्त्रम्
२१७ हारीतसंहिता
२१८. हिरण्यगर्भसंहिता
२१९. हृषीकेशसंहिता

इतोऽन्येऽपि केचन ग्रन्था पाञ्चरात्ररक्षादिषु निर्दिश्यन्ते यथा—२२० कालोत्तरसहिता। २२१ चित्रशिखण्डिसहिता। २२२ जयत्सेनसहिता। २२३ तेजोद्रविणसहिता। २२४ सात्यकितन्त्रम्। २२५. सौमन्तवसहिता। अत्र पाञ्चरात्रोपोद्घाताख्ये* ग्रन्थे पूडर्महाशयैर्निर्दिष्ट पाञ्चरात्रग्रन्थपरिगणनमपि द्रष्टव्यम्।

## ११ पाञ्चरात्रसम्प्रदायकाल

यद्यपि सामान्यत एव विनाना ग्रन्थाना पौर्वापर्यपर्यालोचने कालनिष्कर्षे च प्राचीना आचार्या न तथा श्रद्धालव, यथाधुनिका विमर्शकास्तत्र कुतूहलिन, तथाप्याधुनिकरीतिमनुसृत्य पाञ्चरात्रविषये किंचिल्लिख्यते। शास्त्रमेतत् महाभारते बहुत्र प्रशसितम्, विशिष्य च शान्तिपर्वणि मोक्षधर्मे कतिपयैरध्यायैरेतन्महिमा प्रतिपादित। तत्रत्या भगवद्गीता वासुदेवोपास्तिपरेति च सार्वजनीनमेतत्। एव श्रीविष्णुपुराणे वराहपुराणे चास्य शास्त्रस्यार्थतो नामतश्च निर्देश कृत। किंच वेदेषु प्राथमिकत्तयाधुनिकविमर्शकै परिगण्यमाने ऋग्वेदे पठ्यमान पुरुषसूक्त पाञ्चरात्रसमयानुसारीति निर्विवादम्। अतश्च ऋग्वेदकालात् प्राचीनोऽय समयाचार इति सर्वथाभ्युपगन्तव्यम्। वेदाना कालनिष्कर्षश्चाधुनिकविमर्शकप्रतिभाकाष्ठामतिक्रम्य वरीवर्तीति सर्वथानादिरय समयाचार इत्यभ्युपगम एव निरवद्य पन्था। ऋग्वेदे पुरुषसूक्तभागो नूलतया सयोजित इति आधुनिकविमर्शकाना वादस्तु अभ्युपगमार्हो वा न वा, इति त्वन्यदेतत्। सर्वथा पुरुषसूक्तात् प्राचीन पाञ्चरात्रसमय इत्यत्र न सदेह। अथाप्याधुनिकविमर्शकाना सतोषाय य कश्चन कालो निर्देष्टव्य इति यदि वाचकाना तीव्रोऽभिलाष, तदा भगवता पाणिनिनाष्टाध्याय्या "वासुदेवार्जुनाभ्या वुन्" (४-३-९८) इति भगवद्वासुदेवपूजोल्लेखात् पाणिनिकालात् पूर्वमेवाय समयाचारोऽवततेति विज्ञायते। वासुदेव इति "सज्ञैषा भगवत" इत्यत्रत्य महाभाष्यम्। वासुदेवपूजा पाञ्चरात्रोपज्ञमिति निर्विवादम्। पाणिनिकालश्च क्रिस्तो पूर्वं चतुर्थशतकमिति विमर्शकाना सरणि। किंच भण्डार्करमहाशयै स्वकीये शैववैष्णवसमयाचारविचारपरे लेखे क्रिस्तो पूर्वं चतुर्थे शतके प्रवर्तितेषु राजकीयशासनलेखेषु वासुदेवसकर्षणादिनामनिर्देशदर्शनात् पाञ्चरात्रसमयस्तत पुरातन इति निर्णीतम्। द्रमिडदेशेषु बहो कालात् पूर्वं दिव्यसूरिनाम्ना प्रथितैर्भक्ताग्रेसरै गीतासु द्रमिडगाथासु बह्व्यो भगवद्व्यूहविषया दृश्यन्ते। तेषा कालश्चेतोऽध्यर्धसहस्रसवत्सरेभ्य पूर्वमिति निश्चिन्वन्ति चरित्रविमर्शका। अतो विज्ञायते क्रिस्तोश्चतुर्थशतकात् पूर्वमेवाय समयाचारो लब्धप्रतिष्ठ समभवदिति।

## १२ स्वार्थपरार्थपूजाविभाग·

भगवदर्चन चेद स्वार्थं परार्थं चेति द्विविधम्। तत्र स्वार्थं नामाराधकेन स्वस्य नित्यकर्मस्वन्यतमतयावश्यानुष्ठेयत्वेन भगवत्सुरेण्यागमसिद्धयर्थमनन्यप्रयोजनतया क्रियमाणमर्चनम्। परार्थं नाम ग्रामादिषु

* Introduction to the Pāñcarātra and the Ahirbudhnya Samhitā

प्रतिष्ठिते देवालये ग्रामादिवासिनां सर्वेषां योगक्षेमकृते क्रियमाणमर्चनम्। तथा चोक्तम्, "स्वार्थं गृहार्चने प्रोक्तमालयेषु परार्थकम्" (आनन्दसंहिता, ३-२५) इति। तत्र स्वार्थयजने पञ्चसंस्कारास्यकर्मणि क्रियमाणे यागादिदीक्षोपदेशोऽधिकारमापादयति। परार्थयजने तु पाञ्चरात्रशास्त्रोक्तो विस्तृतो दीक्षाविशेष एवाधिकारमापादयति। उभयत्रापि भगवदाराधनाधिकारसिद्धये दीक्षाविशेष आवश्यकः। गृह्योक्तोपनयनमात्रेण तु ब्राह्मणादीनां भगवदाराधनाधिकारसिद्धिर्न सम्भवति; किं तु तदर्थदीक्षाविशेषेणैव। तदुक्तं पाद्मे—

"यथैव दीक्षणीयेष्ट्या जायन्ते ब्राह्मणादयः।
तथैव दीक्षाविधिना जायमाना यथोदिताः।
पूजाविधौ भगवतः प्रकल्पन्तेऽधिकारिणः॥"
(चर्यापादः, १-९, १०)

इति। यथा ब्राह्मणस्यैव सतः दीक्षणीयेष्टयैव श्रौतकर्मविशेषेऽधिकारः, तथात्रापीत्यर्थः।

## १३. परब्रह्मस्वरूपम्

उपनिषद इव पाञ्चरात्रशास्त्राण्यपि परं ब्रह्म निखिलजगदुदयविभवलयलीलमेकमद्वितीयमपरिच्छिन्न ज्ञानानन्दैकस्वरूपं समामनन्ति; परंतु भगवान् वासुदेवः श्रीमन्नारायण एव परं ब्रह्मेति सुस्पष्टं प्रथयन्ति। यथा—

"स वासुदेवो भगवान् क्षेत्रज्ञः परमो मतः।
विष्णुर्नारायणो विश्वो विश्वरूप इतीर्यते॥"

इत्युपक्रम्य,

"सर्वतः शान्त एवासौ निर्विकारः सनातनः।
अनन्तो देशकालादिपरिच्छेदविवर्जितः॥
महाविभूतिरित्युक्तो व्याप्तिः सा महती यतः।
तद् ब्रह्म परमं धाम निरालम्बनभावनम्॥
निस्तरङ्गामृताम्भोधिकल्पं षाड्गुण्यमुज्ज्वलम्।
एकं तच्चिद्घनं शान्तमुदयास्तमयोज्झितम्।
अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते॥"
(ल. त., अ. २, श्लो. ९-११)

इति। यद्यप्यत्र लक्ष्मीतन्त्रे परब्रह्मशक्तिभूतायाः श्रिय एव जगत्सृष्ट्यादिकर्तृत्वं प्रतिपादितम्, तथापि ज्योत्स्नेव चन्द्रमसः प्रभेव च भास्करस्य श्रीर्भगवतो वासुदेवात् पृथग्भावानर्हा नित्यसंबद्धा च वर्तत इति तत्स्वरूपनिरूपक-धर्मभूतायां तस्यामुच्यमानं सर्गादिकर्तृत्वं तद्धर्मिणि भगवत्येव पर्यवस्यति। उक्तं च श्रिया स्वयमेव—

"व्यापारस्तस्य देवस्य साहमस्मि न संशयः ।
मया कृतं हि यत्कर्म तेन तत्कृतमुच्यते ।
अहं हि तस्य देवस्य स्मृता व्याप्रियमाणता ॥"
(ल. त., अ. ११, श्लो. ६, ७)

इति । एवमेवोपनिषत्सु प्रतिपादितं भगवतः सृष्ट्यादिकर्तृत्वं श्रीविशिष्टस्यैव तस्येति तत् श्रियामप्यन्वेति । किं बहुना? ब्रह्मशब्दः श्रीविशिष्टमेव परतत्त्वमभिधत्ते, न तु निःश्रीकमिति पाञ्चरात्रशास्त्रसिद्धान्तः । तथा चोक्तम्—

"भवन्नारायणो देवो भावो लक्ष्मीरहं परा ।
लक्ष्मीनारायणाख्यातमतो ब्रह्म सनातनम् ॥"
(ल. त., २-१५)

इति,

"संकर्षणादयो व्यूहाः साहंताः प्राङ् निरूपिताः ।
त्रयश्च चातुरात्म्य तच्चत्वारोऽमी सुरेश्वर ।
एतावद्भगवद्वाच्यं निस्तत्त्वं तत्त्वमुत्तमम् ॥"
(ल. त., अ. ७, श्लो. ७, ८)

इति च ।

युक्तं चैतत् । "सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः । बृहत्त्वं स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः" (श्रीभाष्यम् , १-१-१) इति निर्वचनानुसारेण ब्रह्मणि गुणतोऽपि बृहत्त्वमुपपादनीयम् । श्रीश्च भगवतो गुणभूता । यदाह—"अहं नारायणी नाम भावोऽहं तादृशो हरेः" (ल. त., ४-१) इति । "भवन्नारायणो देवो भावो लक्ष्मीरहं परा" (ल. त., २-१५) इति च । धर्मधर्मिणोरपृथग्भावसंबन्धेन संबद्धत्वे धर्ममन्तरा न धर्मिसिद्धिः, धर्मिणमन्तरा च न धर्मसिद्धिरिति सिद्धान्तः । तथा चोक्तम्—

"लक्ष्मीनारायणाख्यातमतो ब्रह्म सनातनम् ।
अहंतया समाक्रान्तो ह्यहमर्थः प्रसिध्यति ॥
अहमर्थसमुत्था च साहता परिकीर्तिता ।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ॥
तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः ।
अहंतया विनाहं हि निरुपाख्यो न सिध्यति ।
अहमर्थं विनाहंता निराधारा न सिध्यति ॥"
(ल. त., अ. २, श्लो. १६-१९)

इति ।

अत्रेदमवधेयम्—श्रियो भगवच्छक्तित्वेन निर्देशस्थलेषु शक्तिशब्देनाद्रव्यभूत कार्यकरणसामर्थ्यापरपर्याय गुणमात्र न विवक्षितम्, किंतु तदधिष्ठात्री देवता। सा च ब्रह्मणो धर्मस्थानीया, यया ब्रह्म धर्मि भवति। न हि धर्मेण सर्वत्राद्रव्येणेव भाव्यमिति नियम। आह चाहिर्बुध्न्य—

"विष्णो सर्वाङ्गसपूर्णा भावाभावानुगामिनी।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसमता॥
देवाच्छक्तिमतो भिन्ना ब्रह्मण• परमेष्ठिन।
एष चेषा च शास्त्रेषु धर्मधर्मिस्वभावत।
भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ॥"

(अ ३, श्लो २४ २६)

इति। किच श्रुतौ ब्रह्मण सकल्पपूर्वकबहुभवनमुच्यमान यथाश्रुते न सगच्छते। मृत्पिण्डस्य घटकरकादिबहुभवनमिव ब्रह्मणोऽपि तदङ्गीकारे ब्रह्मणोऽविकारत्वश्रुतिर्व्याकुप्येत्। अत साक्षात् विकारस्तद्धर्मभूतयोश्चिदचितोरेव। धर्मद्वारक एव धर्मिणि विकार इत्यभ्युपेत्यम्। तत्रापि चिता धर्मद्वारा विकार, अचिता तु स्वरूपेण विकार। एव पाञ्चरात्रशास्त्रे क्वचित् ब्रह्मणो बहुभवनमुच्यते, क्वचित्तु तच्छक्तिभूताया श्रिय। तत्र श्रीविशिष्टस्यैव ब्रह्मपदार्थत्वात् ब्रह्मण्युच्यमान बहुभवन श्रिया, श्रियामुच्यमान तत् ब्रह्मण्यप्यन्वेति। उभयत्रापि न स्वरूपे विकार, किंतु तद्धर्मभूतयोश्चिदचितोरेव। उभयोरपि चिदचिदन्तरालतयानुवर्तनात् निमित्तान्तरानपेक्षणाच्च श्रुतिसिद्धमद्वितीयत्वमभिन्ननिमित्तोपादानत्व च सिध्यतीति सर्वथा श्रुत्यनुगुण एव पाञ्चरात्रसिद्धान्त इति निरवद्यम्।

## १४ मोक्षस्वरूपम्

अप्राकृतदेशविशेषप्राप्तिपूर्वकपरिपूर्णब्रह्मानन्दानुभव एव मोक्ष पाञ्चरात्रसमयसमत। अप्राकृतदेशविशेषश्च महाभारते अहिर्बुध्न्यसहिताया चोपवर्णित। लक्ष्मीतन्त्रेऽपि—

"तयोर्नौ परम व्योम निर्दु ख पदमुत्तमम्।
षाड्गुण्यप्रसरो दिव्य स्वाच्छन्द्याद् देशता गत॥"

इत्युपक्रम्य,

"सूर्यकोटिप्रतीकाशा पूर्णेन्दुयुतसनिभा।
यस्मिन् पदे विराजन्ते मुक्ता समारबन्धने॥
इन्द्रियच्छिद्रविधुरा यातमानाश्च सर्वश।
अनिष्पन्दा अनाहारा षाड्गुण्यतनवोऽमला।
एकान्तिनो महाभागा यत्र पश्यन्ति नौ सदा॥"

इति परमपदाख्यं देशविशेषं, तत्र मुक्तानां नित्यानां चानुभवविशेषं च "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" (ऋग्वेदः, १-२२-२०) इति श्रुत्युक्तप्रकारेणोपवर्ण्य,

"तत्र दिव्यवपुः श्रीमान् देवदेवो जनार्दनः ।
अनन्तभोगपर्यङ्के निषण्णः सुसुखोज्ज्वले ॥
आस्ते नारायणः श्रीमान् वासुदेवः सनातनः ।
सुकुमारो युवा देवः श्रीवत्सकृतलक्षणः ॥
चतुर्भुजो विशालाक्षः किरीटी कौस्तुभं वहन् ।
हारनूपुरकेयूरकाञ्चीपीताम्बरोज्ज्वलः ॥
कान्तस्य तस्य देवस्य विष्णोः सद्गुणशालिनः ।
दयिताहं सदा देवी ज्ञानानन्दमयी परा ॥
अनवद्यानवद्याङ्गी नित्यं तद्धर्मधर्मिणी ।
ईश्वरी सर्वभूतानां पद्माक्षी पद्ममालिनी ॥"
(ल. त., अ. १७, श्लो. २२-३२)

इति मुक्तानुभाव्यो भगवतो दिव्यमङ्गलविग्रहविशेषो वर्णितः । तत्र गतानां ब्रह्मानन्दानुभवस्य न कदापि विच्छेदः, पुनरावृत्तिश्च नेति श्रुतीतिहासपुराणोक्तमत्रापि शास्त्रे उच्यते । यथा—"प्राप्यते परमं धाम यतो नावर्तते पुनः" (अहिर्बुध्न्यसंहिता, ३७-२६) इति ।

## १५. मोक्षोपायः

"ब्रह्मविदाप्नोति परम्" (तैत्तिरीयोपनिषत्, १-२-१) "तमेव विदित्वातिमृत्युमेति" (श्वेताश्वतरोपनिषत्, ३-८) इत्यादिश्रुतिभिर्मोक्षोपायतया विधीयमानं ब्रह्मज्ञानं सदाद्युपासनारूपमिति सामान्यविशेषादिभिस्तात्पर्यलिङ्गैर्निर्णीतम् । एवं पाञ्चरात्रशास्त्रेष्वपि योगपादे यमनियमाद्यङ्गकलापको योग एव मोक्षोपायतया विधीयते । योगालम्बनं च भगवान् वासुदेव एवेति सुस्पष्टमभिहितम् । उपासनं च कर्मयोगविमलीकृतस्वान्तस्य सांख्ययोगनिर्वर्त्यमित्यपि प्रपञ्चितम् ।

एवमुपासनमुपवर्ण्य तदशक्तस्य कालविलम्बाक्षमस्य च पुरुषस्य विषये उपासनस्थाने तदविशेषफलतया तत्तुल्यविकल्पितं न्यासयोगं श्रुतिरिव विदधति पाञ्चरात्रशास्त्राणि ; यथा—

"कर्म सांख्यं तथा योग इति शास्त्रत्रयपाश्रयाः ।
देवदेव न ते शक्याः कर्तुं कालेन गच्छता ॥
कालो हि कल्पयन्नेव स्वतन्त्रो भवदात्मकः ।

ज्ञान सत्त्व बल चैषामायुश्च विनिकृन्तति ॥
अन्त करणसस्था हि वासना विविधात्मिका ।
तत्तत्कालवश प्राप्य घातयन्ति शरीरिण ॥
उदासीनो भवानेव प्राणिना कर्म कुर्वताम् ।
तत्तत्कालानुकूलानि तत्फलानि प्रयच्छति ॥
येन त्व बत सरब्ध प्राणिन पालयिष्यसि ।
प्रब्रूहि तमुपाय मे प्रणतायै जनार्दन ॥"

इति श्रीवाक्य निशम्य, भगवानाह—

"उपायापायसत्यागी मध्यमा वृत्तिमाश्रित ।
मामेक शरण प्राप्य मामेवान्ते समश्नुते ॥
षडङ्ग तमुपाय च शृणु मे पद्मसभवे ।
आनुकूल्यस्य सकल्प प्रातिकूल्यस्य वर्जनम् ॥
रक्षिष्यतीति विश्वासो गोप्तृत्ववरण तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागति ॥"
(ल. त , अ. १७, श्लो. ४९-६१)

इति । न्यासयोग एव प्रपत्ति, प्रपदन, शरणागति, भरन्यास इत्यादिपदैरुच्यते । अतो भक्तियोगवत् न्यासयोगोऽपि मोक्षोपाय इति पाञ्चरात्रसिद्धान्त । तत्र "नान्य पन्था विद्यतेऽयनाय" (श्वेताश्वतरोपनिषत्, ३-८) इति श्रुत्या ज्ञानातिरिक्तोपायनिषेधात् कथ न्यासस्य मोक्षोपायत्वमुच्यमान सगच्छतामिति शङ्का तु न्यासस्यापि ज्ञानविशेषरूपत्वात् समाधेया । तदाहाहिर्बुध्न्य —

"अहमस्म्यपराधानामालयोऽकिंचनोऽगति ।
त्वमेवोपायभूतो मे भवेति प्रार्थनामति ।
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ॥"
(३७-३०, ३१)

इति । गुरुतरोपायस्य भक्तियोगस्य स्थाने लघुतरोपायस्य प्रपत्तेर्विधान गुरुलघ्वोर्विकल्पासभवात् कथ सगच्छतामिति शङ्का त्वधिकारिभेदेन नियतविषयत्वात् समाधेया । किंच "विकल्पोऽविशिष्टफलत्वात्" (ब्रह्मसूत्रम्, ३-३-५७) इति फलाविशेष एव हि विकल्पे निमित्तम् । स चात्राप्यस्तीति न शङ्कावकाश । अपिच प्रपत्तेरपि भक्तियोगस्येव दुष्करत्वमपि प्रतिपादित लक्ष्मीतन्त्रे, यथा—"उपाय सुकर सोऽय दुष्करश्च मतो मम" (१७ १०५) इति । अयमपर प्रपत्तेर्विशेष —यदुपासकानामुपासन-

पूर्तावपि प्रारब्धकर्मावसान एव मोक्षः । तच्च प्रारब्धकर्मावसानं किमेकस्मिन् जन्मनि, उत शतेषु, अथवा सहस्रेष्विति न ज्ञायते । प्रपन्नानां तु तच्छरीरावसान एवाखिलकर्मनाशात् मोक्ष इति । इदं च "येन त्वं वत संरब्धः प्राणिनः पालयिष्यसि" (ल. त., १७-५४) इति श्रियः प्रश्ने 'संरब्धः' इति शैघ्र्यवाचकपद-प्रयोगात्, तदुत्तररूपतयावतीर्णेन

"सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा ।
नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ॥"
(ल. त., १७-६३)

इति भगवद्वचनेन चावगम्यते ।

## १६. चातूरूप्यम्

परव्यूहविभवार्चारूपेण भगवतश्चातूरूप्यं लक्ष्मीतन्त्रे प्रतिपादितम् । क्वचित्तु अन्तर्यामिरूपमपि संयोज्य पाञ्चरूप्यमुक्तम् । तत्र पररूपं षाड्गुण्यपरिबृंहितं मुक्तभोगाय स्वीकृताप्राकृतदिव्यरूपमानन्दमयाप्राकृतदिव्यदेशावस्थितमनन्तगरुडाद्यनन्तपरिजनसेवितम् । तच्चैकमेव । तथा चोक्तं जयाख्यसंहितायाम् —

"आनन्दलक्षणं ब्रह्म सर्वहेयविवर्जितम् ।
स्वसंवेद्यमनौपम्यं परा काष्ठा परा गतिः ॥
सर्वज्ञः सर्वदर्शी च सर्वः सर्वेश्वरः प्रभुः ।
सर्वशक्तिमयश्चैव स्वाधीनः परमेश्वरः ॥
विदित्वैवं परं ब्रह्म ज्ञानेन परमेण च ।
यदा न जायते भूयः संसारेऽस्मिंस्तदा पुमान् ॥"
(पट. ४, श्लो. ६०-७१)

इति । व्यूहाश्च वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याश्चत्वारो जगत्सर्गादिव्यापारार्थं परिगृहीतदिव्यदेहा भगवतोऽवतारविशेषाः । एभ्यो वासुदेवादिव्यूहेभ्यः प्रत्येकं त्रयस्त्रय इत्यवतीर्णाः केशवादयो द्वादश देवा व्यूहान्तरव्यपदेश्याः; यथा वासुदेवात् केशवनारायणमाधवाः; संकर्षणात् गोविन्दविष्णुमधुसूदनाः; प्रद्युम्नात् त्रिविक्रमवामनश्रीधराः; अनिरुद्धात् हृषीकेशपद्मनाभदामोदराः (ल. त., ४-२७) इति । विभवाश्च पद्मनाभादयोऽष्टात्रिंशत्; यथा—

| | | |
|---|---|---|
| १. पद्मनाभः | ४. शक्तीशः | ७. कपिलः |
| २. ध्रुवः | ५. मधुसूदनः | ८. विश्वरूपः |
| ३. अनन्तः | ६. विद्याधिदेवः | ९. विहंगमः |

| | | |
|---|---|---|
| १०. क्रोडात्मा | २०. कान्तात्मा | ३०. नरः |
| ११. वडबावक्त्रः | २१. राहुजित् | ३१. नारायणः |
| १२. धर्म | २२. कालनेमिघ्नः | ३२. हरिः |
| १३. वागीश्वरः | २३. पारिजातहरः | ३३. कृष्णः |
| १४. एकार्णवान्तःशायी | २४ लोकनाथः | ३४. परशुरामः |
| १५. कमठः | २५. दत्तात्रेयः | ३५. श्रीरामः |
| १६. यज्ञवराहः | २६. न्यग्रोधशायी | ३६. वेदवित् |
| १७. नृसिंहः | २७. एकशृङ्गतनु· | ३७. कल्की |
| १८. अमृताहरणः | २८. वामन· | ३८. पातालशयनः |
| १९. श्रीपति. | २९. त्रिविक्रम | |

(ल. त., अ. ११, श्लो. १९-२५) इति। यास्तु लोकोत्तरान् महनीयांश्च देवमनुष्यादीन् स्वशक्त्यांशेन चाविश्य जगद्धितं भगवान् करोति, ते विभवान्तरपदवाच्या ; यथा सनकसनन्दनादयः शुकशौनकादयश्च। अर्चा च योगिना चित्तालम्बनसौकर्याय तैर्यथारुचि परिगृहीत· सुवर्णरजतादिनिर्मितः प्रतिमाविशेषः। तत्र च मन्त्रविशेषमहिम्ना भगवान् सन्निहितो भवति, भगवत्सन्निधानेन च ता. प्रतिमा अप्राकृता· षाड्गुण्य-परिपूर्णा भगवन्मया भवन्तीति पाञ्चरात्रसिद्धान्त। यथोक्तम्—"बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते" (सात्वतसहिता, ६-२२) इति। तथान्यत्रापि—

"सुरूपा प्रतिमा विष्णो. प्रसन्नवदनेक्षणाम्।
कृत्वात्मन. प्रीतिकरीं सुवर्णरजतादिभिः॥
तामर्चयेत्ता प्रणमेत्ता यजेत्ता विचिन्तयेत्।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्॥"
(विष्णुधर्म, १०३—१६, ३०)

इति। अर्चैव बिम्बपदेन बेरपदेन प्रतिमापदेन च तत्र तत्र व्यवह्रियते। पूजासु चार्चापूजैव प्रशस्तेति वदन्ति ; यथोक्तम्—

"मानसी होमपूजा च बेरपूजेति सा त्रिधा।
यथोपयोगशास्यत्वात् कर्तुं पुष्पादिपूजनम्॥
चक्षुष प्रीतिकरणान्मनसोऽपि तथैव च।
प्रीत्या सजायते भक्तिर्भक्तस्य सुलभो हरिः।
तस्मात् त्रयाणामेतेषा बेरपूजा विशिष्यते॥"
(वैखानसक्रियाधिकार इति पाञ्चरात्ररक्षा)

इति । तथा च भगवदर्चानुभवरसिकानामभियुक्तानां वचनम्—

"निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिन्तापदमाभिरूप्यम् ।
सत्यं शपे वारणशैलनाथ वैकुण्ठवासेऽपि न मेऽभिलाषः ॥"
(वरदराजपञ्चाशत्, ४९)

इति । अर्चाश्च स्वयंव्यक्तदैवसैद्धमानुषभेदेन भिन्ना देवालयेषु गृहेषु च भिन्नभिन्नाकारपरिकल्पनेन पूज्यन्ते ।

अन्तर्यामी च परमात्मा अन्तरात्मेत्यादिभिः शब्दैः श्रुतीतिहासस्मृत्यादिषु व्यवह्रियते । स च भक्तियोगनिष्ठानां चित्तालम्बनाय हृदयकुहरे संनिहितः । योगदशायां साक्षात्कृतो योगिनां महान्तमानन्दं जनयति । परमात्मशब्दार्थ उक्तो लक्ष्मीतन्त्रे ; यथा—

"अस्ति निर्दुःखनिःसीमसुखानुभवलक्षणः ।
परमात्मा परं यस्य पदं पश्यन्ति सूरयः ॥
कश्चित् केषांचिदात्मा स्यात् तस्यान्येषां च कश्चन ।
तस्याप्यन्य इतीत्थं तु यत्रैषा व्यवतिष्ठते ॥"
(२-१, २)

इति । अहिर्बुध्न्यसंहितायामपि—

"उपर्युपरि तत्त्वानां पूर्वपूर्वात्मभाविनाम् ।
पारम्येणात्मभावित्वात् परमात्मा प्रकीर्तितः ॥"
(२-२६)

इति ।

अत्रेदमवधेयम्—विभवाश्च लक्ष्मीतन्त्रे एकादशाध्याये पद्मनाभादयोऽष्टत्रिंशदित्युक्त्वा परिगणिताः । त एव पुनर्व्यञ्जनाधिष्ठातृतया पठितास्तत्रैव विंशाध्याये । सात्वतसंहितायामपि नवमाध्यायेऽनेनैव क्रमेण पद्मनाभादयो विभवाः पठिताः ; परं तु संख्या न निर्दिष्टा (श्लो. ७७-८३) । अहिर्बुध्न्यसंहितायां तु एतान्येव नामान्यनेनैव क्रमेण पठित्वा नवत्रिंशदिति संख्या निर्दिष्टा (अ. ५, श्लो. ५०-५६) । अतः संख्याविषये लक्ष्मीतन्त्राहिर्बुध्न्यसंहितयोर्विरोधः प्रतीयते । अत्र चेत्थं विरोधः परिहृतः सात्वतसंहिताभाष्ये अलशिंगभट्टेन—लक्ष्मीतन्त्रे विशाखयूपं पृथक् निर्दिश्यानन्तरं पद्मनाभादयोऽष्टत्रिंशत् पठिताः । एवं सात्वतसंहितायामपि । अहिर्बुध्न्ये तु विशाखयूपं पृथगनिर्दिश्य तमपि पद्मनाभपदेन तन्त्रेणावृत्त्या वा बोध्यं मत्वा नवत्रिंशदित्युक्तम् । "त्रयाणां मुख्यपूर्वाणां ध्रुवान्तानां पुरोदितम्" (१२-३) इति सात्वतसंहितावचनेन विशाखयूपस्यापि विभवत्वमवगम्यते । ईश्वरपारमेश्वरसंहितयोः "अब्जनाभं परं चैव पद्मनाभं ध्रुवं तथा"

(ईश्वरसहिता, १०-१७४), (पारमेश्वरसहिता, १६-१५९) इति पद्मनाभपर्यायाब्जनाभपदेन विशाखयूपस्य व्यपदेश कृत। अत अहिर्बुध्न्यसहिताया पद्मनाभपदेन विशाखयूपस्यापि विवक्षा सगतेवेति। एव स्थिते, यत् श्रूडरमहाशये "लोकनाथस्तु शान्तात्मा" (अहिर्बुध्न्यसहिता, ५-५४) इत्यत्र शान्तात्मेति पृथङ् नाम परिगणय्य नवत्रिंशत्सख्योपपादन कृत, तत् तुशब्दस्वारस्यानुरोधि वा न वेति सुधीभिरालोचनीयम्।

१७ चातुर्व्यूहम्, विशाखयूपश्च

परवासुदेवाख्यात् पररूपादाविर्भूता वासुदेवसकर्षणप्रद्युम्नानिरुद्धाख्याश्चत्वारो व्यूहा। वासुदेव पर ब्रह्मैव जगज्जन्मस्थितिलयकरणार्थमात्मान चतुर्धा व्यूह्यावतिष्ठते इति पाञ्चरात्रसिद्धान्त। यद्यपि सर्वेऽप्येते षाड्गुण्यपरिपूर्णा सर्वेशक्ता सर्वज्ञाश्च, तथापि तत्तत्कृत्यविशेषानुगुण्येन कांश्चिद् गुणान् विशदीकृत्यावस्थानादेव विभाग शास्त्रेषु।

तत्र प्रथमो व्यूहवासुदेव परवासुदेव इव षाड्गुण्यपरिपूर्ण सर्वज्ञ सर्वशक्तिश्च। परतु परवासुदेवे षाड्गुण्य शान्तोदितावस्थम्, व्यूहवासुदेवे तु नित्योदितावस्थमितीयानेव भेद। पररूपस्य शान्तावस्थत्वात् तत्र षाड्गुण्यस्य सर्गाद्यर्थं समुन्मेषो नास्ति। व्यूहरूपस्य तु नित्योदितावस्थत्वात् षाड्गुण्यस्य सर्गाद्यर्थं मनागिव समुन्मेष सजात। अतो व्यूहवासुदेवस्य परवासुदेवान्नातीव भेदो दृश्यत इति तस्य व्यूहेषु परिगणनमुपेक्ष्य त्रयो व्यूहा इत्यपि क्वचित् व्यवहार। व्यूहवासुदेवस्य महिषी लक्ष्मी। वर्णवमनादिक तु—

"तत्राद्य भगवद्रूप हिमकुन्देन्दुकान्तिमत्।
चतुर्भुज सौम्यवक्त्र पुण्डरीकनिभेक्षणम्॥
पीतकौशेयवसन सुपर्णध्वजभूषितम्।
मुख्यदक्षिणहस्तेन भीतानामभयप्रदम्॥
तथाविधेन वामेन दधान शङ्खमुत्तमम्।
अपरेण दधान च दक्षिणेन सुदर्शनम्।
वामेन च गदा गुर्वी निषण्णा वसुधातले॥"

इत्युक्तम्। (ल त, अ १०, श्लो. २७-३०)

सकर्षणस्तु जगत्सहारकर्ता, शास्त्रप्रवर्तक, तदानुगुण्येन ज्ञानबलाभ्या विशेषेण भास्वर, जीवाभिमानी च। तस्य महिषी कीर्ति। वर्णवमनादिक तु—

"सिन्दूरशिखराकार सौम्यवक्त्र चतुर्भुजम्।
अतसीपुष्पसकाशवसन तालचिह्नितम्॥

मुख्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभोः ।
सीरं तच्चक्रहस्तेऽस्य मुसलं तु गदाकरे ॥"

(ल. त., अ. १०, श्लो. ३१-३३)

इत्युक्तम् ।

प्रद्युम्नस्तु जगत्सृष्टिकर्ता, धर्मप्रवर्तकः, तदानुगुण्येन ऐश्वर्यवीर्याभ्यां विशेषेण भास्वरः, मनोऽभिमानी च । तस्य महिषी जया । वर्णवसनादिकं तु—

"प्रावृण्निशासमुदितखद्योतनिचयप्रभम् ।
रक्तकौशेयवसनं मकरध्वजशोभितम् ॥
सौम्यवक्त्र चतुर्बाहुं तृतीयं परमेश्वरम् ।
मुख्यहस्तद्वयं चास्य प्राग्वत्तुल्यं महामते ।
वामेऽपरस्मिन् शार्ङ्ग च दक्षिणे बाणपञ्चकम् ॥"

(ल. त., अ. १०, श्लो. ३४-३६)

इत्युक्तम् ।

अनिरुद्धस्तु स्थितिकर्ता, धर्मफलप्रदः, तदानुगुण्येन शक्तितेजःप्रचुरः, अहंकाराभिमानी च । अस्य महिषी माया । वर्णवसनादिकं च—

"अञ्जनाद्रिप्रतीकाश सुपीताम्बरवेष्टितम् ।
चतुर्भुज विशालाक्षं मृगलाञ्छनभूषितम् ॥
आदिवत् पाणियुगलमाद्यमस्य विचिन्तयेत् ।
दक्षिणादिक्रमेणाथ द्वाभ्या वै खड्गखेटकौ ॥"

(ल. त., अ. १०, श्लो. ३७, ३८)

इत्युक्तम् । सात्वतसंहितायामप्येवमेव पञ्चमाध्याये पठितम् । अत्र च—

"क्रमशः प्रलयोत्पत्तिस्थितिभिः प्राण्यनुग्रहः ।
प्रयोजनमथान्यच्च शास्त्रशास्त्रार्थतत्फलैः ॥"

(ल. त., २-५७)

"संकर्षणादयो देवास्त्रय एते पुरातनाः ।
जीवो बुद्धिरहंकार इति नाम्ना प्रकीर्तिताः ॥"

(ल. त., ६-१२, १३)

"लक्ष्मी कीर्तिर्जया माया व्यूहशक्तय ईरिता ।"
(ल. त., २० ३४)

इति वचनात्मनुसधेयम् ।

एते च व्यूहावतारा उपासकाना ब्रह्मविद्यास्विव तत्तद्गुणानुसधानार्थं तत्तद्गुणाविष्कारेण भगवता वासुदेवेनैव स्वीकृता इत्यनुसधेयम् । उक्त च चतुर्व्यूहोपासन तदुपासकाना तत्तद्व्यूहपदप्राप्तिपूर्वक-परममुक्तिश्च । यथा महाभारते—

"ये तु दग्धेन्धना लोके पुण्यपापविवर्जिता ।
तेषा वै क्षेममध्वान गच्छता द्विजसत्तम ॥
परमाण्वात्मभूताश्च त देव प्रविशन्त्युत ।
तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिता ॥
मनोभूतास्ततो भूय प्रद्युम्न प्रविशन्त्युत ।
प्रद्युम्नाच्च विनिर्मुक्ता जीव सकर्षण तथा ॥
विशन्ति विप्रप्रवरा साख्ययोगाश्च तै सह ।
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ॥
प्रविशन्ति द्विजश्रेष्ठा क्षेत्रज्ञ निर्गुणात्मकम् ।
सर्वावास वासुदेव क्षेत्रज्ञ विद्धि तत्त्वत ॥"
(शान्तिपर्व, अ ३९४, श्लो १३ २०)

इति । एवं पाद्मसहितायामपि—

"महतस्तमसो बाह्ये लोका सुबहुयोजना ।
चत्वार क्रमश सन्ति चतुर्भि समधिष्ठिता ॥
व्यूहै क्रमेण वक्ष्ये ताननिरुद्ध पर स्मृत ।
प्रद्युम्नोऽनन्तर तेषा सकर्षणसमाह्वय ॥
वासुदेवस्तत पश्चाद्व्यूहाख्य कमलासन ।
ततो नारायणस्यापि लोकस्तन्निकटे स्थित ॥"
(ज्ञानपाद, अ १२, श्लो ४९ ५३)

इत्युक्तम् । एवमन्यत्रापि—

"श्वेतद्वीपमिद प्राप्य विश्वरूपधर हरिम् ।
ततोऽनिरुद्धमासाद्य श्रीमत्क्षीरोदधौ हरिम् ॥
तत प्रद्युम्नमासाद्य देव सर्वेश्वरेश्वरम् ।
तत सकर्षण दिव्य भगवन्त सनातनम् ॥

अयमप्यपरो मार्गः सदा ब्रह्मसुखैषिणाम् ।
परमैकान्तिसिद्धाना पञ्चकालरतात्मनाम् ॥"

इति । इमानि च वचनानि जयसंहितास्थानीत्युक्तमभियुक्तैः (रहस्यत्रयसारः, अधि. २१) । यथा मध्वादि-ब्रह्मविद्यासु वस्वादिपदप्राप्तिपूर्वकपरमपदप्राप्तिः श्रुता, तथैव चतुर्व्यूहोपासनेऽपि अनिरुद्धादिपदप्राप्तिपूर्वक-परमपदप्राप्तिः पाञ्चरात्रसमयसिद्धा वेदितव्या ।

एवं यथा ब्रह्मविद्या कामनाप्रयुक्ताधिकारितारतम्येन नियतविषया, तथा चतुर्व्यूहोपासन-मप्यधिकारितारतम्यनियतम् । तथाहि—जाग्रत्स्वप्नसुषुप्तितुर्याख्याश्चतस्रो दशा उपासकानां भवन्ति, याश्च विश्वतैजसप्राज्ञतुर्याख्याभिरुपनिषत्सु श्रूयन्ते । तासां दशानामनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्याश्चत्वारो व्यूहा अधिष्ठातारस्तत्तद्दशास्थैरुपासकैरुपास्या भवन्ति । यदाहुः—

"जाग्रत्स्वप्नाद्यलसतुरीयप्रायध्यातृक्रमवदुपास्यः ।
स्वामिंस्तत्तद्गुणपरिबर्हश्चातुर्व्यूहं वहसि चतुर्धा ॥"
(श्रीरङ्गराजस्तवः, २-४०)

इति ।

इदमत्र भाव्यम्—अस्ति श्रीवैकुण्ठेऽप्राकृतलोके विशाखयूपो नाम ध्वजस्तम्भाकारः कश्चन तेजोरूपी भगवन्मयः स्तम्भविशेषः । स च ब्रह्मयूपनाम्नाप्याख्यायते । तत्राधःप्रदेशमारभ्योपर्युपरि चत्वारो भागा-श्चतुरश्रा वर्तन्ते । प्रतिभागं चतुर्ष्वपि पार्श्वेषु भगवान् परवासुदेवः वासुदेवसकर्षणप्रद्युम्नानिरुद्धरूपेण क्रमेण प्रागादिदिक्षु अवतिष्ठते । तत्र प्रथमो भागः जाग्रत्पदाभिमान्यनिरुद्धप्रधानः । तत्र ते व्यूहदेवाः स्पष्टदृश्य-रूपायुधवाहनमहिष्यादिपरिच्छदा भान्ति । एते च जाग्रत्पदस्थोपासकानुग्रहाय तथा प्रकाशन्ते । तदुपरि द्वितीयो भागः स्वप्नस्थानाभिमानिप्रद्युम्नप्रधानकः । तत्र ते व्यूहदेवा अस्पष्टदृश्यैर्मलिनप्रायैरायुधवाहनमहिष्यादिपरि-च्छदैर्वर्तन्ते । एते च स्वप्नपदस्थोपासकानुग्रहाय तथा वर्तन्ते । तदुपरि तृतीयो भागः सुषुप्तिस्थानाभिमानि-सकर्षणप्रधानो रेखामात्रदृश्यायुधादिपरिच्छदैर्देवैरध्यासितः । एते च सुषुप्तिपदस्थोपासकानुग्रहाय तथा वर्तन्ते । तदुपरि तुरीयस्थानाभिमानिवासुदेवप्रधानोऽत्यन्तादृश्यायुधादिपरिच्छदैः शून्यकल्पैर्देवैरध्यासितश्चतुर्थो भागः । एते च तुरीयपदस्थोपासकानुग्रहाय तथा वर्तन्ते । अतो जाग्रदादिपदस्थोपासकाधिकारानुगुण्येन व्यूहदेवास्तथा तथा वर्तन्त इति । विशाखयूपस्य वर्णनं सात्वतसहितायां (परि. ४, श्लो. ७-२०) द्रष्टव्यम् । एतादृशविशाखयूपाख्यानिरुद्धादेव पद्मनाभादयो विभवा अवतीर्णा इति लक्ष्मीतन्त्रे उक्तम् । (अ. ११, श्लो. ९-१८) ।

## १८. षाड्गुण्यम्

परब्रह्मभूतस्य भगवतो वासुदेवस्यानन्तेषु कल्याणगुणेषु ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि प्रधानतमाः

षट् गुणाः । एत एव षाड्गुण्यमित्युच्यते । षाड्गुण्यं चातुरात्म्यं चातुर्व्यूहं त्रैगुण्यमित्यादयः स्वार्थिकतद्धितान्ता आगमिकानां व्यवहाराः । कालिदासोऽपि "त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते" (मालविका, १-४) इति प्रायुङ्क्त । तत्र ज्ञानं नाम भगवतस्त्रैकालिकसर्ववस्तुसाक्षात्कारोपयोगी स्वयंप्रकाशो गुणविशेषः । स्वयंप्रकाशत्वात् ब्रह्मस्वरूपमपि ज्ञानमित्युच्यते । यथा—"सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्तिरीयोपनिषत्, १-२-१) इत्यादि । एवंच ब्रह्मस्वरूपं तद्गतो गुणविशेषश्चेत्युभयमपि ज्ञानमिति व्यपदिश्यते । यथोक्तम्—

"अजडं स्वात्मसंबोधि नित्यं सर्वावगाहनम् ।
ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ।
स्वरूपं ब्रह्मणस्तच्च गुणश्च परिगीयते ॥"
(अहिर्बुध्न्यसंहिता, २-५६, ५७)

इति । ज्ञानादीनां षण्णां गुणानां व्याख्यानं यथा—

"अहमित्यान्तरं रूपं ज्ञानरूपमुदीर्यते ।
प्रकाशकादिकं रूपं स्फटिकादिसलक्षणम् ॥
अतस्तु ज्ञानरूपत्वं मम नारायणस्य च ।
अव्याहतिर्यदुदन्यास्तदैश्वर्यं परं मम ॥
जगत्प्रकृतिभावो मे यः सा शक्तिरितीर्यते ।
सृजन्त्या यच्छ्रमाभावो मम तद्बलमिष्यते ॥
विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा ।
सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या ॥
तेजः षष्ठं गुणं प्राहुस्तमिमं तत्त्ववेदिनः ।
इति पञ्च गुणा ह्येते ज्ञानस्य स्तुतयोऽमलाः ।
ज्ञानाद्याः षड् गुणा एते षाड्गुण्यं मम तद्वपुः ॥"
(ल. त., अ. २, श्लो. २६—३६)

इति । एषां गुणानामभिव्यक्तितारतम्येन चत्वारो व्यूहाः संभवन्ति । भगवत्स्वरूपस्य षाड्गुण्यप्रचुरत्वात् षाड्गुण्यसारत्वाच्च "तद्गुणसारत्वात् तद्व्यपदेशः" (ब्रह्मसूत्रम्, २-३-२९) इति न्यायेन "षाड्गुण्यं तत्परं ब्रह्म" (अहिर्बुध्न्यसंहिता, २-६२) "षाड्गुण्यं मम तद्वपुः" (ल. त., २-३६) इत्यादौ षाड्गुण्यत्वेन व्यपदेशः । चतुर्षु व्यूहेषु गुणविशेषाविर्भावश्चैवं सगृहीतोऽभियुक्तैः—

"षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्या-
द्बोधात् सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।

प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि सत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥"
(श्रीरङ्गराजस्तवः, २-३९)

इति ।

एषां वासुदेवादिव्यूहदेवानां महिष्यस्तु क्रमेण लक्ष्मीः कीर्तिर्जया माया चेति पूर्वं चातुर्व्यूह प्रस्तावे उक्ता ज्ञातव्याः ।

एतेभ्यश्चतुर्भ्यो व्यूहेभ्योऽवतीर्णानां केशवादिव्यूहान्तराणां महिष्यो यथा—

"श्रीश्च वागीश्वरी कान्तिक्रियाशान्तिविभूतयः ।
इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ।
शक्तयः केशवादीनां ता एताः स्वरशक्तयः ॥"
(ल. त., २०-३५, ३६)

इति । तेषामायुधानि यथा—

"वामे पश्चिमगे चक्रं विद्धि शङ्खं तु दक्षिणे ।
दक्षिणे मुख्यहस्तेऽब्जं गदा तदपरे तु वै ॥
एवं हि भगवान् धत्ते केशवः कमलादिकम् ।
सव्यापसव्यहस्ताभ्या मुख्याभ्यां तु गदाम्बुजे ॥
वामादौ शङ्खचक्रे तु स धत्ते पश्चिमद्वये ।
नारायणाख्यो भगवान् माधवाख्यं निबोध तु ॥
मुख्ये सव्यापसव्ये तु शङ्खं धत्ते गदां प्रभुः ।
पश्चिमे पद्मचक्रे तु सर्वपूर्वे भुजद्वये ॥
मूर्तित्रयमिदं दिव्यं कुन्देन्दुस्फटिकप्रभम् ।
पद्मं मुख्यकरे वामे गदान्यस्मिन् हि दक्षिणे ॥
विभोर्गोविन्दसंज्ञस्य इत्येवं समुदाहृतम् ।
विन्यासं लाञ्छनाना च विष्णोरथ निबोध तु ॥
वामदक्षिणपाणिभ्यामग्रतः शङ्खपङ्कजे ।
एवं पश्चिमहस्ताभ्या चक्रकौमोदकीद्वयम ॥
मधुसूदनसंज्ञस्य सनिवेशमतः शृणु ।
पद्मं मुख्यकरे वामे पाञ्चजन्यं तु दक्षिणे ॥
गदा पश्चिमतः सव्ये चक्र दक्षिणतः परे ।
चातुरात्म्याद् द्वितीयं तु पद्मरागोज्ज्वलद्युति ॥

अथ प्रद्युम्नदेवाना त्रयाणा क्रम उच्यते ।
अग्रतो वामपाणौ च चक्रमन्यकरे गदा ॥
वामे तु पश्चिमे शङ्ख पद्म तदपरे स्मृतम् ।
विभोस्त्रिविक्रमाख्यस्य वामनस्यावधारय ॥
गदाग्रवामहस्ते तु चक्र मुख्ये तु दक्षिणे ।
वामे तु पश्चिमे पद्म शङ्ख तद्दक्षिणे करे ॥
श्रीधरस्य गदा वामे मुख्यहस्ते प्रकीर्तिता ।
चक्रमग्रेऽपसव्याख्ये शङ्ख वामे तु पश्चिमे ॥
तदन्यस्मिन् परे पद्म चक्र कान्तिसमप्रभम् ।
हेमधामप्रभ ज्ञेय चातुरात्म्यतया स्थितम् ॥
अतोऽनिरुद्धमूर्तीना त्रितय चावधारय ।
पद्ममग्रकरे वामे तद्द्वितीये तु हेतिराट् ॥
सव्यापसव्यहस्ताभ्या पश्चिमाभ्या क्रमेण तु ।
पद्मकोश गदा गुर्वी पद्मनाभे निबोध तु ॥
अग्रगे चक्रराड् वामे पद्म मुख्यकरे परे ।
वामे गदा पश्चिमगे तदन्यस्मिश्च शङ्खराट् ॥
धत्ते दामोदरो वामे गदा चाग्रस्थिते शुभाम् ।
अपसव्येऽग्रगे शङ्ख वामे चक्र तु पश्चिमे ॥
पश्चिमे त्वपसव्ये तु कमल सूर्यवर्चसम् ।
अतसीपुष्पसकाशमिद मूर्तिगण स्मृतम् ॥"

(पौष्करसहिता, अ ३६, श्लो १४६ १६८)

इति ।

पद्मनाभादयो ये विभवा , तेषा महिष्यो यथा—

"धीस्तारा वारुणी शक्ति पद्मा विद्या तथैव च ।
सख्या विश्वा खगा भूर्गौर्लक्ष्मीर्वागीश्वरी तथा ॥
अमृता धरणी छाया नारसिंही सुधा तथा ।
श्री कीर्तिर्विश्वकामा मा सत्या कान्ति सरोरुहा ॥
माया पद्मासना खर्वा विक्रान्तिर्नरसभवा ।
नारायणी हरिप्रीतिर्गान्धारी काश्यपी तथा ।
वैदेही वेदविद्या च पद्मिनी नागशायिनी ॥"

(ल त, अ. २०, श्लो ४५-४८)

इति । व्यूहादिदेवा इव तन्महिष्योऽपि षाड्गुण्यपरिपूर्णा ।

## १९. पाञ्चरात्रे सांख्यदर्शनम्

### सत्कार्यवादः

पदार्थानां कार्यकारणभावविषये सन्ति विविधा मतभेदाः। असतः शून्यात् सत् जायत इति माध्यमिकाः। सतो विज्ञानात् संवृतिसत्यः प्रपञ्चो जायत इति सौत्रान्तिकाः। सतः कारणान्मृदादेः पूर्वमविद्यमानो घटादिः सन् जायत इति नैयायिका वैशेषिकाश्च। सतः कारणान्मृदादेः तत्र पूर्वं सन्नेव घटादिर्जायत इति सांख्याः। सतः कारणात् ब्रह्मणस्तद्विवर्तभूतो घटादिर्जायत इति निर्विशेषाद्वैतिनः। सतः कारणात् ब्रह्मणः सन्नेव घटादिर्जायत इति विशिष्टाद्वैतिनः। सतः कारणान्मृदादेः पूर्वमसन् घटादिर्जायते; ब्रह्म तु निमित्तमात्रमिति माध्वाः। पाञ्चरात्रग्रन्थाः प्रायेणात्र विषये सांख्यपक्षमाद्रियन्ते; यथोक्तम्—

"यथा न्यग्रोधधानायां त्रैगुण्ये प्रकृतौ तथा।
या स्थितिर्महदादेः सा भावसृष्टिर्निगद्यते॥"

(ल. त., १२—३९, ४०)

इति। अयं भावः—यदि कारणे कार्यं पूर्वं न स्यात्, तदा कथं नियतात् कारणान्नियतस्य कार्यस्योत्पत्तिः? कथं मृत्पिण्डात् घट एवोत्पद्यते, न पटः? किं चासतः सत्ता नाम कथमपि न संभवति। अन्यथा शशशृङ्गादिरपि कदाचिदुत्पद्येत। यदि नात्यन्तासतः सत्त्वमुच्यते, किंतु अन्यत्र प्रसिद्धस्यैवेति कथ्यते; तदापि सिकताभ्यस्तैलमुत्पद्येत। उक्तं च "नासतो विद्यते भावः" (गीता, २-१६) इति। तस्मात् मृत्पिण्डे घट उत्पत्तेः पूर्वमपि विद्यत एव। कुतो न दृश्यत इति चेत्, सौक्ष्म्यादित्युच्यते। यथाहुः—"सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः" (सांख्यकारिका, ८) इति। वेदान्तिनस्तु सत्कार्यवादिनोऽपि सांख्योक्तां प्रक्रियां नाद्रियन्ते। तथाहि—यदि मृत्पिण्डे घटः पूर्वमपि स्यात्, कृतं तर्हि कुलालव्यापारेण। पूर्वमनभिव्यक्तस्य घटस्याभिव्यक्त्यर्थं सोऽपेक्षित इति चेत्, तर्हि घटस्येव मृत्पिण्डनिष्ठस्य करकशरावादेरपि घटकरणोद्यतकुलालव्यापारेणाभिव्यक्तिः स्यात्। अभिव्यञ्जकानां ह्ययं स्वभावः—यत् समानेन्द्रियग्राह्याणि समानदेशस्थितानि सकलान्यपि वस्तून्यविशेषेण प्रकाशयन्तीति। घटाभिव्यञ्जकालोकेन हि तत्संबद्धदेशवर्तिकटपटादिकमप्यभिव्यज्यते। 'न हि घटायोन्मीलितं चक्षुः पटं न पश्यति' इति च न्यायविदः। अभिव्यक्तिवादे स्थापिते हि अभिव्यञ्जकशक्तितारतम्यं कल्पयितुं शक्यते, नान्यथा। अथैनद्गीत्या कुलालव्यापारस्य न घटाभिव्यञ्जकत्वं, किंतु मृत्पिण्डस्थघटे सूक्ष्मावस्थामपोह्य स्थूलावस्थाजनकत्वमित्यङ्गीक्रियते, तदा पूर्वमसत्याः स्थूलावस्थाया उत्पत्त्यङ्गीकारात् असत्कार्यवाद एव पर्यवसानं स्यात्। तस्मात् सत्कार्यवाद एवमुपपादनीयः—एकमेव द्रव्यं कारणावस्थं कार्यावस्थमपि दृश्यत

इति। तस्मात् पिण्डात्मना पूर्वं सदेव मृद्द्रव्यं घटात्मनानन्तरं दृश्यत इति सत्कार्यवाद उपपन्नः। असत्कार्यवादिभिस्तु घटस्य सर्वात्मना मृत्पिण्डेऽसत्त्वमेवाङ्गीकृतमिति ततोऽस्य मतस्य भेदः। सर्ववस्तूना प्रतिनियतशक्तिकत्वात् मृत्पिण्डात् कुतः पटो न जायत इति चोद्यस्य नावकाशः। यथोक्तं पुराणरत्ने— "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः" (विष्णुपुराणम्, १-३-२) इति। तथान्यत्रापि—

"शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिताः।
स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः॥"
(अहिर्बुध्न्यसंहिता, ३-२)

इति।

तत्त्वगणना

तथा तत्त्वगणने साङ्ख्यदर्शनरीतिराश्रीयते, यथा—

"पृथिव्यापस्तथा तेजो वायुराकाशमेव च।
अहङ्कारो महांश्चैव प्रकृतिः परमा तथा।
एताः प्रकृतयस्त्वष्टौ तासां व्याख्यामिमां शृणु॥"
(ल. त., १९—२६, २७)

इत्युपक्रम्य,

'तामसादिपदादिस्तु तन्मात्रगण उज्ज्वलः।
जातः सत्त्वसमुद्रिक्ताद् बुद्धीन्द्रियगणो महान्॥
कर्मेन्द्रियगणश्चापि राजसादुभयात्मकम्।
उभयस्मात् समुद्भूतमितीयं तत्त्वपद्धतिः॥
अत्र प्रकृतिरेकैव मूलभूता सनातनी।
महदाद्यास्तु सप्तान्ये कार्यकारणरूपिणः॥
तन्मात्रेभ्यः समुद्भूता विशेषा वियदादयः।
बुद्धिकर्मेन्द्रियगणौ पञ्चकौ मन एव च॥
विकारा एव विज्ञेया एते षोडश चिन्तकैः।
चतुर्विंशतिरेतानि तत्त्वानि कथितानि ते॥"
(ल. त., अ. १६, श्लो. ९, १०)

इति निगमितम्। इदं च परिगणनम्,

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥"
(सांख्यकारिका, ३)

इति सांख्यरीतिमनुसरति। अनन्तरं जीवतत्त्वमीश्वरतत्त्वं च परिगणय्य षड्विंशतितत्त्वसंख्यामुपपाद्य सेश्वरसांख्ये परिसमापितम्। अत्रैव षष्ठे सप्तमे चाध्याये पञ्चत्रिंशत् तत्त्वानि प्रकारान्तरेण परिगणितानि। सांख्यशब्दनिर्वचनं चैवं कृतम्—

"संख्यास्तिस्रो हि मन्तव्याः सांख्यशास्त्रनिदर्शिताः।
प्रथमा लौकिकी संख्या द्वितीया चर्चनात्मिका॥
समीचीना तु या धीः सा तृतीया परिपठ्यते।
संख्यात्रयसमूहो यः सांख्यं तत् परिपठ्यते॥"
(ल. त., १९-२४, २९)

इति। एवंच तत्त्वगणनापरत्वात्, तत्त्वानां साधर्म्यवैधर्म्यविमर्शाख्यचर्चनापरत्वात्, तत्त्वविषयकयथार्थज्ञानपरत्वाच्चेति त्रिभिर्हेतुभिः समुदितैः सांख्यशब्दनिर्वचनं फलितम्।

षष्टितन्त्रम्

षष्टितन्त्राख्यं सांख्यदर्शनं ग्रन्थकारैर्बहुभिर्नाम्नोल्लिखितमपि तत्रत्यविषयनिर्देशः प्रातिस्विकतया कुत्रापि न कृतः, ऋते पाञ्चरात्रीयाहिर्बुध्न्यसंहितायाः। अतो ज्ञायते पाञ्चरात्रसमयस्य सांख्यदर्शने महानादर इति। ते च विषयाः—

"षष्टिभेदं स्मृतं तन्त्रं सांख्यं नाम महामुने।
प्राकृतं वैकृतं चेति मण्डले द्वे समासतः॥
प्राकृतं मण्डलं तत्र द्वात्रिंशद्भेदमिष्यते।
तत्राद्यं ब्रह्मतन्त्रं तु द्वितीयं पुरुषाङ्कितम्॥"

इत्युपक्रम्य,

"अष्टाविंशतिभेदं तदितरं विकृतिमण्डलम्।
षष्टितन्त्राण्यथैकैकमेषां नानाविधं मुने॥
षष्टितन्त्रमिदं सांख्यं सुदर्शनमयं हरेः॥"
(अहिर्बुध्न्यसंहिता, अ. १२, श्लो. १९-३०)

इति पठिताः।

अन्तःकरणस्य त्रैविध्यम्

"अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।
सांप्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्॥"
(सांख्यकारिका, ३३)

इति साङ्ख्ये दर्शनेऽन्तःकरणं त्रिधा विभक्तम्। तदनुरोधेन लक्ष्मीतन्त्रेऽपि—"चित्तमन्तःकरणमीरितम्। मनोबुद्धिरहंकार इत्येतत् त्रितयं च तत्॥" (७–३०) इति पठितम्। वेदान्तिनस्तु नैतदङ्गीकुर्वन्ति। अन्तःकरणमेकमेवेति मन्यन्ते।

आलोचनज्ञानम्

साङ्ख्याः—

"उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात्।
शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः॥"
(साङ्ख्यकारिका, २७, २८)

इत्यालोचनं नाम मुग्धवस्तुकं ज्ञानविशेषमङ्गीकुर्वन्ति। तदनुरुध्य लक्ष्मीतन्त्रेऽपि—

"वृत्तयो विषयेष्वस्य श्रोत्रादेः श्रवणादयः।
आलोचनानि कथ्यन्ते धर्मिमात्रग्रहश्च सः॥"
(९-९८, ९९)

इत्युक्तम्। विशिष्टाद्वैतवेदान्तिनः सर्वं ज्ञानं सविशेषविषयमित्याचक्षाणा एतन्नाङ्गीकुर्वन्ति।

इन्द्रियाणि

पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मन एकं चेत्येकादशापीन्द्रियाणि सात्त्विकाहंकारादुत्पद्यन्त इति साङ्ख्या वेदान्तिनश्च। लक्ष्मीतन्त्रे तु सात्त्विकाहंकारात् पञ्च ज्ञानेन्द्रियाणि, तैजसाहंकारात् पञ्च कर्मेन्द्रियाणि, उभयस्मान्मन इत्युक्त्वा, मनसो ज्ञानेन्द्रियत्वं कर्मेन्द्रियत्वं चेति प्रतिपादितम्। तथान्यत्रापि—"कर्मेन्द्रियाणि पञ्चैव कर्मारम्भाणि तैजसात्" (परमसंहिता, २–४८) इत्युक्तम्। किन्त्वयं विभागः केषां मतमनुसृत्येति न ज्ञायते। अहिर्बुध्न्यसंहितायामेकादशानामपीन्द्रियाणां सात्त्विकाहंकारादेवोत्पत्तिरभिहिता। अतो ज्ञायते लक्ष्मीतन्त्रोक्तः कर्मेन्द्रियाणां तैजसाहंकारोत्पन्नत्वं मतान्तरावलम्बनेनेति। तथा चोक्तं सर्वार्थसिद्धौ—"न च कर्मेन्द्रियाणां तन्त्रान्तरसिद्धं राजसत्वमनुमन्तव्यम्" (१-३६) इति। तथान्यत्रापि—"कर्मेन्द्रियं राजसं स्यादिति केचन तान्त्रिकाः" (मानमेयरहस्यश्लोकवार्तिकम्, पृ ११८) इत्युक्तम्। मनस उभयात्मकत्वं तु साङ्ख्यानामपि संमतम्। वेदान्तिनस्तु नैतदिच्छन्ते। मनसो ज्ञानद्वारा कर्मप्रवर्तकत्वात् यदि कर्मेन्द्रियत्वमिष्येत, तदा चक्षुरादीनामपि ज्ञानद्वारा कर्मप्रवर्तकत्वात् कर्मेन्द्रियत्वमपीत्युभयात्मकत्वं स्यात्। अतो मनसो ज्ञानेन्द्रियत्वमेवेति वदन्ति।

## २०. विष्णुशक्तिः

पाञ्चरात्रागमेषु श्रीः विष्णुशक्तिरिति व्यपदिश्यते । तथा चोक्तम्—

" तस्य या परमा शक्तिर्ज्योत्स्नेव हिमदीधितेः ।
सर्वावस्थागता देवी स्वात्मभूतानपायिनी ॥
अहं नारायणी शक्तिः सिसृक्षालक्षणा तदा ।
अहं नारायणी शक्तिः सुषुप्सालक्षणा हि सा ॥ "
(ल. त., २-११, १२, २२, २३)

इति । तथा चान्यत्र श्रीनामानि प्रस्तुत्योक्तम्—

" विष्णोः सामर्थ्यरूपत्वाद्विष्णुशक्तिः प्रगीयते ।
पालयन्ती हरेर्भावं विष्णुपत्नी प्रकीर्तिता ॥ "
(अहिर्बुध्न्यसंहिता, ३-११)

इति ।

आपाततो लोकव्यवहारव्युत्पन्नाः शक्तिपदार्थमेवमवगच्छन्ति—शक्तिर्नाम कारणसमवेतः कार्योत्पत्त्यनुकूलो धर्मविशेषः; यथा वह्नेर्दाहानुकूलो धर्मविशेषः शक्तिरित्युच्यते । स च धर्मो नैयायिकरीत्या प्रतिबन्धकाभावरूपो वा, मीमांसकरीत्या भावरूपपदार्थान्तरं वा । सर्वथा शक्तिपदार्थो न द्रव्यं भवितुमर्हति, शब्दादिगुणेष्वपि तस्याः सत्त्वात् । कथमन्यथा शब्देनार्थप्रतिपत्तिः स्यात्? पाञ्चरात्रशास्त्रेष्वपि षट्सु गुणेषु अन्यतमा शक्तिर्निरुच्यते—" जगत्प्रकृतिभावो मे यः सा शक्तिरितीर्यते " (ल. त., २-२९) इति । एवं स्थिते श्रियो विष्णुशक्तित्वोक्तिः कथं संगच्छतामिति तेषां शङ्का जायेतैव । सा च शक्तिपदार्थविमर्शनेनेत्थं समाधेया—कारणस्य कार्योत्पादने यद्यदुपकरोति, तत् सर्वं शक्तिरित्युच्यते । तच्चाद्रव्यमिति वा द्रव्यमिति वा न नियन्तुं शक्यते । क्वचित् कारणसमवेतो धर्मविशेषः सा भवति; यथा वह्नेर्दाहानुकूलो धर्मविशेषः । ईश्वरस्यैश्वर्या वा जगत्प्रकृतिभावाख्यो वैभवविशेषश्च तथा । क्वचित्तु कारणापृथक्सिद्धो द्रव्यविशेषोऽपि; यथा ईश्वरस्य श्रीः प्रकृतिपुरुषकालादयश्च । शब्दे तु अर्थबोधकत्वरूपं तत्स्वरूपमेव शक्तिः, नातिरिक्तो गुणो द्रव्यं वा । ईश्वरस्य च जगत्सर्गादौ तदविनाभूता श्रीः प्रधानपुरुषादयश्च सहकारितामापन्नाः शक्तिशब्देनोच्यन्ते । तेषां सहकारिता च शास्त्रैरवगम्यते । वेदान्तेष्वपि तेजोऽबन्नजीवानुप्रवेशेन हि ब्रह्मणो बहुभवनं श्रूयते; न तद्रहितस्य । ईश्वरस्य जगद्व्यापारे सहकार्यपेक्षणेऽपि न स्वातन्त्र्यस्य कर्तृत्वस्य वा हानिः, यतः कर्तुः सहकार्यपेक्षा न दोषाय । न हि कुलालस्य घटकरणे मृच्चक्रादिसापेक्षत्वेन तत्र स्वातन्त्र्यं कर्तृत्वं वापैति । कर्तृत्वमस्तु, स्वातन्त्र्यं मास्त्विति तु न चोदनीयम्, स्वातन्त्र्यघटितत्वात् कर्तृत्वस्य । " स्वतन्त्रः कर्ता " (अष्टाध्यायी, १-४-५४) इति हि शब्दस्मृतिः । उक्तं च देव्यैव—" कर्तुश्च करणापेक्षा न

स्वातन्त्र्यविघातिनी" (ल. त., ३-३५) इति। तथाभियुक्तवचनमपि—"हेतूनां साध्यसिद्धौ सहकृदनुविर्हेतुभाव न हन्ति" (तत्त्वमुक्ताकलापः, ४-१०८) इति।

### २१. षडध्वानः

श्रीदेवी जगदात्मना बहुभवने षट् रूपाणि स्वीकरोति। तानि रूपाणि षडध्वान इत्युच्यन्ते। ते यथा—

"वार्णः कलामयश्चैव तात्त्विको मान्त्रिकस्तथा।
पादिको भौवनश्चैव षडध्वानः प्रकीर्तिताः॥"
(ल. त., २२-१०, ११)

इति। अयं भावः—परापश्यन्तीमध्यमावैखरीरूपैश्चतुर्भिराकारैः भगवती प्रथमं समुदेति। एष वर्णाध्वा। एवं कलापदव्यपदेश्यषाड्गुण्यात्मनोदेति। एष कलाध्वा। ततो वासुदेवादिव्यूहात्मना भवति। एष एव तत्त्वाध्वेत्युच्यते। एव वर्णाध्वपुरस्कारेण मन्त्ररूपा भवति। एष एव मन्त्राध्वेत्युच्यते। एतद्रूपं प्रमाणीकृत्यैव मन्त्राणां फलप्रदत्वं जैमिनीयाः सगिरन्ते। एतद्रूपमभिप्रेत्यैवाभियुक्तानां भगवत्स्तुतिः—

"अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान् मन्त्रमयं शरीरम्।
अखण्डसारैर्हविषां प्रदानैराप्यायनं व्योमसदां विधत्से॥"
(हयग्रीवस्तोत्रम्, १०)

इति। जाग्रदादिपदस्योपासकध्यानार्थं तत्तत्पदाधिष्ठातृदेवात्मना स्वीकृतानि रूपाणि पदाध्वान इत्युच्यन्ते। चिदचिन्मिश्रमकल्प्यप्राधान्यर्यामितया भूत्वा तत्तद्रूपस्थितिः भुवनाध्वेत्युच्यते। अस्य च प्रपञ्चनं लक्ष्मीतन्त्रे (अ. २२, श्लो. १०-२८) कृतम्। एष चाध्वविभाग. शैवसिद्धान्तेऽप्यादृतः। तथा च विशेषार्थप्रकाशे—

"मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दितः।
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः स्मृताः॥"

इति।

### २२ षट् कोशाः

पूर्वोक्तषडध्वान इव षट् कोशा अपि देव्या बहुभवने स्वीकृतानि षट् रूपाणि भवन्ति। कोशशब्द. शरीरपरः। तेषां प्रपञ्चनं यथा—

"शक्तिर्माया प्रसूतिश्च प्रकृतिस्त्रिगुणात्मिका।
ब्रह्माण्डं जीवदेहश्चेत्येते षट्कोशसंज्ञिताः॥

शक्तिः सा प्रथमः कोशः शुद्धमार्गप्रवर्तनी ।
कोशः कुलायपर्यायः शरीरापरनामवान् ॥"

इत्यारभ्य,

"एषा कोशविधा षष्ठी क्रमशस्तनुतां गता ॥"
(ल. त., अ. ६, श्लो. ३-२९)

इति निगमितम् । तत्र शक्तिकोशसंबन्धिनी सृष्टिः शुद्धसृष्टिरित्युच्यमाना वासुदेवसंकर्षणाद्यवताररूपा दिव्येऽप्राकृतलोके विराजते । मायादिकोशसंबन्धिनी सृष्टिस्तु अशुद्धसृष्टिरित्युच्यमाना हिरण्यगर्भादिमा स्तम्बपर्यन्ता प्राकृतलोके भवति ।

२३. पञ्च कृत्यानि

श्रीदेव्या जगद्व्यापाराः पञ्चभेदाः । ते यथा—सृष्टिः, स्थितिः, संहारः, तिरोभावः, अनुग्रह इति । यथोक्तम्—

"तस्या मे पञ्च कर्माणि नित्यानि त्रिदशेश्वर ।
तिरोभावस्तथा सृष्टिः स्थितिः संहृतिरेव च ।
अनुग्रह इति प्रोक्तं मदीयं कर्मपञ्चकम् ॥"
(ल. त., १२-१३, १४)

इति । तत्र प्रथमे त्रयः सुप्रसिद्धाः । तिरोभावो नाम देव्या स्वात्मरूपस्यापरिच्छिन्नज्ञानानन्दमयस्याप्रकाशनम्; येन त्रैगुण्यपरवशा जना तत्स्वरूपं यथावन्न जानन्ति । अनुग्रहो नाम संसारानलतप्तानां प्रजानां विषये जातया निरुपाधिककृपया व्याजमात्रमपेक्ष्य तासां संसारादुन्मोचनम्; तदर्थं तासां जायमानदशायां कृपयावेक्षणं च; यथोक्तम् महाभारते—

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥"
(शान्तिपर्व, ३९८-७३)

इति । तथा—

"एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥"
(अहिर्बुध्न्यसंहिता, १४-२८, २९)

इति च । एषोऽनुग्रहविशेष एव शक्तिपातनाम्ना तन्त्रशास्त्रेषु व्यवह्रियते; यथा—

"मया जीवा समीक्ष्यन्ते श्रिया दुःखविवर्जिताः ।

सोऽनुग्रह इति प्रोक्त शक्तिपातापराह्वय ॥"
(ल. त, १३ ८)

इति,

"अनुग्रहात्मिका शक्ति सा कृपा वैष्णवी परा।
शक्तिपात स वै विष्णोरागमस्थैर्निगद्यते ॥"
(अहिर्बुध्न्यसंहिता, १४ ३०)

इति च।

२४ पञ्चकालप्रक्रिया

अहोरात्रमेक पञ्चधा विभज्य तान् पञ्चापि कालविभागान् अच्छिद्रेण भगवत्पूजनेन यापयेदिति पाञ्चरात्रसिद्धान्त । ते च पञ्च कालभेदा यथा—

"आद्य कर्माभिगमनमुपादान तत परम्।
इज्या च पश्चात् स्वाध्यायस्ततो योगस्तत परम्।
पञ्चैत विषयस्तेषा काला पञ्चैव ते क्रमात् ॥"
(पाद्मसंहिता, चर्यापाद, १३-३)

इति। अभिगमनोपादानादिधर्मार्हकालत्वात् तेऽपि कालभेदा अभिगमनादिनामभिर्व्यवह्रियन्ते। अभिगमनादि स्वरूप यथा—

"ब्राह्मान्मुहूर्तादारभ्य प्रागश विप्र वासरे।
जपध्यानार्चनस्तोत्रै कर्मवाक्चित्तसंयुतै ॥
अभिगच्छेज्जगद्योनि तच्चाभिगमन स्मृतम्।
तत पुष्पफलादीनामुत्थायार्जनमाचरेत् ॥
भगवद्यागनिष्पत्तिकारण प्रहर परम्।
तदुपादानमङ्ग वै यथाकालमुदाहृतम् ॥
ततोऽष्टाङ्गेन यागेन पूजयेत् परमेश्वरम्।
सार्धं तु प्रहर विप्र इज्याकालस्तु स स्मृत ॥
श्रवण चिन्तन व्याख्या तत पाठसमन्विता।
स्वाध्यायसज्ञ तद्विद्धि कालांश मुनिसत्तम ॥
दिनावसान सप्राप्ते पूजा कृत्वा समभ्यसेत्।
योगं निशावसाने च विघ्नैरन्तरीकृतम्।
पञ्चमो योगसज्ञोऽसौ कालांशो ब्रह्मसिद्धिद ॥"
(जयाख्यसंहिता, अ. २२, श्लो. ६८-७४)

इति। तथा लक्ष्मीतन्त्रेऽपि—

"आरंभ्य मुहूर्ताद्ब्राह्मात् सर्वभूतसुखोदयम्।

भवन्तु सर्वभूतानि सात्त्विके विमले पथि ।
भजन्तां श्रीपतिं शश्वद्विशन्तु परमं पदम् ॥"
(२८-१८, १९)

इत्यारभ्य पञ्चकालकृत्यान्युपवर्णितानि । पाञ्चरात्रिकैः कर्तव्यानां पञ्चानां कर्मणां प्रत्येकं कालपरिमितिश्चेत्थम्—प्रभाते ब्राह्ममुहूर्तमारभ्य दिनस्य प्रथमप्रहरपर्यन्तोऽभिगमनस्य कालः । द्वितीयप्रहर उपादानस्य कालः । सार्धतृतीयप्रहर इज्यायाः कालः । किंचित्सावशेषस्तुरीयप्रहरः स्वाध्यायस्य कालः । तत उपरि रात्रेः प्रथमप्रहरपर्यन्तः संध्याजपहोमदेवपूजादिकालः । रात्रेः द्वितीयतृतीयप्रहरौ तुरीयप्रहरादिमभागश्च योगकालः । स एव यथावसरं नान्तरीयकनिद्राकालश्च । पुनरपि ब्राह्ममुहूर्तमारभ्य प्राग्वदिति । अनेन क्रमेण कर्मानुष्ठानमेवाच्छिद्रपञ्चकालविधानमित्युच्यते । विशेषविधिस्थले तु पूर्वोक्तकालविभागे यथावश्यकं संकोचविस्तारौ कर्तव्यौ ।

## २५. लक्ष्मीतन्त्रावगतः सृष्टिक्रमः

परस्य ब्रह्मणो मूर्तममूर्तं चेति द्वे रूपे । तत्रामूर्तं विग्रहरहितं ज्ञानशक्त्यादिगुणगणभरितं निवातस्तिमितोदधिवदुन्मेषादिरहितं शान्तं तथाविधश्रीविशिष्टं सर्वव्यापि च । मूर्तं श्रीसहितवासुदेवाख्यं नामान्तरेण लक्ष्मीनारायणाख्यमप्राकृतदिव्यमङ्गलविग्रहविशिष्टं ज्ञानशक्त्यादिगुणपरिपूर्णं स्वानन्दानुभवनित्यतृप्तं नित्यमुक्तभोग्यमनन्तपरिजनपरिच्छदपरिवृतं च । अस्य च वासस्थानमप्राकृतानन्दस्वरूपं श्रीवैकुण्ठनामकम् ।

### सृष्टौ शुद्धाध्वा

श्रियः सिसृक्षया चत्वारो भगवद्व्यूहा आविर्भूताः; ते यथा—वासुदेवः, संकर्षणः, प्रद्युम्नः, अनिरुद्धः । एते व्यूहा जगद्व्यापारकरणार्थं चतुर्व्यूहोपासननिरतानां योगिनां ध्यानालम्बनार्थं चाविर्भूय ध्यानसौकर्याय रूपचतुष्केण प्रकाशन्ते । यथा—

| | | |
|---|---|---|
| तुर्यस्थानम् | — | व्यूहचतुष्कं रेखारूपेणापि न दृश्यम् । |
| सुषुप्तिस्थानम् | — | ,, रेखारूपेण दृश्यम् । |
| स्वप्नस्थानम् | — | ,, अत्यन्तमलिनरूपम् । |
| जाग्रत्स्थानम् | — | ,, स्पष्टरूपम् । |

इदं च ध्वजस्तम्भाकारं रूपं विशाखयूपनाम्ना प्रथितम् । पूजितस्तम्भाभिप्रायेण यूपशब्दप्रयोगः । एभ्यो व्यूहेभ्यो द्वादश देवा व्यूहान्तरनाम्ना आविर्भूताः । यथा—वासुदेवात् केशवनारायणमाधवाः ।

सकर्षणात् गोविन्दविष्णुमधुसूदना । प्रद्युम्नात् त्रिविक्रमवामनश्रीधरा । अनिरुद्धात् हृषीकेशपद्मनाभदामोदरा । शुद्धाध्वगता एते सर्वेऽपि देवा अप्राकृतलोके विराजन्ते, शुद्धसत्त्वमयाश्च ।

पूर्वोक्तात् विशाखयूपात् पद्मनाभादयोऽष्टत्रिंशत् विभवदेवा आविर्भूता । एभ्यो विभवेभ्यो विभवान्तरनामान बहवोऽवतारा बादरायणादिरूपेणास्मिन् लोके भवन्ति । पूर्वोक्तात् विशाखयूपादेवार्चारूपा देवा आविर्भूय देवालयेषु सपूजिता विराजन्ते । एते विभवादयो देवा प्राकृतलोके कृतावतरणा, शुद्धसत्त्वमयाश्च । अत एवाय क्रम शुद्धाध्वेत्युच्यते ।

अशुद्धाध्वा

पूर्वनिर्दिष्टया देव्या सिसृक्षयैवाशुद्धाध्वाविर्भाव । यथा—षाड्गुण्ये ज्ञान सत्त्वात्मना, ऐश्वर्य रजोरूपेण, शक्ति तमोरूपेण च परिणम्य त्रैगुण्यरूपमवापु । ततो देव्या श्रिय एव रजोगुणप्रधाना महालक्ष्मी, तमोगुणप्रधाना महामाया, सत्त्वगुणप्रधाना महाविद्या चाविर्बभूवु । तत प्रद्युम्नाशात् महालक्ष्म्या मानस धाता श्रीश्च, सकर्षणाशात् महामायाया मानस रुद्र त्रयी च, अनिरुद्धाशात् महाविद्याया मानस केशव गौरी चेति सजाता । एतत् प्रथम पर्व ।

ततो धाता त्रय्या सह सभूय अण्डमजीजनत् । रुद्र गौर्या सह सभूय तत् अभिनत् । केशव श्रिया सह सभूयाण्डमध्यस्थ प्रधानमरक्षत् । तत केशव प्रधान सलिलीकृत्य तत्र श्रिया सहाशयिष्ट । एतत् द्वितीय पर्व ।

सलिले शयानस्य केशवस्य नाभे कालमय कमल समभवत् । तस्मिन् नाभिकमले त्रय्या सह धाता पुन प्रादुर्बभूव । नाभिकमल त्रयी धाता चेति त्रयमपि मिलित्वा तामसो महान् जात । महतोऽहकार सजात । स चाहकारस्त्रिविध—सात्त्विक राजस, तामसश्चेति । सात्त्विकात् पञ्च ज्ञानेन्द्रियाणि, राजसात् पञ्च कर्मेन्द्रियाणि, उभयस्मान्मनश्च सजातानि । तामसात् शब्दतन्मात्रम्, तस्मात् शब्द स्पर्शतन्मात्र च, तत स्पर्श रूपतन्मात्र च, ततो रूप रसतन्मात्र च, ततो रस गन्धतन्मात्र च, ततो गन्ध इत्युत्पद्यन्ते । महान्तमारभ्य गन्धान्त सभूयाण्डमभवत् । तस्मात् चतुर्मुख प्रजापतिर्जज्ञे । प्रजापतेर्मनव । मनुभ्यो मानवादय चेतना अचेतनाश्च समजायन्त । एतत् तृतीय पर्व । एतानि त्रीण्यपि पर्वाणि त्रिगुणमयानि । अत एवाय क्रमोऽशुद्धाध्वेत्युच्यते ।

२६ लक्ष्मीतन्त्रम्

विष्णुपत्न्या लक्ष्मीदेव्या वैभवप्रतिपादनपरत्वात् लक्ष्मीतन्त्रमित्यन्वर्थं नाम । लक्ष्मीनाम्नो व्युत्पत्तिश्च या लक्ष्यमाणा सा लक्ष्मीरिति गीयते" (अहिर्बुध्न्यसहिता, ३ ९) इति कथिता । तन्त्र चेद

पाञ्चरात्रागमेष्वन्यतमतया परिगणितं विष्णुतन्त्रे; बहुभिर्ग्रन्थकारैस्तथा व्यवहृतं च। अहिर्बुध्न्यसंहितेव प्रायशः सर्वेष्वपि विषयेषु तन्त्रमिदं सात्वतसंहितामनुसृत्य प्रवृत्तम्। कचित् कचित् सात्वतसहितां नामतोऽपि निर्दिशति। श्रीवैष्णवसंप्रदायग्रन्थेषु विशिष्य च प्रपत्तिविषयेषु रहस्यत्रयसारनिक्षेपरक्षादिषु बहूनि वचनानीत उद्धृत्य व्याख्यातानि। अतो ज्ञायते पाञ्चरात्रसमये ग्रन्थस्यास्य सर्वथा प्रामाण्यं शिष्टपरिग्रहश्च जागर्तीति।

अपिच न केवलं पाञ्चरात्रिकैरेव, किंतु अन्यसमयिभिरपि तन्त्रस्यास्य प्रामाण्यमभ्युपगतमित्यव-गम्यते। तथाहि—चन्द्रकलास्तुतिव्याख्यायामप्पयदीक्षितैः "पाञ्चरात्रलक्ष्मीतन्त्रवचनानि प्रदर्श्यन्ते। तत्रेमानि शक्रं प्रति श्रीमहालक्ष्मीवचनानि; यथा—

महालक्ष्मीरहं शक्र पुनः स्वायंभुवेऽन्तरे।
हिताय सर्वलोकानां जाता महिषमर्दनी॥"

इत्यारभ्य,

"सर्वां संपदमाप्नोति धुनोति सकलापदः।
मम प्रभावात् सौभाग्यं कीर्तिं चैव समश्नुते॥"

(ल. त., अ. ९, श्लो. ८-९४)

इत्यन्तं पठितम्। तथा ललितासहस्रनामस्तोत्रस्य १०१तमश्लोकभाष्ये भास्कररायदीक्षितैः—"तदुक्तं मार्कण्डेयपुराणे पाञ्चरात्रे लक्ष्मीतन्त्रे च भगवत्यैव—

तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्।
दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति॥"

(ल. त., ९-३७)

इत्युक्तम्। तथा १०२तमश्लोकभाष्ये तत्रैव—"तदुक्तं पाञ्चरात्रलक्ष्मीतन्त्रे इन्द्रं प्रति देव्यैव—

महालक्ष्मीरहं शक्र पुनः स्वायंभुवेऽन्तरे।
हिताय सर्वलोकानां जाता महिषमर्दनी॥"

(ल. त., ९-८, ९)

इत्युक्तम्। एवं १२६तमश्लोकभाष्ये तत्रैव—"पाञ्चरात्रलक्ष्मीतन्त्रेऽपि—

वैवस्वतेऽन्तरे तौ च पुनः सुम्भनिसुम्भकौ।
उत्पत्स्येते वरोन्मत्तौ देवोपद्रवकारिणौ॥

नन्दगोपकुले जाता यशोदागर्भसंभवा ।
तावद् नाशयिष्यामि नन्दाख्या विन्ध्यवासिनी ॥"
(ल. त., ९-२८, २९)

इत्युक्तम् । एवं तैरेव दुर्गासप्तशत्या. त्रयोदशाध्यायस्य २९तमश्लोकव्याख्यायामुक्तम् —"तत्र पाञ्चरात्रलक्ष्मीतन्त्रे सर्वान्ते वर्णितम् —

एतासां परमा प्रोक्ता कूटस्था सा महीयसी ।
महालक्ष्मीर्महामाया प्रकृतिः परमेश्वरी ॥
अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः ।
नमोदेव्यादिकं सूक्तं सर्वकामफलप्रदम् ॥"
(ल. त., ९-४६, ४७)

इति । अत्र अप्पयदीक्षितैः भास्कररायदीक्षितैश्च 'पाञ्चरात्रलक्ष्मीतन्त्रे' इति पाञ्चरात्रविशेषणपुरस्कारेणास्य ग्रन्थस्य निर्देशात् पाञ्चरात्रातिरिक्तमपि किंचन लक्ष्मीतन्त्रमस्तीति प्रतीयते । उपलभ्यते च महालक्ष्मीतन्त्रमिति कामाक्षीवैभवप्रतिपादनपरं, लक्ष्मीतन्त्रमिति शिवपूजाप्रतिपादनपरं च ग्रन्थद्वयम् । तद्व्यावृत्त्यर्थमेव पाञ्चरात्रविशेषितं तन्त्रमिदमुपात्तं स्यादित्यूह्यते ।

नागेशभट्टेनापि दुर्गासप्तशत्यास्तुरीयाध्यायस्य ३६तमश्लोकव्याख्यायामुक्तम् —"एतामुपक्रम्य लक्ष्मीतन्त्रे लक्ष्मीवाक्यम् —

अभिष्टुता सुरैः साहं महिषं जघ्नुषी क्षणात् ।
महिषान्तकरीसूक्तं दृष्टं देवैर्महर्षिभिः ॥
उत्पत्तिं युद्धविक्रान्तिं स्तोत्रं चेति सुरेश्वर ।
कथयन्ति सुविस्तीर्णं ब्राह्मणा वेदपारगाः ॥"
(ल. त., अ. ९, श्लो. ११-१३)

इति । ललितोपाख्याने च सप्तविंशोऽध्याये—

"आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥"
(ल. त., १७-६०, ६१)

इत्यत्रत्यं वचनमुपात्तम् । अयं च लक्ष्मीतन्त्रग्रन्थः शतकोटिप्रविस्तरात् मूलभूतात् लक्ष्मीतन्त्रात् सारतया संगृह्यादौ श्रीदेव्या शक्रायोपदिष्टमित्युच्यतेऽत्रैव (४४-५२) तन्त्रे । श्रीदेवीशक्रसंवादरूपेणादौ प्रवृत्तमिदं तन्त्रं पश्चात् नारदेन देवर्षिणा मलयगिरिस्थेभ्यो महर्षिभ्यः प्रोक्तमित्युक्त्वा महर्षिणात्रिणा स्वपत्न्यै अनसूयायै उपदिष्टम् । यद्यप्यत्र तन्त्रान्तरेष्विव ज्ञानादिपादविभागो न दृश्यते, तथापि ज्ञानादिपादचतुष्टयप्रतिपाद्या विषयाः प्रतिपादिता भवन्ति । अत एव तन्त्रार्थसंग्रहरूपे अस्योपरितने भागे "क्रियापादं प्रवक्ष्यामि संक्षेपेण पुरंदर" (५३-१) इति क्रियापादनिर्देशः कृतः ।

एतद्ग्रन्थप्रकाशनाय संपादितेषूपदशेषु कोशेष्वेकं विहायान्येषु सर्वेष्वपि पञ्चाशतैवाध्यायैर्ग्रन्थः परिसमापितः । एकस्मिन् परमुपरि तन्त्रार्थसंग्रहनाम्ना कतिचिदध्याया उपलब्धाः । ते चैकपञ्चाशमारभ्य सप्तपञ्चाशपर्यन्तैरध्यायैः परिगणिताः । तेऽप्यध्याया अत्रान्ते प्रकाशिताः । मध्ये पञ्चपञ्चाशस्यान्तिमो भागः षट्पञ्चाशोऽध्यायश्च लुप्तः । इदमत्रावधेयम्—आदौ अनसूयात्रिसंवादरूपेणोपक्रान्तोऽयं ग्रन्थः तत्संवाद-परिसमाप्तिनिर्देशेनैव समापनीय इति न्याय्या ग्रन्थशैली । पञ्चाशेऽध्याये तु तथा परिसमाप्तिर्नोपलभ्यते । प्रत्युत "किं भूयः श्रोतुमिच्छसि" (५०-२३७) इति पूर्वतनेष्वध्यायेष्विव शक्रप्रश्नावकाशदानेनैव समाप्तिर्दृश्यते । अत उपरितनेनापि भागेनावश्यं भाव्यं, यत्रानसूयात्रिसंवादपरिसमाप्तिर्निर्दिष्टा स्यादिति ।

ग्रन्थेऽस्मिन्नध्यायक्रमेण प्रतिपादिता विषया विषयानुक्रमण्यां प्रदर्शिता ज्ञेयाः ।

---

# विषयानुक्रमणी


अध्यायः — श्लोकाः

१. शास्त्रावतारः
मङ्गलाचरणम् .. १, २
अत्रिसमीपे अनसूयया लक्ष्मीमाहात्म्यकथनाय प्रार्थना .. ३–१६
अत्रिणा नारदस्य ऋषीणां च संवादरूपस्य पुरावृत्तस्य कथनम् .. १७–५४
शक्रेण श्रीदेव्याः सकाशे तन्महिमवर्णनप्रार्थनम् .. ५६–६०

२. शुद्धमार्गप्रकाशः
परमात्मनो वासुदेवस्य श्रियश्च स्वरूपवर्णनम् .. १–२४
षाड्गुण्यस्वरूपकथनम् .. २५–३६
शुद्धसृष्टौ चातुरात्म्यकथनम् .. ३७–६१

३. त्रैगुण्यप्रकाशः
ज्ञानैश्वर्यशक्तीनां सत्त्वरजस्तमोरूपेण परिवृत्तिः .. १–९
शुद्धाशुद्धसृष्टेः प्रयोजनम्, विषमसृष्टौ जीवानां कर्मैव निमित्तम .. १०–३७

४. महालक्ष्मीसमुद्भूतिः
वासुदेवादिव्यूहरूपेषु प्रत्येकं द्वयोर्द्वयोर्गुणयोरुन्मेषः .. १–१६
तेषां व्यापारविशेषाः .. १७–२०
तेषां षाड्गुण्यमयत्वमप्राकृतविग्रहत्वं च .. २१–२६
व्यूहान्तरविभवार्चानां रूपाणि .. २७–३१
त्रिगुणाया महालक्ष्म्याः स्वरूपनामादिकम् .. ३२–५६
महालक्ष्मीतो महामायाया महाविद्यायाश्चाविर्भावः .. ५७–६७

५. प्राकृतसृष्टिप्रकाशः
संकर्षणादिदेवांशतया स्त्रीपुंसरूपेण देवानां मिथुनत्रयस्याविर्भावः .. १–१४

| अध्याय | | श्लोका |
|---|---|---|
| | प्रधानकालहिरण्यगर्भमहदहकारभूतमात्रेन्द्रियाणा सृष्टि | १५–७८ |
| | मनुमानवादीना सृष्टि | ७९–८५ |
| ६. | षट्कोशप्रकाश | |
| | षण्णा कोशाना नामनिर्देश | १–४ |
| | शक्तिकोश | ५–१७ |
| | मायाप्रसूतिप्रकृतिकोशा | १८–२२ |
| | ब्रह्माण्डजीवदेहकोशौ | २३–२५ |
| | षट्कोशस्थाना तत्त्वाना स्वरूपम् | २६–४० |
| | तत्त्वसख्यापरिगणनम् | ४१–४५ |
| ७. | प्रमातृकरणप्रकाश | |
| | तत्त्वाना सग्रहेण स्वरूपकथनम् | १–१७ |
| | प्रमातृदशायाश्चातूरूप्यत्रैरूप्यद्वैरूप्यैकरूप्याणि | १८–२७ |
| | करणदशानिरूपणम् | २८–४२ |
| | प्रमेयकथनम् | ४३–४८ |
| ८. | लक्ष्म्यवतारप्रकाश | |
| | भगवतो नारायणस्य परव्यूहरूपाणि सर्वाण्यपि शक्त्यविनाभूतानि | १–१५ |
| | अनिरुद्धस्य विभवाद्यवतारेषु श्रियोऽपि तत्तन्नुगुणावतारग्रहणेन तदनुसरणम् | १६–५० |
| ९. | केवलावतारप्रकाश | |
| | महालक्ष्म्या महिषमर्दन्यवतार | १–१४ |
| | ,, महाकाल्यवतार | १५–१९ |
| | ,, कौशिक्यवतार | २०–२७ |
| | ,, सुनन्दाख्यविन्ध्यवासिन्यवतार | २८, २९ |
| | ,, रक्तदन्तिकावतार | ३०–३२ |
| | ,, शाकभर्यवतार | ३३–३६ |
| | ,, दुर्गावतार | ३७ |
| | ,, भीमावतार | ३९ ४० |
| | ,, भ्रामर्यवतार | ४१–४३ |
| | अवतारस्वरूपज्ञानफलश्रुति | ४४–४९ |

| अध्यायः | | श्लोकाः |
|---|---|---|
| १०. | परव्यूहप्रकाशः | |
| | परस्वरूपनिरूपणम् | १–१७; २७–३० |
| | सुषुप्तिस्थानस्वरूपनिरूपणम् | १८–२१; ३१–३३ |
| | स्वप्नस्थानस्वरूपनिरूपणम् | २२–२५; ३४–३६ |
| | जाग्रत्स्थानस्वरूपनिरूपणम् | .. २६, २७ |
| ११. | विभवप्रकाशः | |
| | परव्यूहस्वरूपानुवादः | .. १–१० |
| | विशाखयूपनिरूपणम् | ११–१८ |
| | पद्मनाभादिविभवनामनिर्देशः | .. १९–२६ |
| | विभवाना स्थानादि | .. २७–२९ |
| | व्यूहान्तराणि | .. ३०–३९ |
| | व्यूहाद्यवतारप्रयोजनम् | .. ४०–५४ |
| १२. | तिरोभावादिशक्तिप्रकाशः | |
| | जीवाना क्लेशकर्मविपाकाशयैरभिभवः | .. १–८ |
| | क्लेशभेदनिरूपणम् | .. ९ |
| | देव्याः तिरोभावादिशक्तयः पञ्च | .. ११–१४ |
| | तिरोभावशक्तिनिरूपणम् | .. १५, १६ |
| | अविद्यायाः पञ्च पर्वाणि | .. २०–२७ |
| | कर्मनिरूपणम् | .. २८–३० |
| | विपाकनिरूपणम् | .. ३१ |
| | आशयनिरूपणम् | .. ३२–३५ |
| | सृष्टिशक्तिनिरूपणम् | .. ३६–४७ |
| | स्थितिशक्तिनिरूपणम् | .. ४८–५२ |
| | संहारशक्तिनिरूपणम् | .. ५३–५७ |
| १३. | जीवस्वरूपप्रकाशः | |
| | अनुग्रहशक्तिनिरूपणम् | .. १–१५ |
| | जीवयाथात्म्यनिरूपणम् | .. १६–२६ |
| | जीवानामपि सृष्ट्यादीनि पञ्च कृत्यानि | .. २७–३९ |

| अध्याय | | श्लोका |
|---|---|---|
| १४. | लक्ष्मीस्वरूपप्रकाश | |
| | लक्ष्म्या ज्ञानज्ञेयरूपसर्ववस्त्वात्मकत्वम् | १–५८ |
| १५. | उपायप्रकारप्रकाश | |
| | मोक्षोपायप्रश्न | १–७ |
| | मोक्षोपाया कर्मसाख्ययोगसर्वसन्यासरूपा | ८–१७ |
| | कर्माख्योपायनिरूपणम् | १८–२३ |
| | साख्याख्योपायनिरूपणम् | २४–२६ |
| | तत्त्वपरिगणनाख्यसख्याया प्रकृतितत्त्वम् | २७–३६ |
| १६. | उपायप्रकारविवरणम् | |
| | महत्तत्त्वनिरूपणम् | १–४ |
| | अहकारस्य तत्कार्याणा च निरूपणम् | ५–२५ |
| | चर्चासम्यग्ज्ञानाख्यसख्ययोर्निरूपणम् | २६–२९ |
| | योगाख्योपायनिरूपणम् | ३०–४१ |
| | सर्वसंन्यासाख्योपायोपक्षेप | ४२–४४ |
| १७. | रहस्योपायप्रकाश | |
| | परमपदस्वरूपम् | १–३६ |
| | न्यासाख्योपायस्य भगवन्नारायणोपदिष्टत्वम् | ३७–५६ |
| | न्यासस्वरूपम् | ५९ |
| | न्यासस्य षडङ्गानि, महिमा च | ६०–६३ |
| | षण्णामङ्गाना स्वरूपम् | ६५–७४ |
| | न्यासस्य पर्यायनामानि | ७५ |
| | षण्णामङ्गानामुपकारकत्वम् | ७७–८२ |
| | न्यासस्वरूपशोधनम् | ८३–१०७ |
| १८. | मन्त्रस्वरूपकथनम् | |
| | मन्त्रविषयक प्रश्न | १–१० |
| | शब्दब्रह्मण शान्तावस्थत्वम् | ११–१९ |
| | शब्दब्रह्मणो नादबिन्दुमध्यमावैखरीरूपपरिग्रह | २०–२७ |
| | नादादीना वासुदेवादयो वाच्या | २८–३० |

| अध्यायः | | | श्लोकाः |
|---|---|---|---|
| | शब्दब्रह्मतो मन्त्राणामाविर्भावः | .. | ३१–३७ |
| | मन्त्राणां सकलशब्दप्रपञ्चकारणत्वम् | .. | ३८–४५ |
| | तारिकादीनां मन्त्राणा कथनम् | .. | ४६–५१ |
| १९. | वर्णोत्पत्तिनिरूपणम् | | |
| | सृष्टिशक्तेः अनुत्तरादिपञ्चदशस्वराविर्भावः | .. | १–१० |
| | मादिकान्तव्यञ्जनेभ्यः पुरुषादिपृथिव्यन्ततत्त्वोद्गमः | .. | ११, १२ |
| | यादिवान्तेभ्यः धारणाचतुष्कोद्गमः | .. | १३–१५ |
| | शादिक्षान्ता ब्रह्मपञ्चकाधिष्ठिताः | .. | १६–१८ |
| | तेषामेव वर्णाना विशिष्य तत्त्वविशेषकारणत्वम् | .. | १९–४६ |
| २०. | मातृकाप्रकाशः | | |
| | वर्णानां चातुर्व्यूहपरिकल्पनेन वासुदेवादिव्यूहदेवताधिष्ठेयत्वनिरूपणम् | .. | १–५२ |
| २१. | गुरुशिष्यलक्षणम् | | |
| | षाड्गुण्यस्य चातुर्व्यूहरूपेण बीजपिण्डसंज्ञापदाख्यमन्त्ररूपेण चाविर्भावः | .. | १–२८ |
| | आचार्यलक्षणम् | .. | २९–३६ |
| | शिष्यलक्षणम् | .. | ३७–४१ |
| २२. | षडध्वमन्त्रस्वरूपकथनम् | | |
| | वर्णकलातत्त्वमन्त्रपदभुवनाख्याः षडध्वानः | .. | १–११ |
| | तत्राद्यानां त्रयाणामनुवादपूर्वकं मन्त्राध्ववर्णनम् | .. | १२–२१ |
| | पदाध्ववर्णनम् | .. | २२–२६ |
| | भुवनाध्ववर्णनम् | .. | २७, २८ |
| | मन्त्रमहिम्नोत्तमपदप्राप्तिः | .. | २९–३१ |
| | मन्त्राणामुत्तममध्यमाधमभेदाः | .. | ३२–३९ |
| २३. | मातृकाप्रकाशः | | |
| | मातृकापीठपरिकल्पनम् | .. | १–११ |
| | मातृकापीठेऽक्षरविन्यासः | .. | १२–२० |
| | मातृकातनौ अक्षरविन्यासः | .. | २१–२७ |
| | मातृकापूजा | .. | २८–३३ |

| अध्यायः | | श्लोकाः |
|---|---|---|
| | मन्त्रोद्धारः .. | २४, ३५ |
| | सप्त बीजमन्त्राः .. | ३६–३९ |
| २४. | तारप्रकाशः | |
| | तारमन्त्रोद्धारः .. | १–७ |
| | तारस्थवर्णाधिदेवताः .. | ८–१२ |
| | तारस्वरूपम् .. | १३–२० |
| | तारात् शब्दार्थप्रपञ्चोत्पत्तिः .. | २१, २२ |
| | तारस्य अङ्गन्यासः .. | २३ |
| | ,, लययोगः .. | २४–३२ |
| | ,, शिष्यायोपदेशः .. | ३३, ३४ |
| | ,, पुरश्चरणम् .. | ३५–४४ |
| | ,, महिमा .. | ४५–५२ |
| | ,, प्रासादमन्त्रः .. | ५२, ५३ |
| | ,, सज्ञामन्त्रः, अस्त्रमन्त्रश्च .. | ५४–६५ |
| | ,, परमात्ममन्त्रः .. | ६६ |
| | ,, पदमन्त्राः, व्यापकमन्त्राः .. | ६७–७६ |
| २५. | तारानुताराप्रकाशः | |
| | वर्णसज्ञानिरूपणम् .. | १–३५ |
| | तारिकामन्त्रोद्धारः .. | ३६–४४ |
| | तारिकाया नामान्तराणि .. | ४५–४७ |
| | अनुतारिकामन्त्रोद्धारः .. | ४८–५१ |
| २६. | सप्तविद्याप्रकाशः | |
| | तारादिसप्तबीजमन्त्रमहिमा .. | १–४३ |
| २७. | सदाचारप्रकाशः | |
| | हृल्लेखामन्त्रोद्धारः, मन्त्रमहिमा च .. | १–१६ |
| | तस्याः पञ्च रूपाणि .. | १७–२४ |
| | तस्य मन्त्रस्य शिष्यायोपदेशक्रमः .. | २५–२७ |
| | उपदेशग्रहणानन्तरं शिष्यकृत्यानि .. | २८–४९ |

| अध्याय: | | श्लोका: |
|---|---|---|
| २८. सदाचारप्रकाशः | | |
| अभिगमननिरूपणम् | .. | १–२३ |
| उपादाननिरूपणम् | .. | २४, २५ |
| इज्यानिरूपणम् | .. | २६–२८ |
| स्वाध्यायनिरूपणम् | .. | २९–३७ |
| योगनिरूपणम् | .. | ३७–५० |
| पञ्चकालकृत्यमहिमा | .. | ५१–५९ |
| २९. अग्नीषोमविभागप्रकाशः | | |
| क्रियाशक्तिः सूर्यात्मकत्वम् | .. | १–३२ |
| ,, अग्न्यात्मकत्वम् | .. | ३३–३५ |
| ,, सोमात्मकत्वम् | .. | ३६–४१ |
| ,, सुदर्शनात्मकत्वम् | .. | ४२–५४ |
| सुदर्शनबीजपिण्डमन्त्रोद्धारः | .. | ५५–७१ |
| ३०. क्रियाशक्तिप्रकाशः | | |
| सुदर्शनपदमन्त्रोद्धारः | .. | १–६ |
| सुदर्शनषडक्षरमन्त्रमहिमा | .. | ७–१० |
| सुदर्शनचक्रे अक्षरादिविन्यासक्रमः | .. | ११–६५ |
| ३१. सुदर्शनप्रकाशः | | |
| सुदर्शनसंज्ञामन्त्रमहिमा | .. | १–३२ |
| सुदर्शनगायत्रीमन्त्रः | .. | ३३–३६ |
| सुदर्शनमुद्रा | .. | ३७–३९ |
| सुदर्शनशक्तिप्रसनमन्त्रः | .. | ४०–४४ |
| सुदर्शनषडक्षरमन्त्रध्यानम् | .. | ४५–८२ |
| ३२. स्थूलादिप्रकाशः | | |
| तारिकायाः स्थूलरूपम | .. | १–११ |
| ,, सूक्ष्मरूपम् | .. | १२–१४ |
| ,, पररूपम् | .. | १५–३७ |
| ,, सकलवर्णरूपत्वम् | .. | ३८–६६ |

अध्यायः श्लोकाः

३३. अङ्गोपाङ्गादिमन्त्रप्रकाशः

तारिकाया अङ्गमन्त्राः .. १–१०
,, उपाङ्गमन्त्राः .. ११–१३
,, अलंकारमन्त्राः . १४–२३
,, अस्त्रमन्त्राः .. २४–२८
,, आधारमन्त्राः .. २९–३९
,, आधारेशमन्त्राः .. ४०–४४
,, अव्यक्तपद्ममण्डलचिद्वासनमन्त्राः .. ४५–४८
क्षेत्रेशादिमन्त्राः ४९–६०
गणेशादिमन्त्राः . ६१–११३
मन्त्रमहिमा ११४–१२२

३४. स्नानविधिप्रकाशः

मुद्राबन्धनकालः . १–३
महाश्रीमुद्रा .. ४–६
शक्तिमुद्रा ७–९
योनिमुद्रा १०–१४
लक्ष्मीकीर्तिजयामायामुद्राः १५–१७
हृदयमुद्रा १७, १८
शिरोमुद्रा १९
शिखामुद्रा २०–२२
कवचमुद्रा २३, २४
नेत्रमुद्रा २५, २६
अस्त्रमुद्रा २७, २८
उपाङ्गमुद्राः २९, ३०
कौस्तुभमुद्रा ३१–३३
वनमालामुद्रा ३४, ३५
पद्ममुद्रा ३६
पाशमुद्रा ३७–३९
अनन्तमुद्रा .. ४०–४३
पृथिवीमुद्रा .. ४४, ४६

| अध्यायः | श्लोकाः |
|---|---|
| क्षीरार्णवमुद्रा | ४६–४८ |
| धर्मादिमुद्राः | ४९–५१ |
| धामत्रयमुद्राः | ५२, ५४ |
| चिद्दासनमुद्रा | ५४, ५५ |
| क्षेत्रेशादिमुद्राः | ५६–५८ |
| श्रीबीजमुद्रा | ५८–६० |
| जयमुद्रा | ६०, ६१ |
| विजयमुद्रा | ६२ |
| यामुनमुद्रा | ६२, ६३ |
| शङ्खनिधिमुद्रा | ६३ |
| पद्मनिधिमुद्रा | ६४ |
| गणेशमुद्रा | ६५–६८ |
| वागीश्वरीमुद्रा | ६९–७२ |
| गुरुमुद्रा | ७३, ७४ |
| पितृगणमुद्रा | ७४–७६ |
| सिद्धमुद्रा | ७७, ७८ |
| वराभयदमुद्रे | ७८, ७९ |
| विष्वक्सेनमुद्रा | ८३–८५ |
| आवाहनमुद्रा | ८५ |
| विसर्जनमुद्रा | ८६, ८७ |
| कामधेनुमुद्रा | ८७–८९ |
| स्नानस्यावश्यकता | ९३ |
| त्रिविधस्नाननिरूपणम् | ९४–११० |
| मृत्तिकास्नानविधिः | १११–१२१ |
| मन्त्रस्नानम् | १२२ |
| ध्यानस्नानम् | १२२–१४१ |
| ३९. भूतशुद्धिप्रकाशः | |
| भूतसूक्ष्मादीनां स्वस्वकारणेषु लयचिन्तनम् | १–५१ |
| ततः पिण्डोत्पत्तिचिन्तनम् | ५२–५४ |
| मन्त्राणामङ्गन्यासविधिः | ५५–८१ |

| अध्याय | | श्लोका |
|---|---|---|
| ३६. | अन्तर्यागप्रकाश | |
| | मानसिकमाधारशक्त्यादिपरिकल्पनम् | १–३१ |
| | तत्र लक्ष्मीनारायणध्यानम् | ३२–६७ |
| | नारायणात् पुरुषसूक्तस्य, लक्ष्म्या श्रीसूक्तस्य चाविर्भाव | ६८–७४ |
| | पुरुषसूक्तविधि | ७५–११४ |
| | श्रीसूक्तविधि | १२१–१४० |
| | मानसिकहोमविधि | १४१–१५० |
| ३७. | बाह्ययागप्रकाश | |
| | पूजामण्डपादिपरिकल्पनम् | १–२४ |
| | अर्घ्यादिपरिकल्पनम् | २५–३२ |
| | पूजाद्रव्यसंस्कार | ३३–४० |
| | परिवारध्यानम् | ४१–७५ |
| ३८. | बहिर्यागप्रकाश | |
| | देवस्य सान्निध्ययाचनम् | १–१३ |
| | लययाग | १४–२१ |
| | देवीयाग | २२–२६ |
| | पद्मे लक्ष्मीनारायणध्यानम् | २७–८४ |
| ३९. | बहिर्यागप्रकाश | |
| | मन्त्रासनार्चनम् | १–४ |
| | स्नानासनार्चनम् | ५–१७ |
| | अलङ्कारासनार्चनम् | १८–२६ |
| | भोज्यासनार्चनम् | २६–३० |
| | मन्त्रासनार्चनम् | ३१ |
| | पर्यङ्कासनार्चनम् | ३२ |
| | मन्त्रजपनियमा | ३३–३५ |
| | अक्षमालालक्षणम् | ३६–४७ |
| ४०. | नित्यविधिप्रकाश | |
| | अक्षमालाप्रतिष्ठाविधि | १–१७ |

| अध्यायः | | | श्लोकाः |
|---|---|---|---|
| | पूजाकाले घण्टानादस्यावश्यकता | .. | १९–२९ |
| | प्रापणदानम् | .. | २९–३० |
| | वह्नितर्पणम् | .. | ३०–८३ |
| | विष्वक्सेनार्चनशेषस्य विनियोगः | .. | ८४ |
| | लोकपालाद्यर्चनम् | .. | ८५–८९ |
| | पितृतर्पणम् | .. | ९०–९३ |
| | अनुयागविधिः | .. | ९४–९९ |
| | दिनशेषकृत्यम् | .. | १०० |
| | इज्याया आवश्यकता, यथाशक्त्यनुष्ठानं च | .. | १०४–११९ |
| ४१. | दीक्षाभिषेकप्रकारः | | |
| | दीक्षाशब्दनिर्वचनम्, त्रिविधा दीक्षा | .. | १–७ |
| | चतुर्विधा दीक्ष्याः | .. | ८ |
| | दीक्षाकरणविधिः | .. | ९–६६ |
| ४२. | तारामन्त्रोपासनक्रमः | | |
| | तारिकामन्त्रपुरश्चरणविधिः | .. | १–४३ |
| | तारिकामन्त्रस्य विनियोगः, तत्फलं च | .. | ४३–७७ |
| ४३. | नानायोगप्रकाशः | | |
| | देहस्य मुख्याङ्गेषु भूतेषु च तारिका विन्यस्य ध्यानम् | .. | १–१६ |
| | सर्वाण्यपि देहस्थभूतानि स्वस्वकारणेषु विलाप्य शून्यभावावस्थायां ध्यानम् | .. | १७–१९ |
| | ज्ञानं ज्ञेयानि चैकीकृत्यावस्थितौ ध्यानम् | .. | २०–३६ |
| | देहस्थेषु द्वात्रिंशत्पद्मेषु तारिकाया ध्यानम् | .. | ३७–४८ |
| | सर्वमपि लक्ष्मीनारायणात्मना संकल्प्य ध्यानम् | .. | ४९–५९ |
| | योगिनियमाः | .. | ६०–९४ |
| | मनोनिग्रहोपायाः | .. | ९५–११८ |
| ४४. | रहस्यप्रकाशः | | |
| | तारिकासंज्ञामन्त्रोद्धारः | .. | १–१३ |
| | तारिकापदमन्त्रपाठः | .. | १४, १५ |
| | पदमन्त्राणामङ्गन्यासादिकम् | .. | १८–२५ |

| अध्याय | | श्लोक |
|---|---|---|
| | पद्ममन्त्रपरिवार | २६–५१ |
| | तारिकामन्त्रमहिमा | ५२–६३ |
| ४५. | मूर्तिप्रकाश | |
| | लक्ष्म्यादिमूर्तिमहिमा | १–१४ |
| | लक्ष्मीस्वरूपमन्त्रादि | १५–२९ |
| | लक्ष्मीसखीस्वरूपमन्त्रादि | ३०–३४ |
| | लक्ष्म्यनुचरस्वरूपमन्त्रादि | ३५–३९ |
| | कीर्तिस्वरूपमन्त्रादि | ४०–४६ |
| | कीर्तिसखीस्वरूपमन्त्रादि | ४७–४९ |
| | कीर्त्यनुचरस्वरूपमन्त्रादि | ५०–५६ |
| | जयास्वरूपमन्त्रादि | ५७–६४ |
| | जयासखीस्वरूपमन्त्रादि | ६५–६९ |
| | जयानुचरस्वरूपमन्त्रादि | ७०–७४ |
| | मायास्वरूपमन्त्रादि | ७५–८२ |
| | मायासखीस्वरूपमन्त्रादि | ८३–८७ |
| | मायानुचरस्वरूपमन्त्रादि | ८८–९३ |
| | लक्ष्म्यादिमूर्तिमहिमा | ९४–१०१ |
| | तत्सख्यादीना मुद्रा | १०२–१२३ |
| ४६. | लक्ष्मीमन्त्रसिद्धिप्रकाश | |
| | लक्ष्मीमन्त्रसाधनविधि | १–४० |
| ४७. | कीर्तिमन्त्रसिद्धिप्रकाश | |
| | कीर्तिमन्त्रसाधनविधि | १–३५ |
| ४८. | जयामन्त्रसिद्धिप्रकाश | |
| | जयामन्त्रसाधनविधि | १–३७ |
| ४९. | प्रतिष्ठाविधानम | |
| | मायामन्त्रसाधनविधि | १–५८ |
| | लक्ष्मीनारायणमूर्तिप्रतिष्ठाविधि | ६३–१४९ |

| अध्यायः | | श्लोकाः |
|---|---|---|
| ५०. श्रीसूक्तप्रभावप्रकाशः | | |
| लक्ष्मीनारायणार्चने श्रीसूक्तविधानम् | .. | १–३५ |
| श्रियः हिरण्यवर्णेत्यादित्रिपञ्चाशन्नाम्नां निर्वचनम् | .. | ३६–२०४ |
| श्रीसूक्तमहिमा | .. | २०५–२११ |
| श्रीप्रपत्तिनिरूपणम् | .. | २१२–२२२ |
| श्रीसूक्तलक्ष्मीतन्त्रयोः फलश्रुतिः | .. | २२३–२३७ |
| ५१. एकपञ्चाशोऽध्यायः | | |
| लक्ष्मीतन्त्रार्थसंग्रहकथनप्रार्थना | .. | १–९ |
| शुद्धभावाः | .. | १०–१६ |
| अशुद्धभावाः | .. | १७ |
| *प्रकारान्तरेण शुद्धाशुद्धभावाः* | .. | १८–३३ |
| ५२. द्विपञ्चाशोऽध्यायः | | |
| सर्वस्य शब्दप्रपञ्चस्य मन्त्रात्मकत्वम् | .. | १–८ |
| बीजमन्त्राः | .. | ९–३३ |
| ५३. त्रिपञ्चाशोऽध्यायः | | |
| क्रियापादार्थसंग्रहः | .. | १–१५ |
| ५४. चतुष्पञ्चाशोऽध्यायः | | |
| भूतशुद्धिः | .. | १–९ |
| देहे भूतादिस्थानानि | .. | १०–२७ |
| ५५. पञ्चपञ्चाशोऽध्यायः | | |
| आधारविन्यासः | .. | १–१० |
| ५७. *सप्तपञ्चाशोऽध्यायः | | |
| परापश्यन्त्यादिस्वरूपम् | .. | १–२५ |
| ग्रन्थोपसंहारः | .. | २६–५५ |

---

* षट्पञ्चाशोऽध्यायो लुप्तः

श्रीः

# लक्ष्मीतन्त्रम्

## प्रथमोऽध्यायः

नमो नित्यानवद्याय जगतः सर्वहेतवे ।
ज्ञानाय निस्तरङ्गाय लक्ष्मीनारायणात्मने[1] ॥ १ ॥

खगासनं [2]घृणाधारमीदृशं सोमभूषितम् ।
अकलङ्केन्दुसूर्याग्निं लक्ष्मीरूपमुपास्महे ॥ २ ॥

वेदवेदान्त[3]तत्त्वज्ञं सर्वशास्त्रविशारदम् ।
सर्वसिद्धान्ततत्त्वज्ञं धर्माणामागतागमम् ॥ ३ ॥

जितेन्द्रियं जिताधारं रागद्वेषावशीकृतम् ।
चतुर्दशाङ्गयोगस्थं प्रसंख्यानपरायणम् ॥ ४ ॥

### टिप्पणी

नमस्यामः श्रियं देवीं देवो दीव्यति यत्परः ।
त्रैगुण्यफलके चित्रे क्षिप्तैर्ब्रह्मादिपाशकैः ॥
लक्ष्मीतन्त्रमहाम्भोधौ तत्त्वरत्नानि चिन्वताम् ।
तत्त्वप्रकाशनी टीका साहाय्यं कर्तुमीहते ॥

१. नम इति विशिष्टोपायस्य, लक्ष्मीनारायणात्मन इति विशिष्टोपेयस्य च निर्देशः । नित्यानवद्यायेति नारायणस्य जगदुपादानत्वशङ्कितसविकारत्वनिरासः बद्धमुक्तजीववैलक्षण्यं चोक्तम् । जगतः सर्वहेतवे इत्यौपनिषदमभिन्ननिमित्तोपादानत्वं नित्यजीववैलक्षण्यं चोक्तम् । ज्ञानायेति जगत्कारणत्वौपयिकगुणगणपूर्तिः स्वरूपनिरूपकधर्मश्चोक्तः । निस्तरङ्गायेति षडूर्मिराहित्यं मनःपरिणाम्यचिद्वैलक्षण्यं चोक्तम् । २. ईदृशमित्यादि । ईकाररूपमित्यर्थः । अकलङ्केत्यादि । स्वरस्पर्शव्यापकाक्षररूपमिति देव्या वाक्स्वरूपत्वमुक्तं भवति । यथोक्तं प्रपञ्चसारे—"स्वराख्याः षोडश प्रोक्ताः स्पर्शाख्याः पञ्चविंशतिः । व्यापकाश्च दशैते स्युः

[1] B and C add the following verses in the beginning

गुरुपाद्रिगमस्थायं गुरुसंदाससूनम् ।
गुरुं गम्भीर वन्दे गुरुकारुण्यसंपदम् ॥

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

[2] All Mss. read wrongly कृपाधारं.

[3] वेदज्ञ D E. I.

विद्धे स्वर्भानुना भानौ पुरा तपनतां गतम् ।
निदानं तपसामात्रं तेजोराशिमनामयम् ॥ ५ ॥

अत्रिमत्रिगुणोपेतमत्रिवर्गस्थमव्ययम् ।
प्रातः सन्ध्यामुपासीनमृषिं हुतहुताशनम् ॥ ६ ॥

पतिव्रताना परमा धर्मपत्नी यशस्विनी ।
ब्रह्मविष्णुमहेशानां जननी कारणान्तरे ॥ ७ ॥

देवैरभिष्टुता शश्वच्छान्तिनिलया तपस्विनी ।
विदुषी सर्वधर्मज्ञा नित्यं पतिमनुव्रता ॥ ८ ॥

पत्युः श्रुतवती तास्ता विविधा धर्मसंहिताः ।
प्रणिपातपुरस्कारमनसूया वचोऽब्रवीत् ॥ ९ ॥

अनसूया—

भगवन् सर्वधर्मज्ञ मम नाथ जगत्पते ।
त्वत्तः श्रुता धर्मास्ते ते बहुविधात्मकाः ॥१०॥

ज्ञानानि च विचित्राणि फलरूपादिभेदतः ।
एतेभ्यो भगवद्धर्मो विशिष्टो विधृतो मया ॥ ११ ॥

त्वया कथयता तास्ता [1]भगवद्धर्मसंहिताः ।
सूचितं तत्र तत्रैव लक्ष्मीमाहात्म्यमुत्तमम् ॥ १२ ॥

रहस्यत्वादपृष्टत्वान्न त्वया प्रस्फुटीकृतम् ।
तदहं श्रोतुमिच्छामि लक्ष्मीमाहात्म्यमुत्तमम् ॥१३॥

यत्स्वभावा हि सा देवी यत्स्वरूपा यदुद्भवा ।
यत्प्रमाणा यदाधारा यदुपायाथ[2] यत्फला ॥ १४ ॥

तदहं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ।
भवेयं कृतकृत्याहं यस्य विज्ञानयोगतः ॥ १५ ॥

[3]तं मे दर्शय पन्थानमुपसन्नास्म्यधीहि[4] भो ।
[5]इति तस्या वचः श्रुत्वा भगवानत्रिरब्रवीत् ॥१६॥

अत्रि —

[6]साधु सबोधितोऽस्म्यद्य धर्मज्ञे धर्मचारिणि ।
मया प्रष्टेन वक्तव्यमिति नोद्घाटितं पुरा ॥ १७ ॥

अहो त्वमसि कल्याणि लक्ष्मीमाहात्म्यमुत्तमम् ।
श्रोतुं श्रुतिशिरःश्रेणिन्दयरथं सनातनम् ॥ १८ ॥

पुरा मलयशैलस्था मुनयो धर्मतत्पराः ।
श्रुतसात्त्वतविज्ञाना नारदादेवदर्शनात् ॥ १९ ॥

अपृच्छन्नेतमेवार्थं भगवन्तं सनातनम् ।
नारदं ब्रह्मसकाशं भगवद्धर्मवेदिनम् ॥ २० ॥

ऋषयः —

[7]भगवंस्त्वच्छ्रुतोऽस्माभिः सात्त्वतः सत्त्वसंश्रयः ।
शुद्धो [8]भागवतो धर्मो मोक्षैकफललक्षणः ॥ २१ ॥

सोमेनाभ्यात्मकः क्रमात् ॥" इति । ४ चतुर्दशेति । भक्तिन्यासयोगेत्यर्थः । ५ विद्ध इति । अत्र महाभारतानुशासनिके २६० अध्यायोक्तमनुसन्धेयम् । ६ अत्रिगुणेत्यादिना महर्षेरत्रिनाम्नोऽन्वर्थत्वं व्यज्यते । ७ ब्रह्मेत्यादि । पुरा त्रिमूर्तयोऽनसूयायाः पातिव्रत्यं परीक्षितुमयतन्त । तेन क्रुद्धया तया ते द्विहायना शिशवोऽक्रियन्त । ततस्तन्महिषीभिः प्रसादिता सा तान् यथापुरमकरोदिति पौराणिकी कथात्रानुसन्धेया । ११ भगवद्धर्मः । भगवत्प्राप्तिफलो निवृत्तिधर्मः । १३ अपृष्टत्वादिति । "नापृष्टः कस्यचिद् ब्रूयात्" इति विधिरत्राभिप्रेतः । १६ उपसन्नेति । "तस्मै स विद्वानुपसन्नाय सम्यक् प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति श्रुत्यर्थोऽभिप्रेतः । पन्थानमिति । सदुपायमित्यर्थः । "महाजनो येन गतः स पन्थाः" इतिवत् । २१. सात्त्वतः सत्त्वसंश्रयः । सत्त्वगुणैकप्रधानो धर्म इत्यर्थः ।

[1] भगवन् B C
[2] च C E
[3] तं मे B G
[4] स्म्यहं विभो C E
[5] B C E. omit this line
[6] सम्यक् C D E G
[7] भगवन् A B C
[8] भगवतो A B C G

तत्र तत्त्वार्थकथने लक्ष्मीमाहात्म्यमुत्तमम् ।
सूचितं तत्र तत्रैव नाप्रष्टत्वात्प्रकाशितम् ॥ २२ ॥

इच्छामस्तदिदं श्रोतुं भवसागरतारकम् ।
पद्मिनीवैभवं सर्वं प्रज्ञापयतु नो भवान् ॥ २३ ॥

नताः स्म शिरसा पादौ तव संसारतारकौ ।
अधीहि भो मुने दिव्यं प्रपन्नास्त्वां चिरं वयम् ॥

नारदः—

साधु संबोधितोऽस्म्यद्य मुनयः संशितव्रताः ।
प्रसन्नः कथयाम्यद्य लक्ष्मीतन्त्रं सनातनम् ॥२५॥

यत्र सा दृश्यते देवी स्वरूपगुणवैभवैः ।
पद्मिनी पद्मनाभस्य महिषी पद्मसंभवा ॥ २६ ॥

पुरा दुर्वाससः शापादभिभूते पुरंदरे ।
निःस्वाध्यायवषट्कारे भ्रष्टश्रीके जगत्त्रये ॥२७॥

दरिद्रे देववर्गे च कृशे धर्मे निमंतते ।
पितामहं सुरैः सार्धं क्षीरोदार्णवमेयुषि[1] ॥ २८ ॥

[2]बहून् वर्षगणान् दिव्यांस्तप्त्वा तीव्रं महत्तपः ।
संबोधिते जगन्नाथे देवदेवे जनार्दने ॥ २९ ॥

पितामहेन देवाय कार्ये च विनिवेदिते ।
क्षीरोदे मथिते देवैस्तदादिष्टेन वर्त्मना ॥ ३० ॥

पारिजाते हयश्रेष्ठे गजेन्द्रेऽप्सरसां गणे ।
कालकूटे समुद्भूते वारुण्याममृते तथा ॥ ३१ ॥

सह चन्द्रमसा देव्यामुत्थितायां [3]महार्णवात् ।
पद्मिन्यां पद्मनाभस्य वक्षःस्थायामनन्तरम् ॥ ३२ ॥

तयावलोकिते देववर्गे श्रियमुपेयुषि ।
तयानवेक्षिते दैत्यवर्गे चैव [4]पराजिते ॥ ३३ ॥

स्वाराज्यमखिलं प्राप्य मोदमाने पुरंदरे ।
बृहस्पतिरुपागम्य रहसीदं वचोऽब्रवीत् ॥ ३४ ॥

बृहस्पतिः—

काले संबोधयाम्येतच्छृणु वाक्यं पुरंदर ।
अन्वयव्यतिरेकाभ्यां लक्ष्म्यास्ते [5]कथिता पुरा ॥

महत्ता महतां नाथ तस्यामायतते[6] स्थितिः ।
[7]न भ्रश्येत यथैवैषा तव राज्यस्थितिः परा ॥३६॥

[8]तथा यतस्व देवेश शरणं गच्छ पद्मिनीम् ।
एषा हि श्रेयसो मूलमेषा हि परमा गतिः ॥ ३७ ॥

अनेन सात्त्वतशब्दनिर्वचनमपि सूचितम् । यथा—सत्त्व सत्त्वगुणः अस्यास्तीति सत्त्वतः । पर्वतादिवत् मत्वर्थे तप्प्रत्ययः । सत्त्वत एव सात्त्वत इति । तस्यैव विवरणं शुद्धो भागवतो धर्म इति । २४. चिरमिति । "नासंवत्सरवासिने ब्रूयात्" इति विधिरभिप्रेतः । २५. लक्ष्मीतन्त्रमिति ग्रन्थनाम । इदं च तन्त्रं शतकोटिग्रन्थपरिमितात् मूलभूतलक्ष्मीतन्त्रात् सारमुद्धृत्य कथितमिति वक्ष्यतेऽत्र (44-52) । २७. पुरेत्यादि । इयमाख्यायिका विष्णुपुराणे प्रथमांशे द्रष्टव्या । निःस्वाध्यायवषट्कारत्व भ्रष्टश्रीकत्वे हेतुः । २८. निमंतते । विच्छिन्न इत्यर्थः । ३३. अनेनान्वयव्यतिरेकाभ्यां लक्ष्मीकटाक्षपातस्य सर्वसंपन्निदानत्वं निरूप्यते । यत्सत्त्वे यत्सत्त्वमित्यन्वये यथा देवेषु इति दृष्टान्तः । यदभावे यदभाव इति व्यतिरेके यथा दैत्येषु इति दृष्टान्तः । इममेव विषयमनन्तरमेव ३५ तमश्लोके वक्ष्यति ।

[1] मीयुषि G; क्षीरार्णवमुपेयुषि I.
[2] बहूनां E. I.
[3] सुधा D. E. F. I.
[4] पुरा G.
[5] निहिता D. E. I; गदिता G.
[6] सदा हि ते A. B. C.
[7] A. B. C. G. omit this line.
[8] एवं यजस्व A. B. C. G.

श्रुतीनामभिसधिश्च सेव देवी सनातनी ।
एपैव जगता प्राणा एपैव जगता क्रिया[1] ॥ ३८ ॥

[2]एपैव जगतामिच्छा ज्ञानमेपा परावरा ।
एपैव सृजते काले सैपा पाति जगत्त्रयम् ॥ ३९ ॥

जगत्सहरते चान्ते तत्तत्कारणसस्थिता ।
मातर जगतामेनामनाराध्य महत् कुत ॥ ४० ॥

[3]एतत्तु वैष्णव धाम यतो नावर्तते यति [4] ।
एपा सा परमा निष्ठा साख्याना विदितात्मनाम् ॥

एपा सा योगिना निष्ठा यत्र गत्वा न शोचति ।
एपा पाशुपती निष्ठा सैपा वेदविदा गति ॥ ४२ ॥

[5]पञ्चरात्रस्य कृत्स्नस्य सैपा निष्ठा सनातनी ।
सैपा नारायणी देवी स्थिता नारायणात्मना ॥ ४३ ॥

पृथग्भूताप्टथग्भूता ज्योत्स्नेव हिमदीधिते ।
तैस्तैर्ज्ञानै पृथग्भूतैरागमैश्च पृथग्विधै ॥ ४४ ॥

एकैवैपा परा देवी बहुधा [6]समुपास्यते ।
तामुपेहि महाभागा शरण पद्मसभवाम् ॥ ४५ ॥

तपोविशेपै[7] विविधैस्तैस्तैश्च नियमै शुभै ।
आराध्य महिर्षी विष्णो स्थिरीकुरु निजश्रियम् ॥

एपा प्रसादसुमुखी स्व पद प्रापयिष्यति ।
अभीप्सितार्थदा देवी कामिनामपि कामदा ॥ ४७ ॥

नारद —

इति सबोधित शक्रो गुरुणा गुरुणा स्वयम् ।
आराधयितुमारब्धा क्षीरोदस्योत्तर ययौ ॥ ४८ ॥

तत्र दिव्य तपस्तेपे विल्वमूलनिकेतन ।
[8]एकपादस्थितो [9]मौनी काष्ठभूतोऽनिलाशन ॥ ४९ ॥

ऊर्ध्वदृग्बाहुरनन्नश्च नियतो नियतात्मवान् ।
दिव्य वर्पसहस्र वै तपस्तेपे सुदुश्चरम् ॥ ५० ॥

तपसोऽवभृथे तस्य सा देवी पद्मसभवा ।
प्रसन्नवदना विष्णोर्महिपी दर्शन ययौ ॥ ५१ ॥

अग्रत सस्थिता देवीं जगता मातर पराम् ।
ता शक्रश्चक्षुपा वीक्ष्य विस्मय परम ययौ ॥ ५२ ॥

विह्वल प्रणिपत्याथ प्राञ्जलिर्बलसूदन ।
[10]श्रिय सूक्तेन तुष्टाव पद्मिनी पाकशासन ॥ ५३ ॥

३८. श्रुतीनामिति । "वेदैश्च सर्वैरहमेव वेद्य" इत्युक्तरीत्या सर्ववेदतात्पर्यपर्यवसानभूमिरित्यर्थ । उभयोरपृथग्भावान्न वचनविरोध । ३९. जगत्कारणत्वस्य ब्रह्मासाधारणत्वसिद्धान्तेऽपि तच्छक्तिरूपत्वेन तदपृथक्सिद्धत्वात् शक्तिकृतस्यापि शक्तिमत्कृतत्वव्यपदेशो युज्यत एव । वक्ष्यते चैतत् सुस्पष्ट देव्यैव (11 6 7) ४४. नारायण्या नारायणात्मनावस्थान पूर्वश्लोकोक्तमेवोपपादयति—पृथग्भूतेति अपृथग्भूतेति च । धर्मधर्मिणोरपृथक्सिद्धयो निष्कर्पविवक्षाया धर्मस्य पृथग्व्यपदेश । अनिष्कर्पे तु धर्मितया । यथा 'शुक्ल रूपम्, शुक्ल पट' इति । ४७. देवीप्रसादे परमपदरूपमोक्षप्राप्ति, आनुपङ्गिकत्रिवर्गफलप्राप्तिश्चानेनोच्यते ।

## इति प्रथमोऽध्याय:

[1] प्रिया C
[2] एषा हि A B C G
[3] एतत्तद्वै E I
[4] पुन E
[5] पाञ्च E G
[6] तदु D F
[7] नियमैस्तैस्तैश्च विविधै E F I
[8] E omits 8 lines from here
[9] ३ मौ F
[10] श्रिय I

एकान्तभावमापन्नमव्याजां भक्तिमास्थितम् ।
तं वीक्ष्य जगतां माता वाक्यमेतदुवाच ह ॥५४॥

श्रीः—
वत्स शक्र प्रसन्नास्मि तपसा तव सुव्रत ।
वरं वृणु महाभाग किमिष्टं करवाणि ते ॥ ५५ ॥

शक्रः—
अद्य मे तपसो देवि यमस्य नियमस्य च ।
सद्यः फलमवाप्तं यद् दृष्टा भगवती मया ॥ ५६ ॥

यदि वापि वरो देयस्त्वया मे परमेश्वरि ।
तत्त्वं कथय देवेशि[1] यासि त्वं यत्प्रकारिका ॥५७॥

यत्प्रमाणा यदाधारा यदुपाया सनातनी ।
यस्य त्वं तेन[2] वा देवि संबन्धस्तव यद्विधः ॥५८॥

यच्चान्यद्वेदितव्यं ते नानाशास्त्रोपबृंहितम् ।
कथयेश्वरि तत्सर्वमुपसन्नोऽस्म्यधीहि भो ॥ ५९ ॥

इति [3]प्रसादिता तेन वत्सेनेव पयस्विनी ।
स्निह्यता मनसा पद्मा पाकशासनमब्रवीत् ॥ ६० ॥

श्रीः—
शृणु शक्र महाभाग या [4]ह्यहं यत्प्रकारिका ।
यस्याहं तेन वा यादृक् संबन्धो मम वृत्रहन् ॥ ६१ ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [6]शास्त्रावतारो नाम
प्रथमोऽध्यायः

---

[1] मे देवि E. I.   [2] केन E. I.   [3] संबोधिता E.
[4] स्वहं D. F. G. I.   [5] श्रीपाञ्चरात्रे तन्त्रे E. श्रीपाञ्चरात्रसारे B. श्रीपाञ्चरात्रे F.
[6] A. B. C. D. F. read शास्त्रावतरणकथनं ; A. I. omit the title.

# द्वितीयोऽध्यायः

श्रीरुवाच—

अस्ति निर्दुःखनिःसीमसुखानुभवलक्षणः ।
परमात्मा परं यस्य पदं पश्यन्ति सूरयः ॥ १ ॥

कश्चित्केषाञ्चिदात्मा स्यात्तस्याप्येषां च कश्चन ।
तस्याप्यन्य[1] इतीत्थं तु यत्रैषा[2] व्यवतिष्ठते ॥ २ ॥

अध्वनामध्वनः पारं परमात्मानमूचिरे ।
अहं नाम स्मृतो योऽर्थः स आत्मा समुदीर्यते ॥ ३ ॥

अनवच्छिन्नरूपोऽहं परमात्मेति शब्द्यते[4] ।
क्रोडीकृतमिदं सर्वं चेतनाचेतनात्मकम् ॥ ४ ॥

येन सोऽहंस्मृतो भावः परमात्मा सनातनः ।
स वासुदेवो भगवान् क्षेत्रज्ञः परमो मतः ॥ ५ ॥

विष्णुर्नारायणो विश्वो विश्वरूप इतीर्यते ।
अहन्तया समाक्रान्तं तस्य [5]विश्वमिदं जगत् ॥ ६ ॥

[6]वस्त्ववस्तु च तन्नास्ति यन्नाक्रान्तमहन्तया ।
[7]इदन्तया यदालीढमाक्रान्तं तदहन्तया ॥ ७ ॥

[8]सर्वतः शान्त एवासौ निर्विकारः सनातनः ।
अनन्तो देशकालादिपरिच्छेदविवर्जितः ॥ ८ ॥

महाविभूतिरित्युक्तो व्याप्तिः सा महती यतः ।
तद् ब्रह्म परमं धाम निरालम्बनभावनम्[9] ॥ ९ ॥

निस्तरङ्गामृताम्भोधिकल्पं षाड्गुण्यमुज्ज्वलम् ।
एकं सच्चिद्घनं शान्तमुदयास्तमयोज्झितम् ॥ १० ॥

अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते ।
तस्य या परमा शक्तिर्ज्योत्स्नेव हिमदीधितेः ॥ ११ ॥

१. निर्दुःखेत्यादिना निखिलहेयप्रत्यनीकत्वानन्तकल्याणगुणाकरत्वरूपोभयलिङ्गत्वं परमात्मन उक्तं भवति । २. आत्मा । नियन्तेत्यर्थः । एषेति । व्यवस्थेति शेषः । व्यवतिष्ठते समाप्नोति, स परमात्मेति पूर्वेणान्वयः । ३. अध्वनामिति । वैसर्गिकाध्वापेक्षया परमो योऽध्वा मोक्षाध्वा अर्चिरादिः, तस्य पारं प्राप्यमित्यर्थः, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति वचनात् । "अध्वनामध्वपते" इति श्रुत्युद्धरणमत्र । अहमिति । यः अहंप्रत्ययगोचरः स आत्मेत्यर्थः । ४. अनवच्छिन्नेति । वस्त्वाद्यपरिच्छेदेन योऽहंशब्दापर्यवसानवृत्त्या प्रतीयते स परमात्मेत्यर्थः । ६. आह च शक्रोऽन्यत्र—"त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्" इति । ७. इदन्तयेति । इदंशब्दार्थतया प्रतीतं सर्वं जगदित्यर्थः । १०. निस्तरङ्गेत्यादिना भगवतः शान्तोदितावस्थोच्यते । तदेवाह—शान्तमिति । ११. ब्रह्माद्वैतमिति । स्वापृथक्सिद्धशक्त्यहंताविशिष्टत्वात् तद्विशिष्टब्रह्मैकमेव तत्त्वमित्यर्थः ।

[1] एवम् A
[2] एव E I
[3] अध्वानम् A B C
[4] शम्यते B C
[5] सर्वं B E
[6] वस्तुतस्तु A B C
[7] A B C D omit this line
[8] सर्वः शान्तः स B
[9] निरालम्बमभावनम् I

सर्वावस्थागता देवी स्वात्मभूतानपायिनी ।
अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी ॥ १२ ॥

आत्मा स सर्वभूतानामहंभूतो हरिः स्मृतः ।
अहंता सर्वभूतानामहमस्मि सनातनी ॥ १३ ॥

येन भावेन भवति वासुदेवः सनातनः ।
भवतस्तस्य देवस्य [1]स भावोऽहमितीरिता ॥१४॥

भवद्भावात्मकं ब्रह्म ततस्तच्छाश्वतं पदम् ।
भवन्नारायणो देवो भावो लक्ष्मीरहं परा ॥ १५ ॥

लक्ष्मीनारायणाख्यातमतो[2] ब्रह्म सनातनम् ।
अहंतया समाक्रान्तो ह्यहमर्थः प्रसिध्यति ॥ १६ ॥

अहमर्थसमुत्था च साहंता परिकीर्तिता ।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ॥१७॥

तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः ।
अहंतया विनाहं हि निरुपाख्यो न सिध्यति ॥१८॥

अहमर्थं विनाहंता निराधारा न सिध्यति ।
भवद्भावात्मकं रूपं समस्तव्यस्तगोचरम् ॥ १९ ॥

परोक्षमपरोक्षं च जगति प्रविचिन्त्यते[3] ।
निरुन्मेषे निरुन्मेषा साहंता परमेश्वरी ॥ २० ॥

क्रोडीकृत्याखिलं [4]सर्वं ब्रह्मणि व्यवतिष्ठते ।
उन्मेषस्तस्य यो नाम यथा चन्द्रोदयेऽम्बुधेः ॥२१॥

अहं नारायणी शक्तिः सिसृक्षालक्षणा तदा ।
निमेषस्तस्य यो नाम संहृतौ परमात्मनः ॥ २२ ॥

अहं नारायणी शक्तिः सुषुप्सालक्षणा हि सा ।
[5]सिसृक्षाया ममोद्यन्त्या देवाल्लक्ष्मीपतेः स्वयम् ॥

अव्याहतमसंकोचमैश्वर्यं प्रविजृम्भते ।
ज्ञानं तत्परमं ब्रह्म [6]सर्वदर्शि निरामयम् ॥ २४ ॥

ज्ञानात्मिका तथाहंता सर्वज्ञा सर्वदर्शिनी ।
ज्ञानात्मकं परं रूपं ब्रह्मणो मम चोभयोः ॥ २५ ॥

शेषमैश्वर्यवीर्यादि ज्ञानधर्मः सनातनः ।
अहमित्यान्तरं रूपं ज्ञानरूपमुदीर्यते[7] ॥ २६ ॥

प्रकाशकादिकं रूपं स्फटिकादिसलक्षणम् ।
[8]अतस्तु ज्ञानरूपत्वं मम नारायणस्य च ॥ २७ ॥

स्वस्वरूपस्य तदपृथक्सिद्धत्वमेव दृष्टान्तमुखेनाह—ज्योत्स्नेति । १२. सर्वावस्थागतानपायिनीत्यनेन "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी" इति महर्षिवचनं स्मार्यते । १६. श्रीविशिष्टमेव परं ब्रह्म । न तु निःश्रीकमित्यर्थः । लक्ष्मीनारायणयोरन्योन्यात्महविःशेषित्वेऽपि आत्मावैष्णवादिष्विव विशिष्टस्यैव देवत्यत्वात् तस्य चैकत्वात् न शेषिद्वित्वप्रसक्तिरिति भावः । १८. निरुपाख्यो निर्विशेषः । लोके सर्वमपि वस्तु इदमित्थमिति प्रकारविशेषपुरस्कारेणैव सिध्यति ; न तु निर्विशेषमिति भावः । २२. देव्याः शक्तिरूपत्वं पूर्वमुक्तम् । अधुना तद्भेद उच्यते—सिसृक्षाशक्तिः सुषुप्साशक्तिश्चेति । प्रथमया सृष्टिः, द्वितीयया संहारश्च जायते । तत्र नित्यविभूतिविषये प्रथमाया एव प्रवृत्तिः । द्वितीयायास्तु लीलाविभूतावेवोपयोगः । २४. ज्ञानादिषु षट्सु गुणेषु ज्ञानं तत्स्वरूपनिरूपकधर्मः । अन्ये गुणास्तु निरूपितस्वरूपविशेषणभूता इति विवेकः । तदेव वक्ष्यत्युत्तरत्र 'शेषमैश्वर्यवीर्यादि ज्ञानधर्मः' इति । ज्ञानाख्यस्य स्वरूपस्य धर्म इत्यर्थः ।

[1] सद्भावो B. C. [2] ख्यातं तत् E. I. [3] विमृश्यते E; विमृश्यते I. [4] विश्वं B.
[5] सिसृक्षया ममोद्यन्त्या E. [6] सर्वदर्शि B. [7] मितीर्यते E [8] अनन्तात् I.

अव्याहतिर्यदुद्युत्यास्तदैश्वर्यं परं मम ।
इच्छेति सोऽन्यते तत्तत्तत्त्वशास्त्रेषु पण्डितैः ॥ २८ ॥

जगत्प्रकृतिभावो मे यः सा शक्तिरितीर्यते ।
सृजन्त्या यन्न्श्रमाभावो मम तद्बलमिष्यते ॥ २९ ॥

भरणं यच्च कार्यस्य बलं तच्च प्रचक्षते ।
[1]शक्त्यंशकेन तत्प्राहुर्भरणं तत्त्वकोविदाः ॥ ३० ॥

विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा ।
स्वभावं हि जहात्याशु पयो दधिसमुद्भवे ॥ ३१ ॥

जगद्भावेऽपि मा नास्ति [2]विकृतिर्मम नित्यशः ।
विकारविरहो वीर्यमतस्तत्त्वविदां मतम् ॥ ३२ ॥

विक्रमः कथितो वीर्यमैश्वर्यांशः स तु स्मृतः ।
सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या ॥ ३३ ॥

तेजः षष्ठं गुणं प्राहुस्तमिमं तत्त्ववेदिनः ।
पराभिभवसामर्थ्यं तेजः केचित्प्रचक्षते ॥ ३४ ॥

ऐश्वर्ये योजयन्त्येके तत्तेजस्तत्त्वकोविदाः ।
इति पञ्च गुणा एते ज्ञानस्य [3]स्फुतयोऽमलाः ॥ ३५ ॥

ज्ञानाद्याः षड्गुणा एते षाड्गुण्यं मम तद्वपुः ।
उन्नतीत्थं सिसृक्षाया ममायुततमी कला ॥ ३६ ॥

शुद्धाशुद्धात्मको वर्गस्तया क्रोडीकृतोऽखिलः ।
तत्र शुद्धमयं मार्गं व्याख्यास्यामि सुरेश्वर ॥ ३७ ॥

अभिव्यक्तानभिव्यक्तषाड्गुण्यक्रममुज्ज्वलम् ।
आलम्बितचतूरूपं रूपं तत्पारमेश्वरम् ॥ ३८ ॥

[4]गुणकल्पनयाध्यस्तो गुणोन्मेषकृतक्रमः ।
मूर्तीकृतगुणश्चेति त्रिधा मार्गोऽयमद्भुतः ॥ ३९ ॥

युगानि त्रीणि षण्णां यान्याहुर्ज्ञानादिकानि वै[5] ।
समासव्यासतस्तेषां चातुरात्म्यं विविच्यते[6] ॥ ४० ॥

[7]समस्तव्यस्तभेदेन गुणानां तद्युगत्रयम् ।
विवक्ष्यते यदा सा मे शान्तायाश्चातुरात्म्यता[8] ॥ ४१ ॥

२८. इच्छेति । सिसृक्षारूपैश्वर्यरूपत्वं पूर्वं चतुर्विंशे श्लोके वर्णितमत्र स्मर्तव्यम् । सिसृक्षा हि स्रष्टुमिच्छा । २९. देव्या जगत्प्रकृतिभावो न स्वरूपतः, तथात्वे विकारित्वप्रसङ्गात् । किंतु स्वप्रकारभूतचिदचिदात्मनेति द्रष्टव्यम् । एवं हि ब्रह्मणो जगत्प्रकृतित्वे गतिः । ३१. विकारविरहित्वं, पूर्वोक्तरीत्या प्रकारांशे परिणामः न तु प्रकार्यंश इति स्वीकारात् । प्रकारिभूते स्वरूप एव परिणाममङ्गीकृत्य अघटितघटनासामर्थ्यात् विकाराभावनिर्वाहस्तु न युक्तिमह । अत एव "माया तु प्रकृतिं विद्यात्" इत्यत्रेश्वरोपाधिभूतमायाया प्रकृतित्वमर्थ इति कैषाचिदभ्युपगमः । ३६. उन्नतीति । उदयः प्रसैत्यर्थः । ३७. शुद्धसृष्टिः, अशुद्धसृष्टिश्चेति द्विविधा सृष्टिः । तत्र शुद्धा त्रैगुण्यरहिता शुद्धसत्त्वमयी । तस्याः स्वयंप्रकाशत्वादजडत्वमिति केचित् । जडत्वमेवेति परे । अस्या एव नित्यविभूतिरिति व्यवहारः । अशुद्धसृष्टिस्तु त्रैगुण्यमयी जडरूपा लीलाविभूतिरिति व्यवहृता । ३८. न केवलं नित्यविभूतिरेव शुद्धसृष्टिः । किन्तु तत्र विद्यमाना वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्या व्यूहा अपि तथेति मन्तव्यम् । तत्र प्रथमे वासुदेवे षाड्गुण्यक्रमस्य न स्फुटावभासः । तदनन्तरव्यूहेषु तु किंचित्किंचित् क्रमेणेति ज्ञेयम् । ३९. तेषु क्वचित् व्यूहे गुणानां

[1] नवयं शतेन च A C G [2] प्रकृति I [3] स्फूर्तय E I [4] गुणानां कल्पनावस्थो I [5] वदिन E
[6] अमूलभन् A B C D [7] A B C D omit verses 41 and 42 [8] चतुरात्मता I

आकृतीरनवेक्ष्यापि [1]गुणानां कल्पनाकृतम् ।
चातुरात्म्यमिदं प्राहुः शान्तायास्तत्त्वचिन्तकाः ॥

[2]शान्तातिशान्तादुन्मेषो मम रूपाद्युगत्रये ।
क्रमव्यक्तं तदाद्यं मे चातुरात्म्यममूर्तिमत् ॥ ४३॥

अतरङ्गमनिर्देश्यं निःसत्त्वं सत्त्वमव्ययम् ।
सच्चिन्मात्राख्य उन्मेषः साद्या मे शान्तताच्युतिः ॥

व्यक्तज्ञानबलाख्यायां पूर्वं संकर्षणात्मनि ।
[3]तिलकालकवत्सर्वो विकारो मयि तिष्ठति ॥४५॥

तन्मां संकर्षणात्मानं विदुर्ज्ञानबले बुधाः ।
स्वयं गृह्णामि कर्तृत्वमुन्मिषन्ती ततः परम्[4] ॥४६॥

प्रद्युम्न इति मामाहुः सर्वार्थद्योतनीं तदा ।
युगं प्रस्फुरितं रूपं[5] तस्मिन्नैश्वर्यवीर्ययोः ॥ ४७॥

ततस्तया क्रियाशक्त्या [6]लब्धावेशा चिकीर्षया ।
युज्यमानानिरुद्धाख्यां लम्भिता तत्त्वकोविदैः ॥

अवस्थाः क्रमशो मे ताः सुषुप्तिस्वप्नजागराः ।
तिस्रो मम स्वभावाख्या विज्ञानैश्वर्यशक्तयः ॥४९॥

उन्मिषन्त्यः पृथक्तत्त्वत्रयेण परिकीर्तिताः ।
बलं वीर्यं तथा तेज [7]इत्येतत्तु गुणत्रयम् ॥५०॥

[8]श्रमाद्यवद्याभावाख्यं ज्ञानादेरुपसर्जनम् ।
इत्थं शान्तोदितावस्थाद्वयभेदजुषो मम ॥ ५१ ॥

स्वधर्मोर्मिसमुल्लासो न भेदायाम्बुधेरिव ।
प्रायो यद्गुणकर्तव्ये वर्ते कृत्या यया ह्यहम् ॥५२॥

तत्र तद्गुणयुग्मं तु मम रूपतयोच्यते ।
अतो ज्ञानबले देवः संकर्षण [9]उदीर्यते ॥ ५३ ॥

ऐश्वर्यवीर्ये प्रद्युम्नोऽनिरुद्धः शक्तितेजसी ।
[10]आद्यस्त्वभिन्नषाड्गुण्यो ब्रह्मतत्त्वापृथक्स्थितौ ॥

एकोऽप्यनुनयौदार्यक्रौर्यशौर्यादिभिर्गुणैः ।
नटः प्रवर्तते यद्वद्वेषचेष्टादिभेदवान् ॥ ५५ ॥

सम्यगनुन्मेषात् न गुणात्मतया ज्ञानम् । क्वचित्तु क्रमेणोन्मेषात् क्रमादभिव्यक्तिः । क्वचित्तु गुणानामतिप्रकाशात् गुणात्मना परिज्ञानमिति क्रमः । ४५. तिलकालकवदिति । यथा प्राणिनां देहे तिलवत् सूक्ष्मः कालवर्णश्च बिन्दुविशेषोऽत्यल्पपरिमिते क्वचित्कोणे दृश्यते, तद्वत् सर्वोऽपि प्रपञ्चः ममैकदेशे तिष्ठतीत्यर्थः । सकर्षतीति संकर्षण इत्यन्वर्थं नाम । अत्र ज्ञानबलयोः समुन्मेषः । ४७. प्रकृष्टं द्युम्नं बलं तेजो वा यस्येत्यन्वर्थं नाम । सृष्टिकर्तृत्वात् अत्र वीर्यैश्वर्ययोः समुन्मेषः । ४८. अनिरुद्धेति । पालनकर्तैषः । अत्र शक्तितेजसोः समुन्मेषः । तथा च संजगृहुः—“षाड्गुण्याद्वासुदेवः पर इति स भवान्मुक्तभोग्यो बलाढ्याद्बोधात्सकर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् । प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो बिभ्राणः पासि सत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥” इति । ४९. सुषुप्तीत्यादि । संकर्षणप्रद्युम्नानिरुद्धानां सुषुप्त्याद्यधिष्ठातृत्वम् । वासुदेवस्तु तुरीयाधिष्ठातेति विवेकः । अयमेव विभागः माण्डूक्योपनिषदि विश्वतैजसप्राज्ञतुर्यनामभिर्निर्दिष्टः । ५१. शान्तोदितेति । शान्तावस्था परवासुदेवावस्था । उदितावस्था व्यूहावस्था । तत्रापि

[1] गुणकल्पनया I.
[2] A. B. C. D. F. omit this verse.
[3] तिलकालिक E. I.
[4] परा A. B. C. G. I.
[5] रूपे B. C. D. I.
[6] लब्धावस्था A. B. C. D.
[7] इति तनु E I.
[8] श्रमाद्यविद्या A. B. C. G.
[9] इतीर्यते B.
[10] आद्यं D.

तद्वदेकापि सैवाह [1]ज्ञानशक्त्यादिभिर्गुणै ।
सकर्षणादिसद्भाव भजे लोकहितेप्सया ॥ ५६ ॥

[2]क्रमश प्रलयोत्पत्तिस्थितिभि प्राण्यनुग्रह ।
प्रयोजनमथान्यच्च शास्त्रशास्त्रार्थतत्फलै ॥ ५७ ॥

दशास्तुर्यसुषुप्त्याद्याश्चतुर्व्यूहेऽपि लक्षयेत् ।
विभवोऽनन्तरूपस्तु पद्मनाभमुखो विभो ॥ ५८ ॥

अनिरुद्धस्य विस्तारो दर्शितस्तस्य सात्त्वते ।
अर्चापि लौकिकी या सा भगवद्भावितात्मनाम् ॥

मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहा ।
[3]पराद्यर्चावसानेऽस्मिन्मम रूपचतुष्टये ॥ ६० ॥

तुर्यान्यवस्था विज्ञेया इतीय शुद्धपद्धति. ।
ईषद्भेदेन विज्ञेय तद्व्यूहविभवान्तरम् ॥
शुद्धेतर त्वथो मार्गं मम शक्र निशामय ॥ ६१ ॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [5]शुद्धमार्गप्रकाशो नाम
द्वितीयोऽध्याय

शान्तोदितावस्थ प्रथमव्यूह । नित्योदितावस्था अन्ये लय इति विशेष । ५७. सकर्षण प्रलयकर्ता शास्त्रोपदेष्टा च । प्रद्युम्न सृष्टिकर्ता शास्त्रार्थप्रवर्तयिता च । अनिरुद्ध पालनकर्ता शास्त्रार्थफलनिर्वाहकश्चेति प्रत्येक व्यापारविभाग । ५८. परव्यूहावुपवर्ण्य विभव कथ्यतेऽत्र । विभवावतारा पद्मनाभादयो बहव । मत्स्यकूर्मादयोऽप्यत्रैव परिगणिता अवतारा । ५९. अर्चा नाम देवालयेषु प्रतिष्ठिता बिम्बविशेषा ।

इति द्वितीयोऽध्यायः

---

[1] शनैश्वर्या E. I
[2] क्रमेण I
[3] पराद्यर्चान्तरे A B C D
[4] पाञ्चरात्रे I.
[5] A B C D F omit the title, शुद्धसृष्टि G

# तृतीयोऽध्यायः

श्रीरुवाच—

नित्यनिर्दोषनिःसीमकल्याणगुणशालिनी ।
अहं नारायणी नाम सा सत्ता वैष्णवी परा ॥ १ ॥

देशात्कालात्तथा रूपात्परिच्छेदो न मे स्मृतः ।
संवित्तिरेव मे रूपं [1]सर्वैश्वर्यादिको गुणः ॥ २ ॥

स्वस्वातन्त्र्यवशेनैव विभागस्तत्र वर्तते ।
विज्ञानैश्वर्यशक्त्यात्मा[2] विभागो यः स ईरितः ॥ ३ ॥

विज्ञानैश्वर्यशक्तीनामुन्मेषस्त्वपरोऽधुना ।
अतर्क्याया ममोद्यत्या [3]नियोगानर्हया सदा ॥ ४ ॥

इच्छयान्यत्कृतं रूपमासीज्ज्ञानादिके त्रिके ।
यथैवेक्षुरसः स्वच्छो गुडत्वं प्रतिपद्यते ॥ ५ ॥

तद्वत्स्वच्छमयं ज्ञानं सत्त्वतां प्रतिपद्यते ।
रजस्त्वं च ममैश्वर्यं तमस्त्वं शक्तिरप्युत ॥ ६ ॥

एते त्रयो गुणाः शक्र त्रैगुण्यमिति शब्द्यते ।
रजःप्रधानं तत्सृष्टौ त्रैगुण्यं परिवर्तते ॥ ७ ॥

स्थितौ सत्त्वप्रधानं तत् संहृतौ तु तमोमुखम् ।
अहं संविन्मयी पूर्वा व्यापिन्यपि पुरंदर ॥ ८ ॥

अधिष्ठाय गुणान् सृष्टिस्थितिसंहृतिकारिणी ।
निर्गुणापि गुणानेतानधिष्ठायात्मवाञ्छया ॥ ९ ॥

चक्रं प्रवर्तयाम्येका सृष्टिस्थित्यन्तरूपकम् ।

शक्रः—

विधाद्वयं समास्थाय ज्ञानाद्ये तु [4]युगत्रये ॥ १० ॥

शुद्धेतरविभागेन किमर्थं त्वं प्रवर्तसे ।
विधयोरनयोः पद्मे संबन्धः कः परस्परम् ॥ ११ ॥

एतत्पृष्टा मया ब्रूहि नमस्ते पद्मसंभवे ।

श्रीः—

अनियोज्यं ममैश्वर्यमिच्छैव मम कारणम् ॥ १२ ॥

२. स्वरूपनिरूपको धर्मः ज्ञानम् । अन्ये पञ्चापि गुणाः निरूपितस्वरूपगुणभूता इत्यर्थः । ३. इत्थं विभागोऽपि मदिच्छाकृत एवेत्याह—स्वस्वातन्त्र्येति । ४. अपर इति । पूर्वं शुद्धसृष्टौ एक उन्मेष उक्तः । अधुना अशुद्धात्मकत्रैगुण्यसृष्टावन्य उन्मेष इत्यर्थः । ५. ज्ञानादित्रिकरूपं सत्त्वादित्रिकात्मना अन्यथा कृतमासीदित्यर्थः । ६. तदेवाह—तद्वदिति । ज्ञानं सत्त्वतया, ऐश्वर्यं रजस्तया, शक्तिश्च तमस्तया जातमिति भावः । ७. त्रैगुण्यमिति चातुर्वर्ण्यमितिवत् स्वार्थे ष्यञ् । ९. निर्गुणापीति । पूर्वं षाड्गुण्यस्योक्तत्वात् अत्र निर्गुणपदस्य सत्त्वरजस्तमोरूपमिश्रगुणरहितेत्यर्थः । आत्मवाञ्छयेत्यनेन जगत्सृष्ट्यादौ लीलैव प्रयोजनमित्युक्तं भवति । यथाह भगवान् बादरायणः—"लोकवत्तु लीलाकैवल्यम्" इति ।

[1] दैवै D. [2] शक्त्यात्म E. I. [3] नुयोगा E. I. [4] गुणत्रये A. G. I.

मुह्यन्त्यत्र महान्तोऽपि तत्त्वं शृणु तथापि मे ।
ईशेशितव्यभावेन परिवृत्त [1]सदा ह्यहम् ॥ १३ ॥

ईशो नारायणो ज्ञेय ईशिता तस्य चाप्यहम् ।
ईशितव्यं तु विज्ञेयं चिदचिच्च पुरंदर ॥ १४ ॥

चिच्छक्तिस्तु परा तत्र भोक्तृता प्रतिपद्यते ।
भोग्योपकरणस्थानरूपं तस्या अचित्पदम् ॥ १५ ॥

अनाद्यया समाविद्धा सा चिच्छक्तिरविद्यया ।
मत्प्रवर्तितया नित्यं चिच्छक्तिर्भोक्तृता गता ॥

अहंममत्वसम्बन्धाद्भचित्त्वेनाभिमन्यते ।
अविद्या सा तिरोभावं विद्यया याति वै यदा ॥

चिच्छक्तिर्निरभीमाना तदा मद्भावमेष्यति ।
तां विद्यां शुद्धमार्गस्थां परव्यूहादिरूपिणीं ॥ १८ ॥

प्रवर्तयामि कारुण्याज्ज्ञानसद्भावदर्शिनी ।
रक्ष्यरक्षकभावोऽयं सम्बन्धो विषयोर्द्वयोः ॥ १९ ॥

विद्या रक्षति शुद्धात्मा रक्ष्यते च [2]विधापरा ।
एतत्ते कथितं शक्र किं भूयः श्रोतुमिच्छसि ॥२०॥

शक्र —

ईशेशितव्यभावेन किमर्थं त्वं[3] प्रवर्तसे ।
ईशितव्यं स्थितं द्वेधा किंरूपं तत्र मे वद ॥ २१ ॥

श्री —

स्वभावो [4]नानुयोज्योऽयं मम नारायणस्य च ।
[5]ईशोऽहमीशितव्यो न स च देवः सनातनः ॥

ईशितव्यं द्विधा प्रोक्तं चिदचिद्व्यतिरेकतः ।
चिच्छक्तिर्भोक्तृरूपात्र सा च [6]चिद्रूपधारिणी ॥

भोग्योपकरणस्थानैरचिच्छक्तिस्त्रिधा स्थिता[7] ।
प्रसरन्त्यास्तृतीयं मे सा च पर्व स्मृतं बुधैः ॥२४॥

विभक्ते अपि ते एते शक्ती चिदचिदात्मिके ।
मत्स्वाच्छन्द्यवशेनैव मम रूपे सनातने ॥ २५ ॥

चिच्छक्तिर्निर्मला शुद्धा चिन्मय्यानन्दरूपिणी ।
अनाद्यविद्यानिर्द्धेयमित्थं संसरति ध्रुवम् ॥ २६ ॥

अचिच्छक्तिर्जडाप्येवमशुद्धा परिणामिनी ।
त्रिगुणापि ममैवेदं स्वाच्छन्द्यात् प्रविजृम्भितम् ॥

धूमकेतुर्यथा धूमं[8] दीप्यमानो भजेत् स्वयम् ।
शुद्धसंवित्स्वरूपापि भजे साहमचिद्गतिम् ॥ २८ ॥

अनाक्रान्ता विकल्पेन [9]शब्दैरप्यनवदर्थिता ।
आध्यानोपधिनाप्येव वर्तेऽहमचिदात्मना ॥ २९ ॥

बहिरन्तः पदार्थं हि चित्स्वरूपमखण्डितम् ।
विशिनष्टि तथाप्येतच्चित्रयोपाधिसंपदा ॥ ३० ॥

स्वातन्त्र्यमेव मे हेतुर्नानुयोज्यास्मि किंचन ।
[10]इत्थंप्रभावामेव मां विदन् बुद्धो भविष्यसि ॥३१॥

१३. शुद्धेतरसृष्ट्योः सम्बन्ध उच्यते—ईशेशितव्येति । रक्ष्यरक्षकभाव इत्यर्थः । २८. ज्वलत्स्वभावोऽपि धूमकेतुर्यथा मलिनधूमरूपतां प्रतिपद्यते, तथा ज्ञानस्वरूपाप्यहमचिद्भावमापद्य इत्यर्थः । २९. आध्यानोपधिनेति । मदिच्छारूपोपाधिनेत्यर्थः । ध्यानालम्बनार्थमिति वार्थः ।

[1] सदाप्यहम् A B C I
[2] तथा F
[3] च F
[4] अनु A B C
[5] ईशो हि ई A B C G
[6] मद्रूप E
[7] मता D स्मृता I
[8] धूमात् A B C D G
[9] शब्देनाप्य E I
[11] इदंममतान् A B C G

शक्रः—

कथं सृजसि वै लोकान् सुखदुःखसमन्वितान् ।
असृष्टिर्हि वरं यद्वा सृष्टिरस्तु सुखात्मिका ॥ ३२ ॥

श्रीः—

अनाद्यविद्याविद्धानां जीवानां सदसन्मयम् ।
संचितं कर्म संप्रेक्ष्य मिश्रां सृष्टिं करोम्यहम् ॥३३॥

शक्रः—

क्षीरोदसंभवे देवि स्वाच्छन्द्यं ते कथं भवेत् ।
कर्म चेत्समवेक्ष्य त्वं विदधासि सुखासुखे ॥ ३४ ॥

श्रीः—

कुर्वत्या मम कार्याणि कर्म तत्करणं स्मृतम् ।
कर्तुश्च करणापेक्षा न स्वातन्त्र्यविघातिनी ॥ ३५ ॥

निरवद्या स्वतन्त्राहं नानुयोगपदे स्थिता ।
विभजे बहुधात्मानं कर्तृकर्मक्रियादिना ॥ ३६ ॥

लीलायै कारणं नात्र मृग्यमेवं स्थिरो भव ।

शक्रः—

यद्वा तद्वास्तु तद्देवि स्वातन्त्र्यं ते यदीदृशम् ।
सृष्टिप्रकारमाख्याहि नमस्ते पद्मसंभवे ॥ ३७ ॥

इति [1]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [2]त्रैगुण्यप्रकाशो नाम
तृतीयोऽध्यायः

यथा वक्ष्यति—'ध्यानविश्रामभूमयः' (4-24) इति । ३२. असृष्टिरिति । अत्र "सृजेच्च सुखमेवैकमनुकम्पाप्रचोदितः" इति श्लोकवार्त्तिकवचनं स्मर्तव्यम् ।

## इति तृतीयोऽध्यायः

---

[1] श्रीपद्मपत्रसारे A; श्रीपाञ्चरात्रे I.

[2] मिश्रसृष्टि G; A. B. C. D. F. omit the title.

# चतुर्थोऽध्यायः

श्री [1]—

निर्मलाकाशकल्पाहं निःसमानन्दचिन्मयी ।
अहं नारायणी नाम भावोऽहं तादृशो[2] हरे ॥ १ ॥

न शान्ता नोदिता नापि मध्यमाहं चिदात्मिका ।
तादस्य हरेर्विष्णोः स्वरूपमखिलात्मनः ॥ २ ॥

[3]तस्याश्चित्रैकरूपस्य विकल्पपञ्चबीजुषः ।
अचित्राहं तदाकारा सर्वतः समतां गता ॥ ३ ॥

तयोर्नौ संविदात्मैव कश्चिदुन्मेष उत्थितः ।
कोटिकोटिसहस्रैककोटिकोटितमी कला ॥ ४ ॥

सिसृक्षा नाम तद्रूपा सृष्टिमिष्टां करोम्यहम् ।
एकांशेन विशुद्धाध्वरूपा वर्तेऽहमञ्जसा ॥ ५ ॥

वज्ररत्नप्रभा यद्वत्परिस्फुरति सर्वतः ।
एवं शुद्धमयो मार्गो मम स्फुरति सर्वतः[4] ॥ ६ ॥

[5]अमेघाकाशसङ्काशान्निष्पन्दोदधिरूपतः ।
मम ज्ञानघनाद्रूपाच्छुद्धा[6] सृष्टिः प्रवर्तते ॥ ७ ॥

[7]निर्व्यापारः सदानन्दः शुद्धः सर्वात्मकः परम् ।
व्यज्यते प्रथमं ज्ञानं स सङ्कर्षण उच्यते ॥ ८ ॥

हेत्वन्तरानपेक्षं यत् स्वातन्त्र्यं विश्वनिर्मितौ ।
तदैश्वर्यं तदासीन्मे प्रद्युम्नः पुरुषोत्तम ॥ ९ ॥

निलीनचित्ररूपा या सर्वत्र समवस्थिता ।
अव्याहतासीच्छक्तिर्मे सोऽनिरुद्धः प्रकीर्तितः ॥

सृष्टिस्थित्यन्तकर्तारो विज्ञानैश्वर्यशक्तयः ।
मम रूपममी देवाः पुरुषाः पुष्करेक्षणाः ॥ ११ ॥

अतरङ्गार्णवाभासमस्ताम्भोदाम्बरोपमम्[8] ।
रूपं सिसृक्षमाणाया वासुदेवो ममादिमम्[9] ॥

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
उन्मिषन्ति यदा तुल्यं वासुदेवस्तदोच्यते ॥ १३ ॥

तेषां ज्ञानबलोन्मेषे[10] सङ्कर्षण उदीर्यते ।
बिभर्ति सकलं विश्वं तिलकालकवत्स्वतः ॥ १४ ॥

बलमित्येव तन्नाम ततो वेदान्तशब्दितम् ।
वीर्यैश्वर्यसमुन्मेषे[11] प्रद्युम्नः परिकीर्तितः ॥ १५ ॥

विकारविरहो वीर्यमविकारी ततश्च सः ।
शक्तितेजःसमुन्मेषे ह्यनिरुद्धः स ईरितः[12] ॥ १६ ॥

तेजस्त्वन्यानपेक्षत्वमनिरुद्धत्वमच्युत[13] ।
शास्त्रं [14]सङ्कर्षणादेव भाति निर्घातशब्दवत् ॥ १७ ॥

तत्क्रिया सकला देवात्प्रद्युम्नात् सम्भवेद्यतः[15] ।
क्रियाफलमशेषं तदनिरुद्धात्प्रचक्षते ॥ १८ ॥

[1] श्रीरुवाच B
[2] तादृशी B
[3] तस्य चित्रैक E I
[4] स्वतः A B C G I
[5] अमेघा A B
[6] शुद्धा A G
[7] निर्व्यापारं E I
[8] अनभ्रादाम्बरोपमम् E I
[9] ममादिमः A G
[10] बलोन्मेषः E
[11] समुन्मेषः E I
[12] समीरितः E I
[13] अतः E I
[14] संकर्षणाद्देवात् E I
[15] संभवत्युत E I

सृजते ह्यनिरुद्धोऽत्र प्रद्युम्नः पाति तत्कृतम् ।
सृष्टं तद्रक्षितं चात्ति स च संकर्षणः प्रभुः ॥१९॥

सृष्टिस्थित्यन्तकार्येण शास्त्रधर्मफलेन च ।
अनुग्रहमिमे देवाः सदा विदधते स्वयम् ॥ २० ॥

यद्यप्येकगुणोन्मेषस्तथाप्येते[1] हि षड्गुणाः ।
अन्यूनानधिकाः सर्वे वासुदेवात्सनातनात्[2] ॥२१॥

अङ्गप्रत्यङ्गबुद्ध्यादिर्नैषां भूतमयः स्मृतः ।
षाड्गुण्यमय एवैषां दिव्यो देहः सनातनः ॥२२॥

नैवैषां वास्तवो भेदश्चिन्तनीयो दिवस्पते[3] ।
तत्तत्कार्यप्रसिद्ध्यर्थं कृतोऽसौ कल्पनावशात् ॥

ज्ञानाज्ञान्यत्तथैश्वर्यं तस्माज्ञान्या च शक्तिका ।
मयैताः कल्पिताः शक्र [4]ध्यानविश्रामभूमयः ॥२४॥

वस्तु पूर्वं ततो भावः पश्चादर्थस्ततः क्रिया ।
चातूरूप्यमिदं ज्ञेयं सर्वभावेषु सर्वदा ॥ २५ ॥

वासुदेवादिरूपेण चतुर्धात्मानमात्मना ।
संविभज्यावतिष्ठेऽहं [5]सर्वमावृत्य संविदा ॥ २६ ॥

वासुदेवादयो देवाः प्रत्येकं तु त्रिधा त्रिधा ।
केशवादिस्वरूपेण विभजन्ति स्वकं वपुः ॥ २७ ॥

एतद्व्यूहान्तरं नाम पञ्चरात्राभिशब्दितम् ।
[6]कार्यस्य नयने देवा द्वादशैते व्यवस्थिताः ॥२८॥

विभोरप्यनिरुद्धस्य हिताय जगतां हरेः ।
प्रसरो विभवो नाम पद्मनाभादयः स्मृताः ॥

आविश्याविश्य कुरुते यत्र देवनरादिकम् ।
जगद्धितं जगन्नाथस्तज्ज्ञेयं विभवान्तरम् ॥ ३० ॥

देवर्षिपितृसिद्धाद्यैः स्वयं वा जगतां हिते ।
निर्मितं भगवद्रूपमर्चा सा शुद्धचिन्मयी ॥ ३१ ॥

इत्येष लेशतो मार्गः शुद्धस्ते संप्रदर्शितः ।
त्रैगुण्यमपरं मार्गं गदन्त्या मे निशामय ॥ ३२ ॥

यत्ते ज्ञानं पुरा प्रोक्तं तत्सत्त्वेन विवर्तते ।
रजस्तया तदैश्वर्यं शक्तिश्चापि तमस्तया ॥ ३३ ॥

प्राधान्येन रजस्तत्र सृष्टौ संपरिवर्तते ।
अभितः सत्त्वतमसी गुणौ द्वौ तस्य तिष्ठतः ॥३४॥

या सा पूर्वं मया प्रोक्ता कोटिकोटितमी कला ।
तस्याः कोटितमेनाहमंशेन विसृजे जगत् ॥ ३५ ॥

सर्वस्याद्या महालक्ष्मीस्त्रिगुणाहं महेश्वरी ।
रजोरूपमधिष्ठाय सृष्टिमिष्टां करोम्यहम् ॥ ३६ ॥

अग्नीषोममयौ भावौ दिव्यौ स्त्रीपुंसलक्षणौ ।
बिभ्रती चारुसर्वाङ्गी लोकानां हितकाम्यया ॥

चतुर्भुजा विशालाक्षी तप्तकाञ्चनसंनिभा ।
मातुलुङ्गं गदां खेटं सुधापात्रं च बिभ्रती ॥३८॥

१९. अत्रानिरुद्धस्य सृष्टिकर्तृत्वं प्रद्युम्नस्य पालनकर्तृत्वं चोच्यते। पूर्वं तु द्वितीयाध्याये अनिरुद्धस्य पालनकर्तृत्वं प्रद्युम्नस्य सृष्टिकर्तृत्वं चोक्तम् । तत्तु कल्पान्तरेणेति ध्येयम् । २२. बुद्धिरत्रान्तःकरणम् । 'नैषां भूतमयः' इति वचनेन "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति शान्तिपर्ववचनं स्मारितम् । २४. ध्यानेति । उपासकानां यथारुच्यालम्बनदानाय तत्र भेदपरिकल्पनेत्यर्थः । २७. एवं च केशवादिदामोदरान्ता द्वादशापि व्यूहान्तरभूता ध्येयाः । ३०. 'देवनरादिकम्' इत्यनेन दत्तात्रेयबादरायणादीनामपि विभवान्तरत्वं ध्येयम् । ३१. स्वयमित्यनेन स्वयंव्यक्तक्षेत्रस्थार्चा गृह्यन्ते । ३६. अनेन त्रिगुणजगत्सृष्टिकर्तृत्व-

[1] तथाप्येते E. [2] सनातनाः A. B. D. [3] विभिन्ना E. I.
[4] ध्येयाः A. B C. D. [5] सर्वदा A. C. D; सर्वदा सत्य B. [6] कारुण्य E.

महालक्ष्मी समाख्याता साह सर्वाङ्गसुन्दरी।
महाश्री सा महालक्ष्मीश्चण्डा चण्डी च चण्डिका॥

भद्रकाली तथा भद्रा काली दुर्गा महेश्वरी।
त्रिगुणा भगवत्पत्नी तथा भगवती परा ॥ ४० ॥

एता सञ्ज्ञास्तथा चान्यास्तत्र मे बहुधा स्मृता ।
विकारयोगादन्याश्च तास्ता वक्ष्याम्यशेषत ॥४१॥

लक्षयामि जगत्सर्वं पुण्यापुण्ये कृताकृते।
[1]महनीया च सर्वत्र महालक्ष्मी प्रकीर्तिता॥४२॥

महद्भि श्रयणीयत्वान्महाश्रीरिति [2]गद्यते।
चण्डस्य दयिता चण्डी चण्डत्वाच्चण्डिका मता॥

कल्याणरूपा भद्रास्मि काली च कलनात्सताम्।
द्विषता कालरूपत्वादपि काली प्रकीर्तिता ॥ ४४ ॥

सुन्दा द्विषता चैव युगपत्सदसद्विधे ।
भद्रकाली समाख्याता मायाश्चर्यगुणात्मिका॥४५॥

महत्त्वाच्च महामाया मोहना मोहिनी मता।
दुर्गा च दुर्गमत्वेन भक्तरक्षाविधेरपि ॥ ४६ ॥

योजनाच्चैव योगाह योगमाया च कीर्तिता।
मायायोगेति विज्ञेया ज्ञानयोजनतो नृणाम्॥४७॥

पूर्णषाड्गुण्यरूपत्वात्साह भगवती स्मृता।
भगवद्यज्ञसयोगात्पत्नी भगवतोऽस्म्यहम्॥ ४८ ॥

विशालत्वात्स्मृता व्योम पूरणाच्च पुरी स्मृता[3]।
परावरस्वरूपत्वात् स्मृता चाह परावरा ॥ ४९ ॥

शकनाच्छक्तिरुक्ताह रागह [4]रञ्जनात् सदा।
सदा शान्तविकारत्वाच्छान्ताह परिकीर्तिता॥५०॥

भक्त प्रश्रियते विश्व प्रकृति सास्मि कीर्तिता।
श्रयन्ती श्रयणीयास्मि शृणामि दुरित सताम्॥

शृणोमि करुणा वाच शृणामि च गुणैर्जगत्।
[5](शयेऽन्त) सर्वभूताना रमेऽह पुण्यकर्मणाम्॥

ईडिता च सदा देवै शरीर चास्मि वैष्णवम्।
एतान्मयि गुणान् दृष्ट्वा वेदवेदान्तपारगा ॥५३॥

गुणयोगविधानज्ञा श्रिय मा सप्रचक्षते।
साहमेवविधा नित्या सर्वाकारा सनातनी ॥५४॥

दशाया महालक्ष्मीसमाख्येति ज्ञायते । ४५. मायाश्चर्येति। अनेनाश्चर्यांवहत्व मायाशब्दार्थ इत्युक्त भवति। अनेन मायाशब्दस्य मिथ्यार्थकत्वकल्पन वार्यते। ४७. ज्ञानयोजनत इति। अनेन "माया वयुन ज्ञानम्" इति यास्कवचनात् मायाशब्दस्य ज्ञानार्थकत्वमुक्त भवति।"सभवाम्यात्ममायया" इत्यत्र आत्मसङ्कल्पेनत्यर्थवर्णनमप्येतन्मूलकमेव। ४८. यज्ञसयोगादिति। "पत्युर्नो यज्ञसयोगे" इत्यनुशासनसिद्ध रूपम्। भगवद्यज्ञश्च आश्रितजनरक्षणरूपो ज्ञेय । तत्रास्या सयोग पुरुषकारत्वादिना। ५१. "श्रि श्रयणे" "शॄ हिंसायाम्" इति च धातु । ५२. "श्रु श्रवणे" "शॄ प्रीणने" "शी स्वप्ने" "रमु क्रीडायाम्" इति धातवो विवक्षिता। श्रीनाम्नि शकारविवरणम्—शयेऽन्तरिति। रेफविवरणम्—रमेऽहमिति। ५३. ईकारविवरणम्—ईडितेति। "ईड स्तुतौ" इति धातु । विष्णो शरीर रूपमित्यर्थ ।

## इति चतुर्थोऽध्याय:

[1] महती या B [2] गीयते E [3] पुर स्थिता A B C G [4] रज्जनात् B
[5] All the Mss and the printed book read wrongly शयते

गुणत्रयमधिष्ठात्री त्रिगुणा परिकीर्तिता ।
[1]गुणवैषम्यसर्गाय प्रवृत्ताह सिसृक्षया ॥ ५५ ॥

तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा ।
निरालोकमिम लोक पूरयामि स्वतेजसा ॥ ५६ ॥

शून्य तदखिल लोक स्वेन पूरयितु पुरा ।
भरामि स्वपर रूप तमसा केवलेन तु ॥ ५७ ॥

सा भिन्नाञ्जनसकाशा [2]दष्ट्राङ्कितवरानना ।
विशाललोचना नारी बभूव तनुमध्यमा ॥ ५८ ॥

खड्गपात्रशिर खेटैरलङ्कृतमहाभुजा ।
कबन्धहारा शिरसि बिभ्राणाहिशिर स्रजम् ॥

सा मा प्रोवाच सभूता तामसी प्रमदोत्तमा ।
[3] नाम कर्म च मे मातर्देहि तुभ्य नमो नम ॥ ६० ॥

श्री [4]—
तामब्रव वरारोहा तामसीं प्रमदोत्तमाम् ।
ददामि तव नामानि यानि कर्माणि तानि ते ॥ ६१ ॥

महाकाली महामाया महामारी क्षुधा तृषा[5] ।
निद्रा कृष्णा[6] चैकवीरा कालरात्रिर्दुरत्यया ॥ ६२ ॥

एतानि तव नामानि प्रतिपाद्यानि नामभि ।
एभि कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम् ॥

अपर्याप्तमिम सर्ग मन्यमानाहमादिमम् ।
सत्त्वोन्मेषमय रूप भरामि स्मेन्दुसन्निभम् ॥ ६४ ॥

अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी ।
सा बभूव वरा नारी नाम कर्म तदा ह्यदाम् ॥६५॥

महाविद्या महावाणी भारती वाक् सरस्वती ।
आर्या ब्राह्मी महाधेनुर्वेदगर्भा च धीश्च गी[7] ॥

नामानुरूप [8]कर्म स्यात् [9]सात्त्विकस्या कार्यमद्भुतम् ।
वय तिस्रो जगद्धात्र्यो मातरश्च प्रकीर्तिता ॥६७॥

इति [10]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [11]महालक्ष्मीसमुद्भूतिर्नाम चतुर्थोऽध्याय

---

[1] गुणैर्विषम्य A B C D [2] दष्ट्रान्विता A B C D [3] [illegible] added before नाम I
[4] A B C F omit श्री [5] क्रिया A B C F [6] कृष्णा A B C F
[7] A B C read wrongly [illegible] , [illegible] I [8] [illegible] E G
[9] [illegible] A B C D [10] [illegible] I [illegible] A
[11] A B C D F omit the title, [illegible] G
3

## पञ्चमोऽध्यायः

श्री[1]—

या सा हता हरेराद्या सर्वाकारा सनातनी ।
शुद्धानन्दचिदाकारा सर्वत समता गता ॥ १ ॥

साह सिसृक्षया युक्ता स्वल्पाल्पेनात्मबिन्दुना ।
सृष्टिं कृतवती शुद्धा[2] पूर्णषाड्गुण्यविग्रहाम्[3] ॥२॥

अनुज्झितस्वरूपाह [4]मदीयेनाल्पबिन्दुना ।
महालक्ष्मी समाख्याता त्रैगुण्यपरिवर्तिनी ॥ ३ ॥

रज प्रधाना तत्र ह महाश्री परमेश्वरी ।
मदीय [5]यत्तमोरूप महामायेति सा स्मृता ॥ ४ ॥

मदीय सत्त्वरूप यन्महाविद्येति सा स्मृता ।
अह च ते च कामियौ ता वय तिस्र ऊर्जिता ॥

सम्भवत्यस्तु मिथुनान्यनुरूपाणि च त्रिधा ।
मदीय मिथुन यत्तन्मानस रुचिराकृति ॥ ६ ॥

हिरण्यगर्भ पद्माक्ष सुन्दर कमलासनम् ।
प्रद्युम्नाशादिद विद्धि सभूत मयि मानसम् ॥ ७ ॥

धाता विधिर्विरिञ्चिश्च ब्रह्मा च पुरुष स्मृत ।
श्री पद्मा कमला लक्ष्मीस्तत्र नारी प्रकीर्तिता ॥८॥

सकर्षणाशतो द्वन्द्व महामायासमुद्भवम् ।
त्रिनेत्र चारुसर्वाङ्ग मानस तत्र य पुमान् ॥ ९ ॥

स रुद्र शकर स्थाणु कपर्दी च त्रिलोचन ।
तत्र त्रयीश्वरा भाषा विद्या चैवाक्षरा तथा ॥ १० ॥

कामधेनुश्च विज्ञेया सा स्त्री गौश्च[6] सरस्वती ।
अनिरुद्धाशसभूत महाविद्यासमुद्भवम ॥ ११ ॥

मिथुन मानस यत्तत्पुरुषस्तत्र केशव ।
विष्णु कृष्णो हृषीकेशो वासुदेवो जनार्दन ॥१२॥

उमा[7] गौरी सती चण्डा तत्र स्त्री सुभगा सती ।
ब्रह्मणस्तु त्रयी पत्नी सा बभूव ममाज्ञया ॥ १३ ॥

रुद्रस्य दयिता गौरी वासुदेवस्य चाम्बुजा ।
रजसस्तमसश्चैव सत्त्वस्य च विवर्तनम् ॥ १४ ॥

आद्य पर्व तदेतत्ते कथित मिथुनत्रयम् ।
मध्यम पर्व वक्ष्यामि गुण ना तदिद शृणु ॥ १५ ॥

भाषया सह सभूय विरिञ्चोऽण्डमजीजनत् ।
मदाज्ञया[8] विशेदैतत्स गौर्या सह शकर ॥ १६ ॥

१. अत्र शान्तावस्था । द्वितीयश्लोके उदितावस्था । तृतीयश्लोके त्रैगुण्यावस्था महालक्ष्मीसमाख्या । चतुर्थे रज प्रधानावस्था महाश्री महालक्ष्म्यपरपर्याया । तम प्रधानतया पूर्वाध्यायोक्ता महामाया । पञ्चमे पूर्वाध्यायोक्तसत्त्वप्रधाना महाविद्या । १५. आद्य पर्वेति । राजस्या लक्ष्म्या प्रद्युम्नाशात् मानसी सृष्टि—विरिञ्चि, श्रश्च । तामस्या महामायया

[1] श्रीरुवाच B
[2] शुद्धा I
[3] विग्रहा I
[4] मदीयनाम A B D
[5] तत्तमो A E
[6] गौरी E I
[7] मदा A B C, D
[8] ममाज्ञया B C G

अण्डमध्ये प्रधान यत्कार्यमासीत्तु वेधस ।
तदेतत्पालयामास पद्मया सह केशव ॥ १७ ॥

तदेतन्मध्यम पर्व गुणाना परिकीर्तितम ।
तृतीय पर्व वक्ष्यामि तदिहैकमना शृणु ॥ १८ ॥

अण्डमध्ये प्रधान हि यत्तत्सदसदात्मकम ।
त्रैगुण्य प्रकृतिर्व्योम स्वभावो योनिरक्षरम् ॥ १९ ॥

तदेतत्सलिलीकृत्य तत्त्वमव्यक्तसज्ञकम् ।
हृषीकेश स भगवान् पद्मया सह विद्यया ॥ २० ॥

अप्सु[1] सशयन चक्रे निद्रायोगमुपागत ।
या सा प्रोक्ता महाकाली सा निद्रा तामसी ह्यभूत् ॥

शयानस्य तदा पद्ममभून्नाभ्या पुरदर ।
तत्कालमयमाख्यात पङ्कज यदपङ्कजम ॥ २२ ॥

[2]जलाधिकरण पद्ममाधार पुष्कर तथा ॥
चक्र च पुण्डरीक चेत्येव नामानि तस्य तु ॥२३॥

शक्र —
चिदचित्तत्त्वमाख्यात चेतनश्चित्प्रकीर्तित ।
अचित् त्रैगुण्यमित्युक्त कीदृक् कालोऽपर स्मृत ॥

श्री —
अचिदशोऽपर कालस्त्रैगुण्यमपर स्मृतम ।
बलादिक तु यत्पूर्व षाड्गुण्ये त्रिकमीरितम ॥२५॥

तदेतत्कालरूपेण सृष्टौ सपरिवर्तते ।
स्वतश्चापरिणामीद[3] त्रैगुण्य परिणामि तत् ॥२६॥

कालकाल्यात्मक[4] द्वन्द्वमचिदेतत्प्रकीर्तितम ।
सृजन्त्या विविधान् भावान्मम देव्या महाश्रिय ॥

कालोऽय करणत्वेन वर्तते मन्मय सदा ।
तस्मात्कालमयात्पद्माद्विष्णुनाभिसमुद्भवात् ॥ २८ ॥

ब्रह्मा वेदमयो जज्ञे [5]स त्रय्या सह वीर्यवान् ।
हिरण्यगर्भ उक्तो य [6] पूर्व लक्ष्मीसमुद्भव ॥२९॥

महाकालीसमुद्भूता या सा नारी त्रयी स्मृता ।
तदेतन्मिथुन जज्ञे[7] विष्णोर्नाभिसरोरुहात्[8] ॥३०॥

पद्म [9]पद्मोद्भवद्वन्द्व तदेतत् त्रितय सह ।
महास्तामस आख्यातो विकार [10]पूर्वकैर्बुधै ॥३१॥

प्राणो हिरण्यगर्भश्च बुद्धिश्चेति त्रिधा भिदा ।
पद्मपुस्त्रीसमालम्बान्महत्त्व तस्य शब्द्यते ॥ ३२ ॥

सकर्षणाशात् मानसी सृष्टि —रुद्र, त्रयी च । सात्त्विक्या महाविद्याया अनिरुद्धाशात् मानसी सृष्टि —विष्णु, गौरी च । तत राजसस्य विरिञ्चे तामस्या त्रय्या, तामसस्य रुद्रस्य सात्त्विक्या गौर्या, सात्त्विकस्य विष्णो राजस्या श्रिया चेति दापत्यपरिकल्पनरूपमित्यर्थ । मध्यम पर्वेति । धात्रा अण्डसृष्टि । रुद्रेण तद्भेदनम् । तत्र पुनश्च धात्रा अण्डमध्ये प्रधानसृष्टि । विष्णुना तत्परिपालनरूपमित्यर्थ । १८. तृतीय पर्वेति । विष्णोर्नाभिसरोरुहात् हिरण्यगर्भस्य त्रय्या सह प्रादुर्भाव । नाभिपद्म तदुद्भूत द्वन्द्व चेति त्रय समुदित महदिति कथ्यते । तस्मादहकारादिक्रमेण प्रपञ्चसृष्टिरूपमित्यर्थ । २५. त्रिकमिति । बलैश्वर्यवीर्यरूपमित्यर्थ । २७. काल क्षणादि । काल्य त्रिगुण तद्विकारजात च । ३१. पद्मोद्भवद्वन्द्व हिरण्यगर्भस्त्रयी च । ३२. प्राण

[1] अब्धि C [2] काग E I [3] अपरिणामोऽय E I [4] कल्यात्मक A B
[5] त्रय्या सह स C [6] अयं A [7] चक्र E I [8] नाभीसरोरुहात् A B
[9] धर्मादिक चैव F G [10] पूर्वगो I

गुण प्राणस्य तु स्पन्दो बुद्धेरध्यवसायता ।
धर्मादिकमधर्मान्त द्वय पुसो [1]गुणो मत ॥ ३३ ॥

धर्मो ज्ञान च वैराग्यमैश्वर्यं चेति वर्णित [2] ।
धर्मादिको गुणो यस्मादधर्माद्या प्रकीर्तिता ॥३४॥

महान्तमानिशन्त्येन प्रेरयामि स्वसृष्टये[3] ।
प्रेर्यमाणात्ततस्तस्मादहकारश्च जज्ञिवान् ॥ ३५ ॥

[4]पूर्वं य शकर प्रोक्तो महामायासमुद्भव ।
या पत्नी तस्य गौरी सा जज्ञेऽभिमतिरत्र तु ॥३६॥

आनिश्यामुमहकार सृष्टये प्रेरयाम्यहम् ।
स बभूव त्रिधा पूर्वं गुणव्यतिक्रमात्तदा ॥ ३७ ॥

तामसस्तत्र भूतादिस्तस्य सर्गमिद शृणु ।
भूतादे शब्दतन्मात्र तन्मात्राच्छब्दसभव ॥३८॥

मत्प्रेरिताच्छब्दमात्रात्स्पर्शमात्र बभूव ह ।
स्पर्शस्तु स्पर्शतन्मात्रात्तन्मात्रात्प्रेरितान्मया ॥ ३९ ॥

तदासीद्रूपतन्मात्र तस्माच्च प्रेरितान्मया ।
रूपमाविर्बभूवात्र रसमात्र तत परम् ॥ ४० ॥

रसमात्रान्मया [5]क्षिप्तात्तस्माज्जज्ञे रसस्तत ।
गन्धतन्मात्रमप्यासीत्तस्माच्च प्रेरितान्मया ॥ ४१ ॥

शुद्धो गन्ध समुद्भूत इतीय भौतिकी भिदा ।
मात्राणि सूक्ष्मभूतानि स्थूलभूतानि चापरे ॥४२॥

शब्दादय समाख्याता गुणा शब्दादयस्तु ये ।
स्थूलभूतविसर्गास्ते नान्ये शब्दादयो गुणा ॥४३॥

शान्तत्व चैव घोरत्व मूढत्व चेति तत् त्रिधा ।
सत्त्वाद्युन्मेषरूपाणि तानि सूक्ष्मेषु सन्ति न ॥

तेन तन्मात्रता तेषा सूक्ष्माणा परिकीर्तिता ।
सुखदु खादिदायित्वात् स्थूलत्वमितरत्र तु ॥४५॥

स्थूलानामेव भूताना त्रिधावस्था[6] प्रकीर्तिता[7] ।
सूक्ष्माश्च पितृजाश्चैव प्रभूता इति भेदत ॥४६॥

घटाद्या [8]स्त्रिविधा बाह्या प्रभूता इति शब्द्यते ।
शुक्लशोणितसभूता विशेषा पितृजा स्मृता ॥४७॥

सूक्ष्मास्तु पञ्चभूता स्यु सूक्ष्मदेहव्यपाश्रया ।
सर्गो भूतादिजो ह्येव क्रमश परिकीर्तित ॥ ४८ ॥

अहकारस्य यावशौ रज सत्त्वसमाश्रयौ ।
वैकारिक इति प्रोक्त सात्त्विकोंऽशस्तयो पर [9] ॥

तैजस कथित सद्भिस्तयो सृष्टिमिमा शृणु ।
वैकारिकादहकारादासीच्छ्रोत्रादिधीन्द्रियम् ॥५०॥

हिरण्यगर्भ बुद्धिरिति महतो भेदा । ३३. पुस इति । हिरण्यगर्भस्येत्यर्थ । ३४. यस्मादिति । धर्मादीना विपर्यासा अधर्म , अज्ञानम् , अवैराग्यम् , अनैश्वर्यं चेति ज्ञेया इत्यर्थ । ३६. अहकारस्यैवाभिमतिरिति गुण आख्यान्तर च । ३८. तामसाहकारस्य भूतादिरिति, सात्त्विकाहकारस्य वैकारिक इति, राजसाहकारस्य तैजस इति च नामान्तर बोध्यम् । ४८. शब्दतन्मात्रात् शब्द स्पर्शतन्मात्र च जातम् । स्पर्शतन्मात्रात् स्पर्श रूपतन्मात्र च जातम् । रूपतन्मात्रात् रूप रसतन्मात्र च जातम् । रसतन्मात्रात् रस गन्धतन्मात्र च जातम् । गन्धतन्मात्रात् गन्धो जात इत्यत्रत्या प्रक्रिया । साख्यास्तु—भूतादेरेव सर्वेषा तन्मात्राणामुत्पत्तिं वदन्ति । औपनिषदप्रक्रिया तु—भूतादे शब्दतन्मात्रम् , तस्मादा-

[1] गुणोत्तम A B C
[2] वर्णितम् E F
[3] सिसृक्षया G
[4] य पूर्वं E
[5] क्षुब्धात् E I
[6] अवस्था F
[7] प्रकीर्तिता A F
[8] त्रिधा E I
[9] अशस्तु योऽपर E

कर्मेन्द्रियं च वागादि तैजसात्संप्रवर्तते ।
[1]उभयस्मात्ततश्चासीद् बुद्धिकर्मेन्द्रियं मनः ॥५१॥

श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
बुद्धीन्द्रियाणि पञ्चाहुः शक्तिरेषा मदात्मिका ॥५२॥

वाक् च हस्तौ च पादौ च तथोपस्थं च पायु च ।
कर्मेन्द्रियाणि पञ्चाहुः शक्तिरेषा मदात्मिका ॥५३॥

या सा विज्ञानशक्तिर्मे पारंपर्यक्रमागता ।
बुद्धीन्द्रियाण्यधिष्ठाय विषयेषु प्रवर्तते ॥ ५४ ॥

क्रियाशक्तिश्च या सा मे पारंपर्यक्रमागता ।
कर्मेन्द्रियाण्यधिष्ठाय कर्तव्येषु प्रवर्तते ॥ ५५ ॥

श्रोत्रस्य विषयः शब्दः श्रवणं च क्रिया मता ।
त्वचश्च विषयः स्पर्शः स्पर्शनं च क्रिया मता ॥५६॥

चक्षुषो विषयो रूपं दर्शनं च क्रिया मता ।
जिह्वाया विषयो रस्यो रसनं च क्रिया मता ॥५७॥

घ्राणस्य विषयो गन्ध आघ्राणं च क्रिया मता ।
वृत्तयो विषयेष्वस्य श्रोत्रादेः श्रवणादयः ॥ ५८ ॥

[2]आलोचनानि कथ्यन्ते धर्मिमात्रग्रहश्च सः ।
दिक् च विद्युत्तथा सूर्यः सोमो वसुमती तथा ॥

अधिदैवमिति प्रोक्तं क्रमाच्छ्रोत्रादिपञ्चके ।
[3]अधिभूतमिति प्रोक्तः शब्दाद्यो विषयः क्रमात् ॥

श्रोत्रादिपञ्चकं त्वेतदध्यात्मं परिकीर्तितम् ।
[4]श्रोत्रादेः सात्त्विकात्सृष्टिर्वियदादिव्यपेक्षया ॥

तेन भौतिकमित्युक्तं क्रमाच्छ्रोत्रादिपञ्चकम् ।
वाचस्तु विषयः शब्दो वचनं च क्रिया मता ॥६२॥

[5]हस्तेन्द्रियस्य चादेयमादानं च क्रिया मता ।
पादेन्द्रियस्य गन्तव्यं गमनं च क्रिया मता ॥६३॥

उपस्थस्य तदानन्द्यमानन्दश्च क्रिया मता ।
विसृज्यं विषयः पायोर्विसर्गश्च क्रिया मता ॥ ६४ ॥

हस्तादिकं चतुष्कं यत्तत्पञ्चविषयात्मकम् ।
अग्निरिन्द्रश्च विष्णुश्च [6]तथैवाद्यः प्रजापतिः ॥६५॥

मित्रश्चेति क्रमाज्ज्ञेया अधिदेवा विचक्षणैः ।
शब्दः पञ्चात्मकं चैव वागादेर्विषयो हि यः ॥६६॥

सोऽधिभूत इति प्रोक्तो वागाद्यध्यात्ममुच्यते ।
मनस्तु सहकार्यस्मिन्नुभयत्रापि पञ्चके ॥ ६७ ॥

[7]ज्ञानेन्द्रियगणेश्चैतद्विकल्पं तनुते मनः ।
विकल्पो विविधा क्लृप्तिस्तत्र प्रोक्तं विशेषणम् ॥

धर्मेण सह संबन्धो धर्मिणश्च स उच्यते ।
विकल्पः पञ्चधा ज्ञेयो द्रव्यकर्मगुणादिभिः ॥ ६९ ॥

दण्डीति द्रव्यसंयोगाच्छुक्लो गुणसमन्वयात् ।
गच्छतीति क्रियायोगात्पुमान् सामान्यसंस्थितेः[8] ॥

काशः, तस्मात् स्पर्शतन्मात्रम्, तस्माद्वायुः; तस्मात् रूपतन्मात्रम्, तस्मादग्निः; तस्मात् रसतन्मात्रम्, तस्मात् जलम्, तस्मात् गन्धतन्मात्रम्, तस्मात् पृथिवी जातेति । ५१. वैकारिकात् ज्ञानेन्द्रियाणां, तैजसात् कर्मेन्द्रियाणां चोत्पत्तिरिति भेदपरिकल्पनमत्र । औपनिषदास्तु— सर्वेषामपीन्द्रियाणां वैकारिकादुत्पत्तिमाचक्षते । तथा मनस उभयेन्द्रियत्वं सांख्यमतरीत्या । औपनिषदमते तु ज्ञानेन्द्रियत्वमेव । ५९. आलोचनं नाम शब्दादिधर्माणां सूक्ष्मग्रहणमन्तरा वस्तुमात्रग्रहणम् । तदप्यसूक्ष्ममेव । आहुश्च—"अस्ति ह्यालोचन ज्ञान प्रथमं निर्विकल्पकम् ।

[1] A. B. D. F. G omit 9 lines from here. [2] आलोचनादि A. B. C. G.
[3] C. omits this and the next line. [4] श्रोत्रादिगन्धिर्वा G. [5] F. G. omit this line.
[6] तथैव च. A. G. [7] ज्ञानेन्द्रियगणे चैतत् A. B. [8] संस्थानात् E.

गुण प्राणस्य तु स्पन्दो बुद्धेरध्यवसायता ।
धर्मादिकमधर्माद्य द्वय पुसो [1]गुणो मत ॥ ३३ ॥

धर्मो ज्ञान च वैराग्यमैश्वर्यं चेति वर्णित [2] ।
धर्मादिको गुणो यस्मादधर्माद्या प्रकीर्तिता ॥३४॥

महान्तमाविशन्स्येन प्रेरयामि स्वसृष्टये[3] ।
प्रेर्यमाणात्ततस्तस्मादहकारश्च जज्ञिवान् ॥ ३५ ॥

[4]पूर्वं य शकर प्रोक्तो महामायासमुद्भव ।
या पत्नी तस्य गौरी सा जज्ञेऽभिमतिरत्र तु ॥३६॥

आविश्यामुमहकार सृष्टये प्रेरयाम्यहम् ।
स बभूव त्रिधा पूर्वं गुणव्यतिकरात्तदा ॥ ३७ ॥

तामसस्तत्र भूतादिस्तस्य सर्गमिद शृणु ।
भूतादे शब्दतन्मात्र तन्मात्राच्छब्दसभव ॥३८॥

मत्प्रेरिताच्छब्दमात्रात्स्पर्शमात्र बभूव ह ।
स्पर्शस्तु स्पर्शतन्मात्रात्तन्मात्रात्प्रेरितान्मया ॥ ३९ ॥

तदासीद्रूपतन्मात्र तस्माच्च प्रेरितान्मया ।
रूपमाविर्बभूवाथ रसमात्र तत परम् ॥ ४० ॥

रसमात्रान्मया [5]क्षिप्तात्तस्माज्जज्ञे रसस्तत ।
गन्धतन्मात्रमप्यासीत्तस्माच्च प्रेरितान्मया ॥ ४१ ॥

शुद्धो गन्ध समुद्भूत इतीय भौतिकी भिदा ।
मात्राणि सूक्ष्मभूतानि स्थूलभूतानि चापरे ॥४२॥

शब्दादय समाख्याता गुणा शब्दादयस्तु ये ।
स्थूलभूतविसर्गास्ते नान्ये शब्दाद्यो गुणा ॥४३॥

शान्तत्व चैव घोरत्व मूढत्व चेति तत् त्रिधा ।
सत्त्वाद्युन्मेषरूपाणि तानि सूक्ष्मेषु सन्ति न ॥

तेन तन्मात्रता तेषा सूक्ष्माणा परिकीर्तिता ।
सुखदु खादिदायित्वात् स्थूलत्वमितरत्र तु ॥ ४५ ॥

स्थूलानामेव भूताना त्रिधावस्था[6] प्रकीर्तिता[7] ।
सूक्ष्माश्च पितृजाश्चैव प्रभूता इति भेदत ॥ ४६ ॥

घटाद्या [8]विविधा बाह्या प्रभूता इति शब्द्यते ।
शुक्रशोणितसभूता विशेषा पितृजा स्मृता ॥४७॥

सूक्ष्मास्तु पञ्चभूता स्यु सूक्ष्मदेहव्यपाश्रया ।
सर्गो भूतादिजो ह्येव क्रमश परिकीर्तित ॥ ४८ ॥

अहकारस्य यावशौ रज सत्त्वसमाश्रयौ ।
वैकारिक इति प्रोक्त सात्त्विकोंऽशस्तयो पर [9] ॥

तैजस कथित सद्भिस्तयो सृष्टिमिमा शृणु ।
वैकारिकादहकारादासीच्छ्रोत्रादिधीन्द्रियम् ॥५०॥

हिरण्यगर्भ बुद्धिरिति महतो भेदा । ३३. पुस इति । हिरण्यगर्भस्येत्यर्थ । ३४. यस्मादिति । धर्मादीना विपर्यासा अधर्म, अज्ञानम्, अवैराग्यम्, अनैश्वर्यं चेति ज्ञेया इत्यर्थ । ३६. अहकारस्यैवाभिमतिरिति गुण आख्यान्तर च । ३८. तामसाहकारस्य भूतादिरिति, सात्त्विकाहकारस्य वैकारिक इति, राजसाहकारस्य तैजस इति च नामान्तर बोध्यम् । ८८. शब्दतन्मात्रात् शब्द स्पर्शतन्मात्र च जातम् । स्पर्शतन्मात्रात् स्पर्श रूपतन्मात्र च जातम् । रूपतन्मात्रात् रूप रसतन्मात्र च जातम् । रसतन्मात्रात् रस गन्धतन्मात्र च जातम् । गन्धतन्मात्रात् गन्धो जात इत्यत्रत्या प्रक्रिया । साख्यास्तु—भूतादेरेव सर्वेषा तन्मात्राणामुत्पत्ति वदन्ति । औपनिषदप्रक्रिया तु—भूतादे शब्दतन्मात्रम्, तम्मादा-

[1] गुणात्तम A B C
[2] वर्णितम् E F
[3] सिसृक्षया G
[4] य पूर्व E
[5] क्षुब्धात् E I
[6] अवस्था F
[7] प्रकीर्तिता A F
[8] त्रिविधा E I
[9] अशस्तु योऽपर E

कर्मेन्द्रिय च वागादि तैजसात्सम्प्रवर्तते ।
[1]उभयस्मात्ततश्चासीद् बुद्धिकर्मेन्द्रियं मन ॥५१॥

श्रोत्र त्वक् चैव चक्षुश्च जिह्वा घ्राण च पञ्चमम् ।
बुद्धीन्द्रियाणि पञ्चाहु शक्तिरेषा मदात्मिका ॥५२॥

वाक् च हस्तौ च पादौ च तथोपस्थ च पायु च ।
कर्मेन्द्रियाणि पञ्चाहु शक्तिरेषा मदात्मिका ॥५३॥

या सा विज्ञानशक्तिर्मे पारम्पर्यक्रमागता ।
बुद्धीन्द्रियाण्यधिष्ठाय विषयेषु प्रवर्तते ॥ ५४ ॥

क्रियाशक्तिश्च या सा मे पारम्पर्यक्रमागता ।
कर्मेन्द्रियाण्यधिष्ठाय कर्तव्येषु प्रवर्तते ॥ ५५ ॥

श्रोत्रस्य विषय शब्द श्रवण च क्रिया मता ।
त्वचश्च विषय स्पर्श स्पर्शन च क्रिया मता ॥५६॥

चक्षुषो विषयो रूप दर्शन च क्रिया मता ।
जिह्वाया विषयो रसो रसन च क्रिया मता ॥५७॥

घ्राणस्य विषयो गन्ध आघ्राण च क्रिया मता ।
वृत्तयो विषयेष्वस्य श्रोत्रादे श्रवणादय ॥५८॥

[2]आलोचनानि कथ्यन्ते धर्मिमात्रग्रहश्च स ।
दिक् च विद्युत्तथा सूर्य सोमो वसुमती तथा ॥

अधिदैवमिति प्रोक्त क्रमाच्छ्रोत्रादिपञ्चके ।
[3]अधिभूतमिति प्रोक्त शब्दाद्यो विषय क्रमात् ॥

श्रोत्रादिपञ्चक त्वेतदध्यात्म परिकीर्तितम् ।
[4]श्रोत्रादे सात्त्विकात्सृष्टिर्वियदादिव्यपेक्षया ॥

तेन भौतिकमित्युक्त क्रमाच्छ्रोत्रादिपञ्चकम् ।
वाचस्तु विषय शब्दो वचन च क्रिया मता ॥६२॥

[5]हस्तेन्द्रियस्य चादेयमादान च क्रिया मता ।
पादेन्द्रियस्य गन्तव्य गमन च क्रिया मता ॥६३॥

उपस्थस्य तदानन्दमानन्दश्च क्रिया मता ।
विसृज्य विषय पायोर्विसर्गश्च क्रिया मता ॥ ६४ ॥

हस्तादिक चतुष्क यत्तत्पञ्चविषयात्मकम् ।
अग्निरिन्द्रश्च विष्णुश्च [6]तथैवाद्य प्रजापति ॥६५॥

मित्रश्चेति क्रमाज्ज्ञेया अधिदेवा विचक्षणै ।
शब्द पञ्चात्मक चैव वागादेर्विषयो हि य ॥६६॥

सोऽधिभूत इति प्रोक्तो वागाद्यध्यात्ममुच्यते ।
मनस्तु सहकार्यस्मिन्नुभयत्रापि पञ्चके ॥ ६७ ॥

[7]ज्ञानेन्द्रियगणैश्चैतद्विकल्प तनुते मन ।
विकल्पो द्विविधा क्लृप्तस्तत्र प्रोक्त विशेषणम् ॥

धर्मेण सह सबन्धो धर्मिणश्च स उच्यते ।
विकल्प पञ्चधा ज्ञेयो द्रव्यकर्मगुणादिभि ॥ ६९ ॥

दण्डीति द्रव्यसयोगाच्छुक्लो गुणसमन्वयात् ।
गच्छतीति क्रियायोगात्पुमान् सामान्यसश्रितो [8] ॥

काश, तस्मात् स्पर्शतन्मात्रम्, तस्माद्वायु, तस्मात् रूपतन्मात्रम्, तस्मादग्नि, तस्मात् रसतन्मात्रम्, तस्मात् जलम्, तस्मात् गन्धतन्मात्रम्, तस्मात् पृथिवी जातेति । ५१. वैकारिकात् ज्ञानेन्द्रियाणा, तैजसात् कर्मेन्द्रियाणा चोत्पत्तिरिति भेदपरिकल्पनमत्र । औपनिषदास्तु—सर्वेषामपीन्द्रियाणा वैकारिकादुत्पत्तिमाचक्षते । तथा मनस उभयेन्द्रियत्व साख्यमतरीत्या । औपनिषदमते तु ज्ञानेन्द्रियत्वमेव । ५९. आलोचनं नाम शब्दादिधर्मिणा स्फुटग्रहणमन्तरा वस्तुमात्रग्रहणम् । तदप्यस्फुटमेव । आहुश्च—"अस्ति ह्यालोचन ज्ञान प्रथमं निर्विकल्पकम् ।

[1] A B D F G omit 9 lines from here
[2] आलोचनादि A B C G
[3] C. omits this and the next line
[4] भावादिमिन्द्रियो G
[5] F G omit this line
[6] तथैव यो A G
[7] ज्ञानेन्द्रियगणे चैतत् A B
[8] संश्रयात् E.

[1]इत्थ शब्दसमायोगादितीय पञ्चधा स्थिति ।
कर्मेन्द्रियगणैश्चैतत्सङ्कल्प तनुते मन ॥ ७१ ॥

औदासीन्यच्युतिर्या सा सङ्कल्पोद्योगनामिका ।
अहङ्कारेण चैतस्मिन्नुभयत्र गणे स्थिति ॥ ७२ ॥

ज्ञानेन्द्रियगणे सोऽयमभिमानेन वर्तते ।
देशकालान्वयो ज्ञातुरभिमान प्रकीर्तित ॥ ७३ ॥

ममात्र पुरतो भातीत्येव वस्तु प्रतीयत ।
कर्मेन्द्रियगणे त्वेष सरम्भेण प्रवर्तत ॥ ७४ ॥

सङ्कल्पपूर्वरूपस्तु[2] सरम्भ [3] परिकीर्तित ।
बुद्धिरध्यवसायेन ज्ञानेन्द्रियगणे स्थिता ॥ ७५ ॥

बुद्धिरध्यवसायार्थावधारणमुदीर्यते ।
अवधारणमर्थाना निश्चय परिकीर्तित ॥ ७६ ॥

कर्मेन्द्रियगणे बुद्धि प्रयत्नेन प्रवर्तते ।
त्रयोदशविध ज्ञेय[4] तदेतत्करण बुधै ॥ ७७ ॥

बाह्य दशविध ज्ञेय त्रिधान्त करण स्मृतम् ।
त्रयोविंशतिरेत तु [5]विकारा परिकीर्तिता ॥ ७८ ॥

करणानि दश त्रीणि सूक्ष्मांशा स्थूलसभवा ।
एतत्सूक्ष्मशरीर तु विराज परिकीर्तितम ॥ ७९ ॥

[6]व्यष्ट्य सूक्ष्मदेहाश्च[7] प्रतिजीव व्यवस्थिता ॥
अपवर्ग निवर्तन्ते जीवेभ्यस्त स्वयोनिजा ॥८०॥

अन्योन्यानुग्रहेणैते त्रयोविंशतिरुत्थिता [8] ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते॥८१॥

तदण्डमभवद्धैम सहस्रांशुसमप्रभम्[9] ।
तस्मिन् प्रजापतिर्जज्ञे विराड् देवश्चतुर्मुख ॥८२॥

विराजश्च मनुर्जज्ञे मनोस्त मानवा स्मृता ।
मरीचिप्रमुखास्तेभ्यो जगदेतच्चराचरम् ॥ ८३ ॥

प्रकारोऽय ममोत्पत्त्या लेशतस्ते प्रदर्शित ।
[10]स्वत शुद्धापि चिच्छक्ति सविद्यानाद्यविद्यया ॥

दु ख जन्मजराद्युत्थ तत्रस्था प्रतिपद्यते ।
शुद्धविज्ञानसबन्धाच्छुद्धकर्मसमन्वयात् ।
यदा धुनोत्यविद्या ता तदा [11]सानन्दमश्नुत॥८५॥

इति [12]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [13]प्राकृतसृष्टिप्रकाशो नाम पञ्चमोऽध्याय

वाल्मीकादिविज्ञानमदश मुग्धवस्तुकम् ॥" इति । ८७. अत्र पूर्वोक्त एव सृष्टिक्रमो मन्वादिसृष्ट्या सह सङ्कल्प्योच्यते ।

## इति पञ्चमोऽध्यायः

---

[1] A B D F G omit four l nes from here
[2] स्प तु E
[3] संरम्भ I
[4] तत्र E I
[5] विराज B
[6] सृष्ट्य E I
[7] भगाश्च A B
[8] ऊर्जिता A B D
[9] सहस्रभम् G
[10] स्वच्छा F
[11] सानन्त्य E
[12] श्रीपाञ्चरात्र A श्रीपाञ्चराने I
[13] A omits the title, महादिजगत्सृष्टि E G I

# षष्ठोऽध्यायः

श्रीः[1]—

पूर्णस्तिमितषाड्गुण्यचिदानन्दमहोदधेः ।
अहंताहं हरेराद्या निस्तरङ्गार्णवाकृतेः ॥ १ ॥

साहमेवंविधा शुद्धा कचिदुच्छूनतां गता ।
सिसृक्षालक्षणा देवी स्वतन्त्रा सच्चिदात्मिका ॥

षट्कोशतां समापद्ये सत्ताहं वैष्णवी परा ।
शक्तिर्माया प्रसूतिश्च प्रकृतिस्त्रिगुणात्मिका ॥ ३ ॥

ब्रह्माण्डं [2]जीवदेहश्चेत्येते षट्कोशसंज्ञिताः ।
सिसृक्षा या परा विष्णोरहंतायाः समुद्गता ॥ ४ ॥

शक्तिः सा प्रथमः कोश शुद्धमार्गप्रवर्तनी ।
कोशः कुलायपर्यायः शरीरापरनामवान् ॥ ५ ॥

शुद्धेऽस्मिन् प्रथमे कोशे प्रथमोन्मेषलक्षणे ।
अहंमानी परो ह्यासीद्देवः संकर्षणः प्रभुः ॥ ६ ॥

तिलकालकवत्तत्र विकारो मसृणः स्थितः ।
तस्याहंता तु [3]या देवी साहं [4]सांकर्षणी परा ॥

श्रीरित्येव[5] समाख्याता विज्ञानबलशालिनी ।
यस्तस्या मे समुन्मेषः प्रद्युम्नः स तु कीर्त्यते ॥

संकर्षणस्य देवस्य शक्तिकोशाभिमानिनः ।
[6]बुद्धित्वे वर्तते देवः प्रद्युम्नः पुरुषोत्तमः ॥ ९ ॥

भोक्तृभोग्यसमष्टिस्तु निलीना[7] तत्र तिष्ठति ।
मनोभूतस्य देवस्य तस्याहंता तु या स्मृता ॥१०॥

साहं सरस्वती नाम [8]वीर्यैश्वर्यविवर्तिनी ।
यो मे तस्याः समुन्मेषः सोऽनिरुद्धः प्रकीर्तितः ॥

तस्य संकर्षणस्याहमहंकारविधौ स्थिता ।
संकर्षणादयो देवास्त्रय एते पुरातनाः ॥ १२ ॥

जीवो बुद्धिरहंकार इति नाम्ना प्रकीर्तिताः ।
नैवैते प्राकृता देवाः किंतु शुद्धचिदात्मकाः ॥१३॥

आदिव्यूहस्य[9] देवस्य वासुदेवस्य दीव्यतः ।
तत्तत्कार्यकरत्वेन तत्तन्नाम्ना निरूपिताः ॥ १४ ॥

सर्वे ते षड्गुणाः प्रोक्ताः सर्वे ते पुरुषोत्तमाः ।
पूर्णस्तिमितषाड्गुण्यसदानन्दमहोदधेः ॥ १५ ॥

षण्णां युगपदुन्मेषो गुणानां[10] कार्यवत्तया ।
योऽभूत्स वासुदेवस्तु व्यूहः प्रथमकल्पितः ॥

तस्य शान्तिरहंता तु साहं शक्तिः प्रकीर्तिता ।
शक्तिकोशस्थिता देवाः [11]सूयन्ते यत्र चिन्तिताः ॥

अनिरुद्धस्य याहंता रतिरित्येव संज्ञिता ।
सैव देवी महालक्ष्मीर्मायाकोशः स उच्यते ॥

३. शक्तिमायाप्रसूतिप्रकृतिब्रह्माण्डजीवदेहाख्येषु षट्सु कोशेषु शक्तिकोशः शुद्धमार्गप्रवर्तकः । तत्रैव संकर्षणादीनां त्रयाणामाविर्भावः । ८. संकर्षणस्य महिषी श्रीः । प्रद्युम्नस्य सरस्वती । अनिरुद्धस्य रतिः । वासुदेवस्य शान्तिः । १८. मायाकोशमारभ्याशुद्धसृष्टिः ।

[1] श्रीरुवाच B. [2] जीवदेहाश्च B. [3] देवी या E. I. [4] संकर्षणी B.
[5] एवं B. [6] बुद्धिवत् A. B [7] निलीनं B. [8] वीर्यशौर्यं A. I.
[9] व्यूहस्य F. [10] उन्मेषात् षाड्गुण्यं B. [11] त्रयस्ते E. I.

महालक्ष्म्या य उन्मेषो मायाया गुणसञ्ज्ञित ।
महाकालीमहाविद्याद्वय सपरिकीर्त्यते ॥ १९ ॥

महालक्ष्मीमहामायामहाविद्यामयो महान् ।
प्रसूतिर्नाम कोशो मे तृतीय परिपठ्यते ॥ २० ॥

त्रीण्यत्र मिथुनान्यासन् यानि पूर्वोदितानि ते ।
प्रधान सलिलीकृत्य यन्ठेत पुरुषोत्तम ॥ २१ ॥

सा प्रोक्ता प्रकृतिर्योनिर्गुणसाम्यस्वरूपिणी ।
निरिञ्चोऽजनयत्तद्वै पूर्वमण्ड स्वमात्मनि ॥ २२ ॥

तदेके प्रकृतिं प्राहुस्तत्त्वशास्त्रविशारदा ।
महदाद्यै पृथिव्यन्तैरण्ड यन्निर्मित सह ॥ २३ ॥

तद्ब्रह्माण्डमिति[1] प्रोक्त यत्र ब्रह्मा विराडभूत् ।
अङ्गप्रत्यङ्गयुक्त यच्छरीर [2]जीविनामिह ॥ २४ ॥

एषा कोशविधा षष्ठी क्रमशस्तनुता गता ।
अवरोहा पडेत मे पूर्णाया परिकीर्तिता ॥२५॥

आद्ये कोशे स्वय देवस्त्रिधैवाहतया स्थित ।
पञ्चस्वन्येषु कोशेषु जीवा नानाविधा स्थिता ॥

शुभाशुभविभागोत्था भजन्ते विविधा दशाम् ।
दिव्यास्तिस्रस्त्रयस्तासा[3] मिथुनानि च यानि तु ॥

अण्डमध्येऽवताराश्च तासा तेषा च ये स्मृता ।
स्वातन्त्र्यनिर्मितास्त्वेते[4] नैव कर्मवशानुगा ॥२८॥

अप्राकृताश्च ते देहा उभयेषा प्रकीर्तिता ।
अन्ये पञ्चसु कोशेषु देवाद्या स्थावरान्तिमा ॥

नानास्थानजुषो जीवा कर्मभि ससरन्ति ये ।
[5]अधिकारक्षय नीत्वा शुभपाकवशादिमे ॥ ३० ॥

सप्राप्य ज्ञानभूयस्त्व योगक्षपितकल्मषा ।
आरोहन्ति शनै कोशानारूढा न पतन्ति ते ॥३१॥

सत्यलोकात्प्रभृत्येते या भूमिमधिरोहिता ।
पुनस्ते न निवर्तन्त तिष्ठन्त्यूर्ध्वं व्रजन्ति वा ॥ ३२ ॥

शक्र [6]—

क्षीरोदसभवे देवि पद्मनाभकुटुम्बिनि ।
जीव को नाम [7]तद् ब्रूहि नमस्ते पद्मसभवे ॥३३॥

श्री —

पूर्णाहता हरेराद्या साह सवश्वरी परा ।
[8]तस्या स्मृताश्चतस्रो मे दशास्त्रिदशपुगव ॥ ३४ ॥

प्रमातेति त्रिधा त्वेका तदन्त करण परा ।
बहि करणमन्या च चतुर्थी भावभूमिका ॥३५॥

प्रमाता चेतन प्रोक्तो मत्सकोच स उच्यते ।
अह हि देशकालाद्यैरपरिच्छेदमीयुषी ॥ ३६ ॥

महालक्ष्म्या राजसत्व प्रपञ्चसृष्टिनिदानत्व च पूर्वमुक्तम् । २०. प्रसूतिकोश राजस्या महालक्ष्म्या, तामस्या महामायाया, सात्त्विक्या महाविद्यायाश्च समवायरूप । २१ त्रीणि मिथुनानि पञ्चमाध्याये सप्तमादिभि सप्तभि श्लोकैर्वर्णितानि । प्रधानमेव प्रकृतिकोश इत्युच्यते । एतासा मायाप्रभृतिप्रकृतीना तमोऽव्यक्तप्रकृतिनामभिरुपनिषत्सु व्यवहार । ३०. अधिकारेति । "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति बादरायणसूत्रम् । ३६. प्रमाता जीव । अन्त करण मनोबुद्ध्यहकाररूपेण त्रिविधम् । बहि करण ज्ञानेन्द्रिय-

[1] ब्रह्माण्डमिद E
[2] जीवतामिह E
[3] त्रयस्त्वासा E I
[4] निर्मितास्ते ते E I
[5] अधिकार E
[6] शक्र उवाच F
[7] त E
[8] सत्या E

स्वातन्त्र्यादेव संकोचं भजाम्यजहती स्वताम् ।
प्रथमस्तत्र संकोचः प्रमातेति प्रकीर्त्यते ॥ ३७ ॥

चिदात्मनि यथा विश्वं मयि लीनमवस्थितम् ।
प्रमातरि तथैवैतद्दर्पणोदरशैलवत् ॥ ३८ ॥

ऐकरूप्यं द्विरूपत्वं त्रिरूपत्वं चतुर्भिदाम् ।
[1]सप्तपञ्चकरूपत्वं प्रमाता यत्प्रपद्यते ॥ ३९ ॥

प्रकाशेनात्मनो[2] ह्येको ग्राह्यग्राहकतावशात् ।
द्वैरूप्यं तत्त्रिरूपत्वं ज्ञानाकारक्रियात्मना ॥ ४० ॥

सप्तपञ्चकरूपत्वं तत्तत्तत्त्वस्थितौ स्थितम् ।

शक्रः—
[3]कानि तत्त्वानि पद्माक्षि कति कीदग्विधानि च ॥

एतत्पृष्टा मया ब्रूहि नमस्ते [4]सिन्धुसंभवे ।

श्रीः[5]—
[6]स्थूलसूक्ष्मविभेदेन भूतानि दश खानि च ॥ ४१ ॥

ज्ञानकर्मविभेदेन त्रीण्यन्तःकरणानि च ।
प्रकृतिश्च प्रसूतिश्च माया सत्त्वं रजस्तमः ॥ ४२ ॥

कालश्च नियतिः शक्तिः पुरुषः परमं नभः ।
भगवानिति तत्त्वानि सात्त्वताः समधीयते ॥ ४३ ॥

शक्रः—
मया श्रुतानि तत्त्वानि त्वद्वक्त्रसरसीरुहात् ।
व्याचक्ष्वैतानि मे देवि नमस्ते सरसीरुहे ॥ ४४ ॥

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [8]षट्कोशप्रश्नो नाम
षष्ठोऽध्यायः

कर्मेन्द्रियरूपेण दशविधम् । भावभूमिका प्रमेयप्रपञ्चजातम् । ३०. [illegible]
टाद्यवस्थाः ।

इति षष्ठोऽध्यायः

---

[1] षट्सप्तपञ्च A. B C.
[2] आत्मना E.
[4] पद्म B
[5] श्रीरुवाच B
[7] श्रीपञ्चरात्रे A. E.; श्रीपञ्चरात्रे I.
[8] I. omits the line

# सप्तमोऽध्यायः

श्री[1]—

व्याचक्षेऽहं [2]तत शक्र क्रमशस्तत्त्वपद्धतिम् ।
शुद्धाशुद्धविमिश्रेय तत्त्वपद्धतिरुच्यते ॥ १ ॥

[3]निरभ्रोदाम्बराभासो निष्पन्दोदधिसन्निभ ।
स्वच्छस्वच्छन्दचैतन्यसदानन्दमहोदधि ॥ २ ॥

आकारदेशकालादिपरिच्छेदविवर्जित[4] ।
भगवानिति विज्ञेय परमात्मा सनातन ॥ ३ ॥

तस्याहता परा तादृग्भगवत्ता सनातनी ।
नारायणी परा सूक्ष्मा निर्विकल्पा निरञ्जना ॥४॥

ज्ञानशक्तिबलैश्वर्यवीर्यतेजोमहोदधि ।
षण्णा युगपदुन्मेषो गुणाना प्रथमो हि य ॥ ५ ॥

भवद्भावात्मकत्वेन द्विधा स व्यपदिश्यते ।
भवस्तु वासुदेवोऽत्र भावोऽस्मिन् वासुदेवता ॥

शान्तिर्नाम्ना समाख्याता साहं देवी सनातनी ।
सकर्षणादयो व्यूहा साहता प्राड् निरूपिता ॥

त्रयश्च चातुरात्म्य तच्चत्वारोऽमी सुरेश्वर ।
एतावद्भगवद्वाच्य [5]निस्तत्त्व तत्त्वमुत्तमम ॥ ८ ॥

नभस्तु परम व्योम परमाकाशशब्दितम ।
यत्र [6]देवो मया सार्धं विभज्यात्मानमात्मना ॥९॥

क्रीडते रमया विष्णु परमात्मा सनातन ।
षाड्गुण्यस्य समुन्मेष स देश परमाम्बरम् ॥

पुरुषो भोक्तृकूटस्थ सर्वज्ञ सर्वतोमुख ।
अशत प्रसरन्त्यस्मात्सर्वे जीवा सनातना ॥

[7]प्रलये त्वपियन्त्येन कर्मात्मानो नर परम् ।
इय मातृदशा सा मे [8]या ते पूर्वं मयोदिता ॥

महालक्ष्मी समाख्याता शक्तितत्त्व मनीषिभि ।
नियतिस्तु महाविद्या काल काली प्रकीर्तिता ॥

सत्त्व रजस्तमश्चेति गुणत्रयमुदाहृतम् ।
सुखरूप स्मृत सत्त्व स्वच्छ ज्ञानकर [9]लघु ॥ १४ ॥

दु खरूप रजो ज्ञेय चल रक्त प्रवर्तकम् ।
[10]मोहरूप तमो ज्ञेय गुरु कृष्ण नियामकम् ॥१५॥

माया चैव प्रसूतिश्च प्रकृतिश्चेति[11] वासव ।
पुरस्ताद्व्याहृत तुभ्य तदेतत्प्रकृतित्रिकम् ॥ १६ ॥

७. पूर्वाध्यायोक्तानि पञ्चत्रिंशत् तत्त्वानि व्युत्क्रमेण निरूप्यन्ते। तत्रादावत्र भगवत्तत्त्वनिरूपणम् । भगवत्तत्त्व च शान्तावस्थ परवासुदेव , उदितावस्था व्यूहा , तेषामपृथक्सिद्धा देवी चेति । ८ निस्तत्त्वम्, तत्त्वान्तरेभ्यो निष्क्रान्तम्, अतिशयितमित्यर्थ । तदेवाह—तत्त्वमुत्तममिति । १०. परव्योम्न षाड्गुण्यसमुन्मेषरूपत्वकथनेनाजडत्वमभिप्रेतम् जडत्वपक्षोऽप्यस्ति

[1] श्रीर्व्याच B
[2] तु ते E. I
[3] निर्नीरदा E I
[4] विशारणविवर्जित A B C F
[5] तत्त्वत D E I
[6] देशे B F
[7] प्रलये त्वपि यान्त्यन A   प्रलयेऽपि विशन्त्येन E F I
[8] पूर्वमेव B F
[9] गुरु B
[10] E omits three lines from here
[11] प्रकृतिश्चैव B

[1]भूतानि दशसंख्यानि तथा खानि त्रयोदश ।
त्रयोविंशतिरप्येते सुस्पष्टं व्याकृता पुरा[2] ॥ १७ ॥

तदयं मम संकोचः प्रमाता शुद्धचिन्मयः ।
स्वान्तःस्फुरिततत्त्वौघः स्थितो दर्पणवत्सदा ॥१८॥

चातूरूप्यं तु यत्तस्य तदिहैकमनाः शृणु ।
आद्यं शून्यमयो माता मूर्छादौ परिकीर्तितः ॥

[3]ततः प्राणमयो माता सुषुप्तौ परिकीर्तितः ।
प्राणा एव प्रतायन्ते सुषुप्तौ पुरुषस्य तु ॥ २० ॥

मूर्छाविषोपघातादौ प्राणोऽपि विनिवर्तते ।
केवलं स्वात्मसत्तैव[4] ततः शून्यस्तदा पुमान् ॥२१॥

तृतीयोऽष्टपुरीमात्रः स्वप्ने माता प्रकीर्तितः ।
प्राणा भूतानि कर्माणि करणानि त्रयो गुणाः ॥

प्राग्वासना अविद्या च लिङ्गं पुर्यष्टकं स्मृतम् ।
स्वप्नेऽन्तःकरणेनैव स्वैरं हि परिवर्तते ॥ २३ ॥

चेष्टमानः स्वदेहेन देही जाग्रद्दशां गतः ।
चातूरूप्यमिदं [5]पुंसस्त्रैरूप्यमपि मे शृणु ॥ २४ ॥

ज्ञानक्रियास्वरूपाणां संकोचस्त्रिविधस्तु यः[6] ।
तस्य तद्धि त्रिरूपत्वं तस्य व्याख्यामिमां शृणु ॥

मायया ज्ञानसंकोच [7]आनैश्वर्यात्क्रियात्ययः ।
अशक्तेरणुता रूपे त्रिधैव व्यपदिश्यते ॥ २६ ॥

अणुः किंचित्करश्चैव किंचिज्ज्ञश्चायमित्युत[8] ।
त्रैरूप्यमेकरूप्यं च पूर्वमेव निरूपितम् ॥ २७ ॥

एवं [9]मातृदशा मेऽद्य सविशेषा प्रकीर्तिता ।
आन्तःकरणिकीं चैव दशां शक्राद्य मे शृणु ॥

स्वच्छन्दा संविदेवाहं स्वतश्चेतनतां गता ।
हित्वा चेतनतां तां चाप्यवरूढा ततः [10]क्रमात् ॥

चैत्यसंकोचनी चित्तमन्तःकरणमीरितम् ।
मनोबुद्धिरहंकार इत्येतत् त्रितयं च[11] तत् ॥ ३० ॥

[12]विकल्पोऽध्यवसायश्चाप्यभिमानश्च वृत्तयः ।
मनो विकल्पयत्यर्थमहंकारोऽभिमन्यते ॥ ३१ ॥

अध्यवस्यति बुद्धिश्च चेतनाधिष्ठिता सदा ।
बुद्धिरध्यात्ममित्युक्ता निर्णयोऽप्यधिभूतकम्[13] ॥

परेषाम् । ११. भोक्तृकूटस्थो जीवसमष्टिरूपः पुरुषो हिरण्यगर्भः । १८. एवं षष्ठाध्याये ४२, ४३, ४४ तमैः श्लोकैः प्रस्तुतानि पञ्चत्रिंशतं तत्त्वानि निरूप्य, तत्रैव ३५ तमे श्लोके प्रस्तुता आत्मनश्चतस्रो दशा निरूपयति—तदयमित्यारभ्य यावदध्यायपरिसमाप्ति । २२. अष्टपुरीमात्रः । मात्रशब्दः प्रमाणार्थकः; केवलार्थको वा । बाह्यचेष्टारहित इत्यर्थः । अष्टपुर्यश्चानन्तरश्लोके वक्ष्यन्ते । २३. लिङ्गं सूक्ष्मशरीरम् । २६. क्रियात्ययः अभीप्सितक्रियाकरणासामर्थ्यम् । आनैश्वर्यमित्यत्र अनीश्वरस्य भाव इत्यर्थे ष्यञि उभयपदवृद्धिः । स्वरूपसंकोचेनाणुरूप इत्युक्त्या जीवस्य स्वाभाविकं विभुरूपत्वमिति न मन्तव्यम्, तस्याणुस्वरूपत्वस्यानेकप्रमाणसिद्धत्वात् । तस्मादत्र विशिष्याणुरूपत्ववर्णनमसर्वशक्तत्वासर्वज्ञत्वादिपरं वेदितव्यम् । तदेवाशक्तेरित्यनेन विव्रियते । २८. पूर्वाध्याये अन्तःकरणदशा द्वितीया निर्दिष्टा । सात्र विवि-

[1] A. B C. I. omit this line
[2] व्याहृतं मया B
[3] B. omits this line.
[4] सत्त्वैव G
[5] पुंसा B
[6] स्थितः स्मृता. B
[7] ऽनै I
[8] उच्यते B D.
[9] मातृदशामेव्य सविशेषा: प्रकीर्तिता: A. B.
[10] दशात् E. I.
[11] तु B I.
[12] विकल्पो व्यवसायः A. I.
[13] अधिभौतिकम् A. B.

बुद्धिर्दर्पणसलीन क्षेत्रज्ञश्चाधिदैवतम् ।
अहङ्कृतिस्तथाध्यात्ममभिमानोऽधिभूतकम् ॥३३॥

अधिदैवमथो रुद्रो मनोऽध्यात्म प्रकीर्तितम् ।
विकल्पोऽप्यधिभूतस्तु चन्द्रमा अधिदैवतम् ॥३४॥

प्राणसरम्भसकल्पा गुणा एषा क्रियाविधौ ।
[1]प्राण प्रयत्न इत्युक्त सरम्भो गर्व उच्यते ॥३५॥

[2]फलस्वाम्यस्वरूपश्च गर्व सरम्भ उच्यते ।
औदासीन्यच्युति प्रोक्त सकल्पो मानसो बुधै ॥

व्याख्यातेय द्वितीया मे ह्यन्त करणिकी दशा ।
प्रच्यवन्ती ततो रूपादन्त करणिकादहम् ॥ ३७ ॥

स्थानता क्रमश प्राप्ता बहिष्करणसज्ञिता[3] ।
करणानि तु बाह्यानि व्याख्यातानि मया पुरा ॥

ज्ञानेन्द्रियप्रवृत्तौ तु मनआदि प्रवर्तते ।
चक्षुरालोकयत्यर्थं विकल्पयति [4]तन्मन ॥ ३९ ॥

[5]आलोकनविकल्पस्थमहकारोऽभिमन्यते ।
अध्यवस्य ततो बुद्धि क्षेत्रज्ञाय प्रयच्छति ॥४०॥

कर्मेन्द्रियप्रवृत्तौ तु विपर्यस्त क्रम स्मृत ।
सकल्पादे पराचीना वचनादिक्रिया यत ॥४१॥

अध्यात्मादिविशेषोऽत्र सर्व पूर्वमुदीरित ।
तृतीयेय विधाख्याता बहिष्करणवर्तिनी ॥४२॥

चतुर्थीं त्वमिमा कोटिं मेयरूपा तु मे शृणु ।
मेय [6]तु द्विविध तावद्बहिरन्तर्व्यवस्थया ॥ ४३ ॥

बाह्य तु नीलपीतादि सुखदु खाद्यथान्तरम् ।
आमिश्रतस्तुमिश्राह विधामि स्थानता गता ॥

स्वचित्तोत्थविकल्पार्थं प्रत्यक्षाप्यस्मि विस्मृता ।
सदाचार्योपदेशेन सत्तर्कमनुरुन्धता ॥ ४५ ॥

निरूप्ये निपुणैर्यत्र [7]मेयेऽप्यस्मि तदा स्फुटम् ।
विलाप्य सकल भाव चेत्यरूपमिम तथा ॥ ४६ ॥

स्वच्छन्दा पूर्णचिद्रूपा प्रकाशेऽह तदा स्वयम् ।
स्वच्छा स्वच्छतरा साह तत करणसज्ञिता ॥४७॥

ततो मातर्यतिस्वच्छा स्फुरामि स्वच्छचिन्मयी ।
आरोहमवरोह च भावयन्मामकावुभौ ।
मच्चित्तो मद्गतप्राणो मद्भावायोपपद्यते ॥ ४८ ॥

इति [8]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [9]प्रमातृकरणप्रकाशो नाम
सप्तमोऽध्याय

यते । ३०. चेत्यम्, चितो भाव, चेतन्यमित्यथ । ३१. विकल्प, विविध कल्प, अनिर्णयात्मक ज्ञानम् । अभिमन्यते, स्वकीयत्वेन बुध्यते । ३०. अध्यवस्यति, निश्चिनोति । ४०. अध्यवस्य, अध्यवसाय, अध्यवसाय कृत्वेत्यर्थ । ४१. पराचीना, पश्चाद्भवा । ४३. मेयेति । इदमेव भावभूमिकेति पूर्वं निदिष्टम् । ८६. चेत्यम्, मेयम् ।

## इति सप्तमोऽध्यायः

---

[1] F omits this line [2] E I omit this line, फलस्वत्वस्वरूपश्च संरम्भो गर्व उच्यते B
[3] संज्ञिता E [4] कमग E I [5] आलोचन I
[6] तद् E [7] मयेयास्मि A B D I [8] पञ्चरात्र A पाञ्चरात्रे I, पञ्चरात्रे सारे B E F
[9] A B C D F I omit the title, शुद्धमिश्रतत्त्वनिरूपण G

# अष्टमोऽध्यायः

शक्र —

नमस्ते सिन्धुसभूते नमस्ते पद्मसभवे ।
नम सरोरुहावासे नारायणकुटुम्बिनि ॥ १ ॥

अवतारास्तु ये प्रोक्तास्त्वदीया कोशपञ्चके ।
[1]तान्मे विस्तरत पद्मे प्रच्छते वक्तुमर्हसि ॥ २ ॥

किमर्था किंप्रकारास्ते कियन्त रिस्वरूपका ।
तत्त्व कथय मे देवि सर्वज्ञा ह्यसि शाश्वती ॥३॥

श्री —

अतरङ्गमनिर्देश्यमप्रकम्प्यमनूपमम्[2] ।
[3]अप्रकारमसभेद्यमविकल्पमनाकुलम्[4] ॥ ४ ॥

एक नारायण ब्रह्म शून्य शुद्ध निरामयम् ।
[5]यदिद दृश्यते किंचिच्छ्रूयते वानुमीयते ॥ ५ ॥

प्रमाणत्रयसबोध्य[6] भावाभावस्वलक्षणम् ।
चराचरमणु स्थूल चेतनाचेतन जगत् ॥ ६ ॥

तदिद सकल ब्रह्म नारायणमनुत्तरम्[7] ।
[8]अविद्याविधुरानन्दस्वच्छस्वच्छन्दचिद्घनम् ॥७॥

भवद्भावात्मक दिव्यमध्वन पारमुत्तमम् ।
शक्तिमच्छक्तिभावेन तद् द्विधा व्यवतिष्ठते ॥८॥

शक्तिमत्तत् पर ब्रह्म नारायणमह भवत् ।
शक्तिर्नारायणी साहमहता भावरूपिणी ॥ ९ ॥

स प्रदेशो न तस्यास्ति येन भूत मया विना ।
स प्रदेशो न मे कश्चिद्विना तत्तेन भूयते ॥ १० ॥

एकधा [9]च द्विधा चैव तैस्तैस्तत्त्वाब्धिपारगै ।
व्यपदिश्यावहे शास्त्रैस्तावावा सर्वकारणम् ॥११॥

भावोत्तरा कचित्सृष्टि कचित्सा भवदुत्तरा ।
भवद्भावोत्तरा कापि विद्वास्तत्र न मुह्यति ॥ १२ ॥

एक एवावतीर्णो हि देवाना कार्यवत्तया ।
नारायणो यदा साह तत्र तद्भावभाविनी ॥ १३ ॥

एकैव चावतीर्णाह यदा देवहितेप्सया ।
अहताया मयि व्यक्त स देवोऽहपदार्थवान् ॥

अवतीर्णौ यदा तुल्य देवकार्यचिकीर्षया ।
अन्योन्ययो स्थितावावा भवद्भावात्मकौ [10]द्वयो ॥

७. प्रथम शक्तिकोशो भगवत पररूपस्य चतुर्व्यूहाना च सनद्ध इति सुविदितमिति कृत्वा तमुपेक्ष्य मायादिपञ्चकोशविषय प्रश्न क्रियतेऽत्र—कोशपञ्चक इति । ४. प्रसङ्गाद्भगवत पररूपस्य शक्तिकोशावस्थितिमाह—अतरङ्गमित्यादि । अत्र पष्ठाध्यायसप्तदशश्लोकोक्तमनुसधेयम् । ५. नारायण इत्याख्यात नारायणम् । ६. प्रमाणत्रय प्रत्यक्षानुमानशब्दा । ९. अहम्, अहप्रतीतिविषय । १०. विना तत्, तद् ब्रह्म विनेत्यर्थ । १७. माया-

[1] तन्मे A
[2] अरूपरम् E I
[3] अप्रराद C
[4] अविकारमनाकुलम् B
[5] B omits 8 lines from here
[6] समेत A C L
[7] अह भवत् A F, अनुत्तमम् E I
[8] F omits 4 lines from here
[9] तत् B
[10] द्वयी A B C D

इत्थ व्यवस्थिते तत्त्वे ह्यवतारगतिं शृणु ।
अनिरुद्धो [1]विभुदवो देवदेव सनातन ॥ १६ ॥

महाविद्यासमुद्भूतस्तदाहमपि वासव ।
मत्त एव महालक्ष्म्या अभूव कमलाख्यया ॥१७॥

ताविमौ दम्पती दिव्यौ पितरौ जगता मतौ ।
पद्मनाभावतारे तु तावेतौ द्वावयोनिजौ ॥ १८ ॥

नारायणावतारो य शक्तीशो नाम नामत ।
प्रकारा वहवस्तस्य सर्वत्राहमनुव्रता ॥ १९ ॥

एकधा [2]द्विचतुर्धा च षोढा चैव तथाष्टधा ।
पुनर्द्वादशधा [3]चैव तत्र नामानि मे शृणु ॥

श्रीर्नाम [4]द्विभुजस्याहमङ्कस्था वरवर्णिनी ।
तस्यैवोभयतोरूपे श्रीश्च पुष्टिश्च वासव ॥ २१ ॥

चतुर्दिश तु तस्यैव श्री कीर्तिश्च जया तथा ।
मायेति कृत्वा रूपाणि [5]भुज्येऽह तेन विष्णुना ॥

तस्यैव कोणषट्कस्था षोढाह शृणु नाम च ।
शुद्धिर्निरञ्जना नित्या ज्ञानशक्तिश्च वासव ॥ २३ ॥

तथापराजिता चैव षष्ठी तु प्रकृति परा ।
तस्यैव चाष्टधा दिक्षु साह रूपैर्व्यवस्थिता ॥२४॥

लक्ष्मी सरस्वती सर्वकामा प्रीतिवर्धनी ।
यशस्करी शान्तिदा च तुष्टिदा पुष्टिरष्टमी ॥ २५ ॥

[6]कोणद्विषट्के तस्यैव स्थिता द्वादशधास्म्यहम्[7] ।
श्रीश्च कामेश्वरी [8]कान्ति क्रियाशक्तिविभूतय ॥

इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ।
एव चतुर्भुजस्यापि षोढाह क्रमश स्थिता[9] ॥२७॥

तस्यैव [10]षड्भुजस्याहमष्टबाहोश्च वासव ।
द्विषड्बाहोस्तथा साह द्विसप्तकभुजस्य च ॥ २८ ॥

तथा षोडशहस्तस्य भुजाद्विनवकस्य च ।
विभज्य बहुधात्मानमियद्भेदा व्यवस्थिता ॥ २९ ॥

अवतारो हि यो विष्णो सिन्धुशायीति सञ्जित ।
स्थिताह पारितस्तस्य चतुर्धा रूपमेयुषी ॥ ३० ॥

लक्ष्मीर्निद्रा तथा प्रीतिर्विद्या चेति विभेदिनी ।
अवतारो हि यो विष्णो [11]श्रीपतिर्नाम नामत ॥

श्रीरित्येवाख्यया तत्र तस्याह वामत स्थिता ।
अवतारो हि यो विष्णोर्नामत पारिजातजित् ॥

[12]तदसरथकरा तस्य वामोत्सङ्गे हरे स्थिता ।
अवतारो हि यो विष्णोर्नाम्ना मीनधर शुभ ॥

[13]अनुभ्रमामि त तत्र साह नौरूपधारिणी ।
त्रैविक्रमोदयो विष्णोरवतार पर स्मृत ॥३४॥

आह्लादजननी गङ्गा तत्पादात्प्रभवाम्यहम् ।
अनन्तशयनो नाम योऽवतारो हरेरहम् ॥ ३५ ॥

कोशावतारमाह—मत्त एव महालक्ष्म्या इति । अत्र पष्ठाध्यायाष्टादशश्लोकोक्तमनुसधेयम् ।
१८. प्रकृतिकोशावतारमाह—पद्मनाभावतार इत्यादिना । महालक्ष्मीमहाविद्यामहामायानामव-
तारोऽत्र पष्ठाध्याये विंशश्लोके पूर्वमुक्त ३०. प्रकृतिकोशावतारमाह—सिन्धुशायी ति । अत्र

[1] अमरदेव A B G
[2] च चतुधा B E I
[3] चेति E
[4] द्विभुजा साहं A, द्विभुजास्याह D
[5] भुञ्जेऽह E
[6] कोणषट्क तु B कोणषट्क तु तस्यैव षड्भुजस्याहमष्टधा F
[7] ह्यहम् B
[8] शान्ति A, कीर्ति F
[9] तथा E
[10] षड्भुजस्यैव B E
[11] शचीशा A
[12] तदानन्दकरा A G
[13] अनुमदकमात्तन A B D

स्थिता चतुर्दिश तस्य चातुरात्म्यमुपेयुषी ।
लक्ष्मीश्चिन्ता तथा निद्रा पुष्टिश्चेत्याख्यया युता ॥

इत्येषु सह सिद्धाहमवतीर्णाण्डमध्यत ।
[1]अवतारा पृथग्भूता यदा ब्रह्माण्डमध्यत ॥

अनुव्रता तथैवाहमवतीर्णा प्रथक् पृथक् ।
अवतारो हि यो नाम वराहो वेदविश्रुत ॥ ३८ ॥

तदाहमपि भूर्नाम पृथग्भूता भजाम्यहम् ।
अवतारो हि यो नाम धर्मो विष्णु पुरातन ॥

तदाह भार्गवी नाम ख्यातिजा श्री प्रकीर्तिता ।
अवतारो हि यो नाम दत्तात्रेयोऽत्रिनन्दन ॥४०॥

तदा हि तस्य भोगाय [2]सरसोऽह समुत्थिता[3] ।
अवतारो हि यो नाम वामनो वैष्णव शुभ ॥

पद्मादह समुत्पन्ना तदा पद्मेति विश्रुता ।
अवतारो यदा विष्णोर्भार्गवो रामसज्ञित ॥ ४२ ॥

तदाह धरणी नाम शक्तिरासमयोनिजा ।
अवतारो हि यो नाम रामो दाशरथि शुभ ॥

जाता जनकयज्ञेऽह क्षेत्राद्धलमुखक्षतात् ।
नाम्ना सीतेति विख्याता दशाननविनाशनी ॥४४॥

अवतारो हि यो विष्णोश्चतुर्धा सभविष्यति ।
मधुरायामह व्यक्तिं चतुर्धैष्यामि वै तथा ॥ ४५ ॥

रेवती रुक्मिणी चैव रतिर्नाम्ना तथा ह्युपा ।
अवतारान्तर यत्तु मोहन बुद्धसज्ञकम् ॥ ४६ ॥

ताराह तत्र नाम्ना वै [4]धारा चैव प्रकीर्तिता ।
ध्रुवादयोऽवतारा ये केवला वैष्णवा स्मृता ॥

तत्तच्छरीरभूताह तेषा भोग्या व्यवस्थिता ।
यत्तु [5]मे मोहन रूप श्रूयतेऽमृतधारकम् ॥ ४८ ॥

भवद्भावौ तदा तत्र रूपे तुल्योपलक्षितौ ।
देवै पुरुषरूपेण स्त्रीरूपेण तथेतरै ॥ ४९ ॥

सह सिद्ध [6]पृथक्सिद्धमित्येतज्जन्म मेऽद्भुतम् ।
कीर्तित तव देवेश केवल जन्म मे शृणु ॥ ५० ॥

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [8]लक्ष्म्यवतारप्रकाशो
नामाष्टमोऽध्याय

पञ्चमाध्यायैकविंशश्लोकोक्तमनुसधेयम् । ३३ ब्रह्माण्डकोशावतारमाह—नाम्ना मीनधर इत्यादि । ४७ जीवदेहकोशावतारमाह—ध्रुवादय इति ।

इत्यष्टमोऽध्यायः

---

[1] A B C D F omit six lines from here
[2] सरसाह F
[3] सर स्थिता B
[4] धरा B E., दारा G
[5] तन्माहन D E., त मोहिनी F
[6] मयीत्येतज्जन्म मे मदद्भुतम् A G
[7] श्रीपञ्चरात्र A श्रीपञ्चरात्रे E I
[8] E I omit the title

# नवमोऽध्यायः

श्री [1]—

अहं नारायणी देवी नारायणमनुव्रता ।
ज्ञानानन्दक्रियात्मानं ज्ञानानन्दक्रियामयी ॥ १ ॥

[2]तस्या मे न विनाभावस्तेन वा तस्य वा मया ।
[3]प्रकर्तुं शक्यते काले कस्मिंश्चिद्देश एव वा ॥

तत्तत्कार्यवशाच्चैवानन्यद्भुताद्भुतरूपकौ ।
आत्मयोगबलात्तौ स्व [4] सहैव च विनैव च ॥

ब्रह्मादिदत्तवरान् यादृक्तपोयोगबलात्कृत ।
दैत्यादिभ्यो [5]जगद्ध्वंसकरेभ्यो वरमुत्तमम् ॥

तादृश तादृश रूपमास्थायात्र सनातनौ ।
तत्तत्प्रीतिचिकीर्षार्थ चरावो देवकार्यत ॥ ५ ॥

मायया भावमाच्छाद्य परमार्थं स्वतेजसा ।
अहमेवावतीर्णा हि तत्तद्धसिजिघासया ॥ ६ ॥

आद्यौ देवी महालक्ष्मी स्मृताह परमेश्वरी ।
अभूव च पुनर्द्वेधा कृष्णा ब्राह्मीति रूपत ॥ ७ ॥

गुणत्रयविभागेन रूपमेतत्पर मम ।
महालक्ष्मीरह शक्र पुन स्वायम्भुवेऽन्तरे ॥ ८ ॥

हिताय सर्वलोकाना[6] जाता महिषमर्दनी ।
मदीया शक्तिलेशा ये तत्तद्देवशरीरगा ॥ ९ ॥

सभूय ते ममाभूवन् रूप परमशोभनम् ।
आयुधानि च देवाना यानि यानि सुरेश्वर ॥

तच्छक्त्यस्तदाकारा आयुधानि ममाभवन् ।
अभिष्टुता सुरै साह महिष जघ्नुषी क्षणात् ॥

महिषान्तकरीसूक्त सर्वसिद्धिप्रद तदा[7] ।
'देव्या यया'दिक दृष्ट सेन्द्रैर्देवै [8]सहर्षिभि ॥

[9]उत्पत्ति युद्धविक्रान्ति[10] स्तोत्र चेति सुरेश्वर ।
कथयन्ति सुविस्तीर्णं ब्राह्मणा वेदपारगा ॥ १३ ॥

[11]एवप्रभावा देवीं ता स्तुवन् ध्यायन्नमन्नपि ।
लभते च फल शश्वदाधिपत्यमनश्वरम् ॥ १४ ॥

योगनिद्रा हरेरुक्ता या सा देवी दुरत्यया ।
[12]महाकालीतनु विद्धि ता मा देवीं सनातनीम् ॥

मधुकैटभनाशे हि मोहितौ तौ[13] तया तदा ।
जघ्नाते वरलाभेन देवदेवेन विष्णुना ॥ १६ ॥

विश्वेश्वर्यादिक सूक्त दृष्ट तद् ब्रह्मणा सदा[14] ।
स्तुतये योगनिद्राया मम देव्या पुरदर ॥ १७ ॥

एषा सा वैष्णवी माया महाकाली दुरत्यया ।
स्तुत्या वशीकृता कुर्याद्वशे स्तोतुश्चराचरम् ॥१८॥

१२. इद च सूक्त मार्कण्डेयपुराणे देवीमाहात्म्ये चतुर्थाध्याये पठित द्रष्टव्यम् । १७. इद चोपाख्यान मार्कण्डेयपुराणे देवीमाहात्म्ये प्रथमाध्याये पठितम् ।

[1] श्रीरुवाच B
[2] तस्य A B D
[3] कर्तुं हि E F
[4] तु I
[5] वरानाप्य जगद्ध्वसिजिघासया A F
[6] देवाना A B D F G
[7] तथा A B I
[8] महर्षिभि B
[9] उत्पत्ति E I
[10] विक्रान्ति E I
[11] A B C D omit this line
[12] महाकाल्यास्तनु B C E I
[13] च A B D
[14] पुरा G

अस्या देव्या समुत्पत्तिश्चरित स्तोत्रमित्यपि ।
हिताय सर्वभूताना [1]धार्यन्ते ब्रह्मवादिभि ॥१९॥

[2]तामसे त्वन्तरे शक्र महाविद्या [3]हि या परा ।
गौरीदेहात्समुद्भूता कौशिकीति [4]तदा ह्यहम् ॥२०॥

वधाय दुष्टदैत्याना तथा[5] सुम्भनिसुम्भयो ।
रक्षणाय च लोकाना देवानामुपकारिणी ॥ २१ ॥

मदीया शक्तयो यास्ता देवश्रेष्ठशरीरगा ।
तास्तास्तद्रूपधारिण्य [6]साहाय्य विदधुर्हि मे ॥२२॥

तामिर्निहत्य दैत्येन्द्रान् हन्तव्या ये तथा तथा ।
सहृत्यात्मनि ता सर्वा मदीया विप्रुपोऽखिला ॥

अह निजतनुपी पश्चात्तयो सुम्भनिसुम्भयो ।
'देवि प्रपन्नार्तिहरे प्रसीद'त्यादिक तथा ॥ २४ ॥

नारायणीस्तुतिर्नाम सूक्त परमशोभनम् ।
स्तुतयो मे [7]तदा दृष्टा देवैर्वह्निपुरोगमै ॥ २५ ॥

एपा सपूजिता भक्त्या सर्वज्ञत्व प्रयच्छति ।
कौशिकी सर्वदेवेश[8] बहुनामप्रदा ह्यहम् ॥ २६ ॥

उत्पत्तिर्युद्धविक्रान्ति स्तुतिश्चेति पुरातनै ।
[9]पठ्यते नितय विप्रैर्वदेवेदाङ्गपारगै [10] ॥ २७ ॥

वैवस्वतेऽन्तरे चैतौ[11] पुन सुम्भनिसुम्भकौ ।
उत्पत्स्येते वरोन्मत्तौ देवोपद्रवकारिणौ ॥ २८ ॥

नन्दगोपकुले जाता यशोदागर्भसभवा ।
तावह नाशयिष्यामि सुनन्दा[12] विन्ध्यवासिनी ॥

पुनश्चाप्यतिरौद्रेण रूपेण पृथिवीतले ।
अवतीर्य हनिष्यामि वैप्रचित्तान् महासुरान् ॥३०॥

[13]भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् ।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमा ॥३१॥

ततो मा देवता सर्वे मर्त्यलोके च मानवा ।
स्तुवन्तो व्याहरिष्यन्ति सतत [14]रक्तदन्तिकाम् ॥

तस्मिन्नेवान्तरे शक्र चत्वारिंशत्तमे युगे ।
सर्वत शतवार्षिक्यामनावृष्ट्यामनम्भसि ॥ ३३ ॥

मुनिभि सस्मृता भूमौ सभविष्याम्ययोनिजा ।
तत शतेन नेत्राणा निरीक्षिष्याम्यह मुनीन्[15] ॥३४॥

कीर्तयिष्यन्ति मा शक्र शताक्षीमिति मानवा ।
तदाहमखिल लोकमात्मदेहसमुद्भवै ॥ ३५ ॥

भरिष्यामि शुभे शाकैरावृष्टे प्राणधारकै [16] ।
शाकम्भरीति मा देवास्तदा स्तोष्यन्ति वासव ॥३६॥

तत्रैव च हनिष्यामि दुर्गमाख्य महासुरम् ।
दुर्गादेवीति विख्याति ततो यास्याम्यह भुवि ॥३७॥

शाकम्भरीं स्तुवन् ध्यायन्[17] शक्र मपूजयन्नमन् ।
[18]अक्षय्यामश्नुते शीघ्रमन्नपानोद्भवा रतिम् ॥३८॥

चतुर्युगे च पञ्चाशत्तमे मुनिभिरर्थिता ।
सुन्दर चातिभीम च रूप कृत्वा हिमाचले ॥३९॥

रक्षासि भक्षयिष्यामि मुनीना त्राणकारणात् ।
ततो मा मुनय सर्व स्तोष्यन्त्यानम्रमूर्तय ॥४०॥

२८. नारायणीस्तुति मार्कण्डेयपुराणे देवीमाहात्म्ये एकादशाध्याये पठिता । २८–४३. सुनन्दा-रक्तदन्तिका-शताक्षी-शाकम्भरी-दुर्गा-भीमा-भ्रामरीणामुपाख्यानानि मार्कण्डेयपुराणे देवीमाहात्म्ये एकादशाध्याये द्रष्टव्यानि ।

[1] ध्यायन्ते D E
[2] तापसे A B C
[3] भिधा B I
[4] तदाप्यहम् C.
[5] तदा A B C
[6] सन्नय A D
[7] सदा E
[8] देवेशा A B G
[9] पाठ्यते F
[10] वेदान्तगतगै E.
[11] शक्र B
[12] सुनन्दा E.
[13] B omits this line, भक्षयन्त्याश्चतानुग्रान् F
[14] रक्त A C
[15] निरीक्षिष्यामि सन्मुनीन् E.
[16] धारणे D
[17] तु ध्याया B
[18] अक्षया A B C

'भीमे देवि प्रसीदे'ति भीमामभयदायिनीम् ।
युगे षष्टितमे कश्चिदरुणो नाम दानव ॥ ४१ ॥

मनुजाना मुनीना च महाबाधा करिष्यति ।
तदाह [1]भ्रामर रूप कृत्वासरव्येयषट्पदा ॥ ४२ ॥

त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ।
भ्रामरीति च मा लोकास्तदा स्तोष्यन्ति [2]सर्वदा ॥

इत्थ यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याह हनिष्यामि महासुरान् ॥४४॥

अमी ते लेशत शक्र दर्शिता परमाद्भुता ।
अवतारा निरातङ्का मदीया केवलाह्वया ॥४५॥

एतेषा परमा प्रोक्ता कूटस्था सा महीयसी ।
महालक्ष्मीर्महाभागा प्रकृति परमेश्वरी ॥ ४६ ॥

अमुष्या स्तुतये हृष्ट ब्रह्माद्यै सकलै सुरै ।
'नमो देव्या'दिक सूक्त सर्वकामप्रद [3]वरम् ॥४७॥

इमा देवीं स्तुवन्नित्य स्तोत्रेणानेन मामिह ।
[4]क्लेशानतीत्य सकलानैश्वर्य महदश्नुते ॥ ४८ ॥

अमुष्या सावताराया महालक्ष्म्या ममानघ ।
जन्मानि चरितै सार्धं स्तोत्रैर्वैभववादिभि [5] ॥

कथितानि पुरा शक्र वसिष्ठेन महात्मना ।
स्वारोचिषेऽन्तरे राज्ञे सुरथाय महात्मने ॥५०॥

समाधये च [6]वैश्याय प्रणतायावसीदते ।
भक्तिश्रद्धावता नित्य वसिष्ठेन कृतेति मे ॥ ५१ ॥

हृदि स्थिता सदा सेय जन्मकर्मावलिस्तुति ।
एता द्विजमुखाच्छ्रुत्वा ह्यधीयानो नर सदा ॥

[7]विधूय निखिला माया सम्यग्ज्ञान समश्नुते ।
[8]सर्वां सपदमाप्नोति धुनोति सकलापद ॥ ५३ ॥

मम प्रभावात् सौभाग्य कीर्तिं चैव समश्नुते ।
[9]केवला अपि यद्येते मदीया विष्णुना विना ॥

न मेऽस्ति सभव सोऽयमहभूत स्थितोऽत्र तु ।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ॥

[10]मय्यय देवदेवेशस्तत्राह च सनातनी ।
इत्येते लेशत शक्र दर्शिता सप्रकारका ॥ ५६ ॥

अवतारा मदीयास्ते सभूता कोशपञ्चके ।
शुद्धे कोशे समुद्भूता भवद्भावात्मका परे[11] ॥

तत्राप्येषा स्थितिर्ज्ञेया विष्णोर्मम सह स्थिति ।
एवप्रकारा[12] मा ज्ञात्वा प्रयक्षा सर्वसमताम् ॥

उपायैर्विविधै शश्वदुपास्य [13]बहुधात्मिकाम् ।
क्लेशकर्माशयातीतो मद्भाव प्रतिपद्यते ॥ ५९ ॥

इति [14]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [15]केवलावतारप्रकाशो नाम नवमोऽध्याय ।

४७. इद च मार्कण्डेयपुराणे देवीमाहात्म्ये पञ्चमाध्याये पठितम् । ५०. इद चोपाख्यान मार्कण्डेयपुराणे देव माहात्म्ये प्रथमाध्याये दृश्यते ।

## इति नवमोऽध्यायः

---

[1] भ्रमर E. F
[2] संयता A
[3] प म् B
[4] B F omit this l ne
[5] कारिभि E.
[6] वन्याय B
[7] C om ts this line
[8] सन E I
[9] पवग कथयन्त्येत A B C
[10] मय्येन वर्तते देव E
[11] मारामकामने A B C
[12] प्रकार E F
[13] विविधा B
[14] श्रीपञ्चरात्र A , पाञ्चरात्र B श्रीपाञ्चराने I
[15] भगवदनिनामावतयन नाम A G , I om ts the t tle

# दशमोऽध्यायः

शक्र —

क्षीरोदमथनायासफलरूपे मधुद्विष ।
नमश्चन्द्रसहोदर्यै नमस्तेऽमृतयोनये ॥ १ ॥

भावोत्तरा प्रकारास्ते श्रुतास्त्वद्वक्त्रपङ्कजात् ।
इदानीं श्रोतुमिच्छामि प्रकारान् भवदुत्तरान् ॥२॥

वैष्णवा अवतारास्ते किंरूपा [1]कति वाम्बुजे ।
एतत्पृष्टा मया ब्रूहि नमस्ते पङ्कजासने ॥ ३ ॥

श्री —

[2]हन्त ते शक्र वक्ष्यामि प्रकारान् भवदुत्तरान् ।
वैष्णवा अवतारास्ते यावन्तो यद्विधाश्च ते ॥४॥

षाड्गुण्यममलं ब्रह्म निर्दोषमजरं ध्रुवम् ।
सर्वशक्ति निरातङ्कं निरालम्बनभावनम् ॥ ५ ॥

तदुन्मिषति वै पूर्वं शक्तिमच्छक्तिभावतः ।
नारायणः परो देवः संस्थितः शक्तिमत्तया ॥ ६ ॥

स्थिरा शक्तिरहं तस्य सर्वकार्यकरी विभोः ।
तावावां जगतोऽर्थाय बहुधा विक्रियावहे ॥ ७ ॥

यथाहमास्थिता भेदैस्तथा ते कथितं पुरा ।
विकारानविकारस्य विष्णोः शृणु मयोदितान् ॥

अप्राकृताननौपम्यानचिन्त्यमहिमोज्ज्वलान् ।
स्वां शक्तिं मामधिष्ठाय प्रकृतिं परमाद्भुताम् ॥ ९॥

त्रैरूप्येण जगन्नाथः समुदेति जगद्धिते ।
आद्येन पररूपेण व्यूहरूपेण चाप्यथ ॥ १० ॥

तथा विभवरूपेण नानाभावमुपेयुषा ।
व्यापको भगवान् देवो भक्तानुग्रहकाम्यया ॥११॥

अनौपम्यमनिर्देश्यं [3]वपुः स भजते परम् ।
विश्वाप्यायनक[4] कान्त्या पूर्णेन्द्वयुततुल्यया ॥ १२॥

वरदाभयहस्तं च द्विभुजं पद्मलोचनम् ।
रेखामयेन चक्रेण शङ्खेन च करद्वये ॥ १३ ॥

अङ्कितं निर्विकाराङ्घ्रिस्थितं परमशोभनम् ।
अन्यूनानतिरिक्तैः स्वैर्गुणैः षड्भिरलङ्कृतम् ॥१४॥

समं समविभक्ताङ्गं सर्वावयवसुन्दरम् ।
पूर्णमाभरणैः शुभ्रैः सुधाकल्लोलसङ्कुलैः ॥ १५ ॥

रश्मिभूतैरमूर्तैः स्वैरन्युतायैरविच्युतम् ।
एका मूर्तिरियं दिव्या पराख्या वैष्णवी परा ॥

योगसिद्धा भजन्त्येनां हृदि तुर्यपदाश्रिताम्[5] ।
अथ व्यूहस्वरूपं ते द्वितीयं वर्णयाम्यहम् ॥ १७ ॥

व्यूहात्मानं चतुर्धा स्वं देवः प्रागादिभेदतः[6] ।
वासुदेवादिभेदेन [7]सौषुप्ताध्वनि तिष्ठति ॥ १८ ॥

[8]संस्थानमादिमूर्तेर्यत् सैषा तु सम स्मृतम् ।
षड्गुणं प्रथमं रूपं द्वन्द्वैर्ज्ञानादिसंभवैः ॥ १९ ॥

इतराणि स्वरूपाणि कथितानि मया पुरा[9] ।
बहुधकन्दुमहस्राभमानन्दास्पन्दलक्षणम्[10] ॥ २० ॥

बीजं सर्वक्रियाणां तद्विकल्पानां तदास्पदम् ।
सौषुप्तं चातुरात्म्यं तत्प्रथमं विद्धि वासव ॥२१॥

[1] कथिता बुधे E
[2] अह ते B C.
[3] पुन A B G I
[4] पर E. I
[5] अपाम् E F
[6] भेदिन A
[7] सुषुप्त्यध्वनि B , सुषुप्तध्वनि E.
[8] मूर्त्यादिसंस्था मूर्तिर्यं A B C
[9] पुन E.
[10] आनन्दस्पन्दलक्षणम् E F

अथ स्वाग्रे पदेऽप्येव विभज्यात्मानमात्मना ।
देव प्रागादिभेदेन वासुदेवादिरूपत ॥ २२ ॥

समासव्यासभेदेन गुणाना पुरुषोत्तम ।
सितरक्तसुवर्णाभ्रसदृशै परमाद्भुतै ॥ २३ ॥

आदिमूर्तिसमै[1] रूपैश्चतुर्धा [2]व्यवतिष्ठते ।
कैवल्यभोगफलद भवबीजक्षयंकरम् ॥ २४ ॥

चातुरात्म्य द्वितीय तत् सुधासदोहसुदरम् ।
अथ जाग्रत्पदे देव सितरक्तादिभेदत [3] ॥ २५ ॥

चतुर्भुजैरुदाराङ्गै शङ्खचक्रादिचिह्नितै ।
नानाध्वजविचित्राङ्गैर्वासुदेवादिसज्ञितै ॥ २६ ॥

व्यूहे [4]स्व प्रविभज्यास्ते विभुर्नाम स्वलीलया ।
तत्राद्य भगवद्रूप हिमकुन्देन्दुकान्तिमत् ॥ २७ ॥

चतुर्भुज सौम्यवक्त्र पुण्डरीकनिभेक्षणम् ।
पीतकौशेयवसन सुपर्णध्वजभूषितम् ॥ २८ ॥

मुख्यदक्षिणहस्तेन भीतानामभयप्रदम् ।
तथाविधेन वामेन दधान शङ्खमुत्तमम् ॥ २९ ॥

अपरेण दधान च दक्षिणेन सुदर्शनम् ।
वामेन च गदा गुर्वीं निषण्णा वसुधातले ॥३०॥

सचिन्तयेत् पुरो भागे वासुदेवमितीदृशम् ।
सिन्दूरशिखराकार सौम्यवक्त्रं चतुर्भुजम् ॥ ३१ ॥

अतसीपुष्पसकाशवसन ताल्लाञ्छितम्[5] ।
मुख्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभो ॥३२॥

सीर तथत्रहस्तेऽस्य मुसल तु [6]गदाकरे ।
दक्षिणे चिन्तयेद्भागे सकर्षणमितीदृशम् ॥ ३३ ॥

प्रावृण्निशासमुदितखद्योतनिचयप्रभम् ।
रक्तकौशेयवसन मकरध्वजशोभितम् ॥ ३४ ॥

सौम्यवक्त्र चतुर्बाहु तृतीय परमेश्वरम् ।
मुख्यहस्तद्वय चास्य प्राग्वत्तुल्यं महामते ॥ ३५॥

वामेऽपरस्मिन् शार्ङ्गं च दक्षिणे बाणपञ्चकम् ।
अपरे चिन्तयेद्भागे प्रद्युम्नमिति कीर्तितम् ॥ ३६॥

अञ्जनाद्रिप्रतीकाश [7]सुपीताम्बरवेष्टितम् ।
चतुर्भुज विशालाक्षं मृगलाञ्छनभूषितम् ॥ ३७॥

आदिवत् पाणियुगलमाद्यमस्य[8] विचिन्तयेत् ।
दक्षिणादिक्रमेणाथ द्वाभ्या वै खड्गखेटकौ ॥३८॥

दधानमनिरुद्ध तु सौम्यभागे विचिन्तयेत् ।
वनमालाधरा सव श्रीवत्सकृतलक्षणा [9] ॥ ३९ ॥

शोभिता कौस्तुभेनैव रत्नराजेन वक्षसि ।
जाग्रत्पदे स्थित देव चातुरात्म्यमनुत्तमम् ॥४०॥

स्थित्युत्पत्तिप्रलयकृत्सर्वोपकरणान्वितम् ।
दिव्य तच्चिन्तयेद्यस्य[10] विश्व तिष्ठति शासने ॥४१॥

त्रिविध चातुरात्म्य तु सुषुप्त्यादिपदत्रिके ।
सुव्यक्त तत्पदे तुर्ये गुणलक्ष्य पर स्थितम् ॥४२॥

ज्ञानक्रियादिभिर्विष्णोर्लोकानुसिसृक्षत ।
व्यूहसज्ञमिद रूप द्वितीय कथित मया ॥ ४३ ॥

तृतीय विभवाख्य तु[11] विश्वमन्दिरमध्यगम् ।
नानाकारक्रियाकर्तृ रूप विष्णोर्निशामय ॥ ४४ ॥

इति [12]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे परव्यूहप्रकाशो नाम
दशमोऽध्याय

---

[1] समा B
[2] ह्यव A B C F
[3] भेन्ति G
[4] स्वय निमन्य E I
[5] लान्छनम् F
[6] गदा E
[7] सुनिताम्बर B E I
[8] आद्य तस्य F
[9] लाञ्छना E
[10] चिन्तयत्तस्य A B
[11] त F
[12] श्रीपञ्चरात्र A श्रीपाञ्चरात्रे B E

# एकादशोऽध्यायः

श्रीः[1]—

निर्दोषो [2]निरधिष्ठेयो निरवद्यः सनातनः ।
विष्णुर्नारायणः [3]श्रीमान् परमात्मा सनातनः ॥

षाड्गुण्यविग्रहो [4]नित्यं परं ब्रह्माक्षरं परम् ।
तस्य मां परमां शक्तिं नित्यं तद्धर्मधर्मिणीम् ॥ २ ॥

सर्वभावानुगां विद्धि निर्दोषामनपायिनीम् ।
सर्वकार्यकरी साहं विष्णोरव्ययरूपिणः ॥ ३ ॥

शुद्धाशुद्धमयैर्भावैर्वितत्यात्मानमात्मना ।
परव्यूहादिसंभेदं व्यूहयन्ती हरेः सदा ॥ ४ ॥

शुद्धषाड्गुण्यमादाय कल्पयन्ती तथा तथा ।
[5]तेन नानाविधं रूपं [6]व्यूहाद्युचितमञ्जसा ॥ ५ ॥

उन्मेषयामि देवस्य प्रकारं भवदुत्तरम् ।
व्यापारस्तस्य देवस्य साहमस्मि न संशयः ॥ ६ ॥

मया कृतं हि यत् कर्म तेन तत् कृतमुच्यते ।
अहं हि तस्य देवस्य स्मृता [7]व्याप्रियमाणता ॥ ७ ॥

इति [8]शक्र परं रूपं व्यूहरूपं च दर्शितम् ।
तृतीयं विभवाख्यं तु रूपमद्य निशामय ॥ ८ ॥

तुर्यादिजाग्रदन्तं यत् प्रोक्तं पदचतुष्टयम् ।
वासुदेवादिना व्याप्तमनिरुद्धान्तिमेन तु ॥ ९ ॥

तत्र तत्र पदे चैव चातुरात्म्यं तथा तथा ।
अव्यक्तव्यक्तरूपैः स्वैरुदितं ते यथोदितम् ॥ १० ॥

व्यूहाद् व्यूहसमुत्पत्तौ पदाद्यावत्पदान्तरम् ।
[9]अन्तरं सकलं देशं संपूरयति तेजसा ॥ ११ ॥

[10]पूजितस्तेजसां राशिरव्यक्तो मूर्तिवर्जितः ।
विशाखयूप इत्युक्तस्तत्तज्ज्ञानादिबृंहितः ॥ १२ ॥

तस्मिंस्तस्मिन् पदे तस्मान्मूर्तिशाखाचतुष्टयम् ।
वासुदेवादिकं शक्र प्रादुर्भवति वै क्रमात् ॥ १३ ॥

एवं स्वप्नपदाज्जाग्रत्पदव्यूहविभावने ।
स्वप्नात्पदाज्जाग्रदन्ते तेजसः पूज्यते महान् ॥ १४ ॥

२. ब्रह्माक्षरशब्दयोः प्रकृतिजीवयोरपि प्रयोगात् तद्व्युदासाय परमिति विशेषणम् ।

१२. विशाखयूपो नामाप्राकृते दिव्यलोके भ्राजमानो ज्योतिर्मयः स्तम्भाकारो भगवद्रूपविशेषः । तत्राधोभागमारभ्य ऊर्ध्वभागपर्यन्तं चत्वारि पर्वाणि क्रमेण निरुद्धप्रद्युम्नसंकर्षणवासुदेवाधिष्ठितानि स्पष्टतरस्पष्टकिंचित्स्पष्टास्पष्टशङ्खचक्रादिलक्ष्माणि । प्रतिपर्व प्रागादिक्रमेण चतुर्ष्वपि पार्श्वेषु क्रमेण वासुदेवादयो व्यूहा भ्राजन्ते । एवं विभागश्च योगिनां ध्यानालम्बनार्थं भगवतैव

[1] श्रीभगवान् B.
[2] निरधिष्ठेयो E. I.
[3] श्रीशः E. I.
[4] नित्यः E.
[5] तेनापि विविधं E.
[6] व्यूहाद्यखिल E.
[7] व्याप्रिय A. I.
[8] कृष्ण A. I.
[9] आनन्दं G.
[10] पूरितः G.

विशाखयूपो भगवान् स देवस्तेजसा निधि ।
तुर्यं द्वे स्वप्रपर्यन्ते [1]चातुरात्म्यत्रिके हि यत् ॥

तत्तदैश्वर्यसपन्ने पाड्गुण्य सुव्यवस्थितम् ।
तदादायाखिल न्व्यि [2]शुद्धसवित्पुर सरम् ॥

विभजनात्मनात्मान वासुदेवादिरूपत [3] ।
[4]पुनर्विभवनेलाया विना मूर्तिचतुष्टयम् ॥ १७ ॥

विशाखयूप एवैप विभवान् भावयत्युत ।
ते देवा विभवात्मान पद्मनाभादयो मता ॥

पद्मनाभो ध्रुवोऽनन्त शक्तीशो मधुसूदन ।
विद्याधिदेव कपिलो विश्वरूपो विहगम ॥ १९ ॥

[5]क्रोडात्मा वडवावक्त्रो धर्मो व गीश्वरस्तथा ।
एकार्णवान्तशायी च तथैव कमठाकृति ॥ २० ॥

वराहो नरसिंहश्चाप्यमृतहरणस्तथा ।
श्रीपतिर्दिव्यदेहोऽथ कान्तात्मामृतधारक ॥ २१ ॥

राहुजित् कालनेमिघ्न पारिजातहरस्तथा ।
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभु ॥ २२ ॥

न्यग्रोधशायी भगवानेकशृङ्गतनुस्तथा ।
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रम ॥ २३ ॥

नरो नारायणश्चैव हरि कृष्णस्तथैव च ।
ज्वलत्परशुभृद्रामो[6] रामश्चान्यो धनुर्धर ॥ २४ ॥

वेदविद्भगवान् कल्की पातालशयन प्रभु ।
[7]त्रिंशत्प्रभाविमे देवा पद्मनाभादयो मता ॥

विभोर्विशाखयूपस्य तत्तत्कार्यवशादिमे ।
[8]स्फूर्तयो विभवा ख्याता कार्यं चैपामसक्रम[9] ॥

शुद्धाशुद्धाध्वनोर्मध्ये पद्मनाभो व्यवस्थित ।
ध्रुवाद्योऽपरे [10]देवा विवृता विश्वमन्दिरे ॥२७॥

रूपाण्यस्त्राणि चैतेपा शक्तयश्चापरा विधा ।
सर्वं तत् सात्त्वते सिद्ध सज्ञामात्र प्रदर्शितम् ॥

शाखास्तु वासुदेवाख्या विभोर्देवस्य कीर्तिता ।
विशाखयूपो भगवान् विततामि करोति तत् ॥

चतसृभ्योऽथ शाखाभ्य केशवाद्य त्रय त्रयम् ।
दामोदरान्तमुद्भूत तद् व्यूहान्तरमुच्यते ॥ ३० ॥

ताभ्य [11]एव हि शाखाभ्य श्रियादीना त्रय त्रयम् ।
पूर्वत्रयानुरूपेण शक्तीना च [12]समुद्गतम् ॥ ३१ ॥

परादिविभवान्ताना सर्वपा देवतात्मनाम् ।
शुद्धपाड्गुण्यरूपाणि वपूपि त्रिदशेश्वर ॥ ३२ ॥

यावन्त्यस्त्राणि देवाना चक्रशङ्खादिकानि वै ।
भूपणानि विचित्राणि वासासि विविधानि च ॥

ध्वजाश्च विविधाकारा कान्तयश्च सितादिका ।
वाहनानि विचित्राणि सत्याद्यानि सुरेश्वर ॥ ३४ ॥

शक्तयो भोगदाश्चैव विविधाकारसस्थिता ।
आन्त करणिको वर्गस्तदीया वृत्तयोऽखिला ॥३५॥

यच्च यच्चोपकरण सामान्य पुरुपान्तरे ।
पाड्गुण्यनिर्मित विद्धि तत्सर्वं वलसूदन ॥ ३६ ॥

कथित । अस्य च विस्तर सात्त्वतसहिताया द्रष्टव्य । १९. एत एव देवा व्यञ्जनाधिष्ठातृ तया तत्तन्महिपीभि सहात्रैव विशाध्याये वक्ष्यन्ते ।

[1] चातुरात्म्यादिके A B C D F
[2] शुद्ध B
[3] रूपकम् A B C
[4] पुनर्वचाग E
[5] क्रोधात्मा A C D F I
[6] धृग्रामो A B C D
[7] त्रिंशत्प्रायिम A B C D
[8] मूर्त्या A B C D
[9] असकर B
[10] देवा मवृत्ता E
[11] एवाय B E
[12] समुद्भवम् A B E

शुद्धसंविन्मयी साह षाड्गुण्यपरिपूरिता ।
तथा तथा भवाम्येषामिष्ट यद्धि यथा यथा ॥३७॥

न विना देवदेवेन स्थितिर्मम हि विद्यते ।
[1]मया विना न देवस्य स्थितिर्विष्णोर्हि[2] विद्यते ॥

तावावामेकतां प्राप्तौ द्विधा भूतौ च संस्थितौ ।
विधा भजावहे ता ता यत्रयत्र [3]ह्यपेक्षितम् ॥

शक्र —
सिन्धुकन्ये नमस्तुभ्य नमस्ते सरसीरुहे ।
परव्यूहादिभेदेन किं प्रयोजनमीशितु ॥ ४० ॥

श्री —
[4]अनुग्रहाय [5]जीवाना भक्तानामनुकम्पया ।
परव्यूहादिभेदेन देवदेवप्रवृत्तय ॥ ४१ ॥

शक्र —
देवदेवप्रिये देवि नमस्ते कमलोद्भवे ।
अनुग्रहाय भक्तानामेकैवास्तु विधा हरे ॥ ४२ ॥

श्री —
[6]जीवाना विविधा शक्र संचिता पुण्यसंचया ।
संचिन्वन्ति न ते जीवास्तुल्यकाल कथचन ॥४३॥

कश्चिद्धि सुकृतोन्मेषान् कदाचित् पुरुषो नृपु ।
श्रीमता कमलाक्षेण जायमानो निरीक्ष्यते ॥ ४४ ॥

अन्यदा पुरुषोऽन्यश्चेत्येव भिन्ना शुभाशया ।
भेदोऽधिकारिणा पुण्यतारतम्येन जायते ॥ ४५ ॥

विवेक कस्यचिन्मन्दो भगवत्तत्त्ववेदने ।
मध्यमस्तु परस्याथ दिव्योऽन्यस्य तु जायते ॥४६॥

ईशानुग्रहवैषम्यादेव भेदे व्यवस्थिते ।
तत्तत्कार्यानुरोधेन परव्यूहादिभावना ॥ ४७ ॥

क्रियते देवदेवेन शक्ति मामधितिष्ठता ।
[7]ससिद्धयोगतत्त्वान मधिकार परात्मनि ॥ ४८ ॥

व्यामिश्रयोगयुक्ताना मध्याना व्यूहभावने ।
वैभवीयादिरूपेषु विवेकविधुरात्मनाम् ॥ ४९ ॥

अहंतामयतावर्तिना[8] भक्ताना परमेश्वरे ।
अधिकारस्य वैषम्य भक्तानामनुकम्प्य[9] स ॥५०॥

भजते विविध भाव परव्यूहादिशब्दितम् ।
इति ते लेशत शक्र दर्शिता उभयात्मका ॥५१॥

भवद्भावोत्तरा व्यूहा मम नारायणस्य च ।
शुद्धे शुद्धेतरस्मिश्च कोशवग मदुद्भवे ॥ ५२ ॥

स्थितिर्नो दर्शिता तेऽन्य पृथक् सह च केवला ।
एवप्रकारा[10] मा ज्ञात्वा प्रत्यक्षा सर्वसमतान् ॥५३॥

उपायैर्विविधै शश्वदुपास्य विविधात्मिकाम् ।
क्लेशकर्माशयातीतो मद्भाव प्रतिपद्यते ॥ ५४ ॥

इति [11]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [12]विभवप्रकाशो नाम
एकादशोऽध्याय

५४ क्लेशकर्माशया अनन्तराध्याये वक्ष्यन्ते ।

## इत्येकादशोऽध्यायः

---

[1] C omits this line
[2] विष्णोश E I
[3] व्यपेक्षितम् E I
[4] B omits verses 41 and 42
[5] देवना D
[6] जीवाना B
[7] सु गद A C D E G
[8] ममतावर्तिना B
[9] अभिगम्य F
[10] प्रकार B D E I
[11] श्रीपञ्चरात्र A I
[12] वैभव A I

# द्वादशोऽध्याय:

शक्र —

चिच्छक्तिरेव ते शुद्धा यदि जीव सनातन ।
क्लेशकर्माशयस्पर्शी कथमस्य सरोरुहे ॥ १ ॥

क्लेशा के कति ते प्रोक्ता कर्म कीदृक् च किंविधम ।
आशयो[1] नाम को[2] देवि [3]तदेतत् किंफल स्मृतम् ॥

सिन्धुकन्ये तदेतन्मे ब्रूहि तुभ्य नमो नम ।
सर्वज्ञे न त्वदन्येन वक्तुमेतद्धि शक्यते ॥ ३ ॥

श्री —

अह नारायणी [4]देवी स्वच्छस्वच्छन्दचिन्मयी ।
स्वतन्त्रा निरवद्याह विष्णो श्रीरनपायिनी ॥ ४ ॥

ईशेशितव्यभेदेन द्विधा रूप मया कृतम् ।
ईशितव्य च तद्भिन्न [5]स्वाच्छन्द्यादेव मे द्विधा[6] ॥

चिच्छक्तिरेका भोक्त्राख्या परा भोग्यादिरूपिणी ।
कालकाल्यविभेदेन सा द्विधा भेदिता मया ॥ ६ ॥

तत्र काल्यात्मिका शक्तिर्मोहिनी बन्धनी तथा ।
प्रकृति सविकारैषा चिच्छक्तिर्बध्यतेऽनया ॥ ७ ॥

क्लिश्यते येन रूपेण चिच्छक्तिर्भोक्तृता गता ।
स क्लेश पञ्चधा ज्ञेयो नामान्यस्य च मे शृणु ॥८॥

तमो मोहो महामोहस्तामिस्रो ह्यन्धसञ्ज्ञित ।
अविद्या पञ्चपर्वैषा तमसो गतिरुत्तमा ॥ ९ ॥

असङ्गिन्यपि चिच्छक्ति [7]शुद्धाप्यपरिणामिनी ।
आविद्धमात्मनो रूप नैर्मल्येन[8] बिभर्ति सा ॥१०॥

शक्र —

व्याहतामिव पश्यामि चिच्छक्ते [9] क्लेशसङ्गिताम् ।
मुह्यतीव मनो मेऽद्य त मोह छिन्धि पद्मजे ॥११॥

श्री —

स्वतन्त्रा [10]सर्वसिद्धीना हेतुश्चात्र[11] महाद्भुता ।
शक्तिर्नारायणस्याह नित्या देवी सदोदिता ॥१२॥

तस्या मे पञ्च कर्माणि नित्यानि त्रिदशेश्वर ।
तिरोभावस्तथा सृष्टि स्थिति सहृतिरेव च ॥

अनुग्रह इति प्रोक्त मदीय कर्मपञ्चकम् ।
एतेषा क्रमशो व्याख्या कर्मणा शक्र मे शृणु ॥

तत्र नाम तिरोभावोऽन्यद्भाव परिकीर्त्यते ।
स्वच्छापि सा मदीया हि चिच्छक्तिर्भोक्तृसञ्ज्ञिता ॥

मदीयया यया शक्त्या वर्तते प्रकृतेर्वशे ।
तिरोभावाभिधाना मे साविद्याशक्तिरुच्यते ॥१६॥

मदीय भेदित रूप सत्यसकल्पया मया ।
योऽवरोहो मदीयस्ते वर्णित प्रथम पुरा ॥ १७ ॥

चिच्छक्तिर्जीव इत्येव विबुधै परिकीर्त्यते ।
मत्स्वाच्छन्द्यवशादेव तस्य भेद प्रकीर्तित ॥१८॥

मदीय चैत्यरूप यत् सत्यसकल्पया कृतम ।
मया तदेकीकरण चिच्छक्ते क्रियते हि यत् ॥

अविद्या सा परा शक्तिस्तिरोभाव इति स्मृत ।
पञ्च पर्वाणि तस्यास्तु [12]सन्ति तानि निबोध मे ॥

[1] आशया E I
[2] के E I
[3] तदेव F
[4] स्वच्छा A B G
[5] स्वच्छन्दा A B C
[6] स्थिता I
[7] शुद्धम A B G
[8] संकरेन C D
[9] चिच्छक्ति D
[10] विश्वसिद्धिना A B C D I, विश्वसिद्धीना G
[11] चिना E I
[12] संततानि A B, C F

तमस्तु प्रथमं पर्व नामाविद्येति तस्य तु ।
अनात्मन्यस्वभूते च चैत्ये जीवस्य या मतिः ॥

स्वतयाहंतया चैव तमोऽविद्या च सा स्मृता ।
स्वीकृतेऽहंतया चैत्ये मानो यस्तत्र जायते ॥२२॥

अस्मिताख्यो महामोहो द्वितीयं क्लेशपर्व तत् ।
चैत्यचेतनयोरेकभावापत्तिरविद्यया ॥ २३ ॥

[1]मोहोऽस्मिता महामोह इति शब्दैर्निगद्यते ।
सुखानुस्मृतिहेतुर्या वासनास्मितयाहिता ॥ २४ ॥

स रागो [2]रञ्ज्यविषयस्तृतीयं क्लेशपर्व तत् ।
दुःखानुस्मृतिहेतुर्या वासनास्मितयाहिता ॥ २५ ॥

स द्वेषो द्वेष्यविषयश्चतुर्थं क्लेशपर्व तत् ।
[3]दुःखं जिहासतो योगैः प्रेप्सतश्च सुखं तथा ॥

तदन्तरायैर्वित्रासो मध्ये यो नाम जायते ।
अन्धाख्योऽभिनिवेशः स पञ्चमं क्लेशपर्व तत् ॥

[4]देहमात्मतया बुद्ध्वा ततस्तादात्म्यमागतः ।
रञ्जनीयमभिप्रेप्सुर्जिहासुश्च तथेतरत् ॥ २८ ॥

तदन्तरायवित्रस्तस्तत्प्रतीकारमाचरन् ।
इष्टस्य प्राप्तयेऽनिष्टविघाताय च [5]चेतनः ॥ २९ ॥

यदयं कुरुते कर्म त्रिविधं त्रिविधात्मकम् ।
तत्कर्म गदितं सद्भिः सांख्ययोगविचक्षणैः ॥३०॥

तत्प्रसूतं सुखं दुःखं तथा दुःखसुखात्मकम् ।
विपाकस्त्रिविधः प्रोक्तस्तत्त्वशास्त्रविशारदैः ॥३१॥

वासना आशयाः प्रोक्ताः क्लेशकर्मविपाकजाः ।
अन्तःकरणवर्तिन्यः समन्तात्सेरते हि ताः ॥

जन्यन्ते वासना नित्यं पञ्चभिः क्लेशपर्वभिः ।
सदसारम्भहेतुश्च वासना कर्मणां[6] तथा ॥ ३३ ॥

सुखादिवासना चैव विपाकैर्जन्यते त्रिधा ।
चतुर्भिर्लक्षणैरित्थंभूता क्लेशादिनामकैः ॥ ३४ ॥

बन्धनी जीवकोशस्य तिरोभावाभिधा विधा[7] ।
शक्त्यानयैव बद्धानां जीवानां मम नित्यदा ॥३५॥

[8]सांतत्येन प्रवर्तन्ते मम सृष्ट्यादिशक्तयः ।
सृष्टिशक्तिर्द्विधा सा मे शुद्ध्यशुद्धिवशान्मया ॥३६॥

विविच्य दर्शिता सा ते सा पुनः सप्तधा स्थिता ।
[9]अनिशं क्रियते त्वेका प्राजापत्येन कर्मणा ॥३७॥

षट्कोशसंभवास्त्वन्यास्तत्तत्कालसमुद्भवाः ।
सर्गारम्भे प्रवृत्त्युत्थे सृष्टिर्ज्ञेया त्रिधा पुनः ॥ ३८ ॥

भाविकी लैङ्गिकी चैव भौतिकी चेति भेदतः ।
यथा न्यग्रोधधानायां त्रैगुण्ये प्रकृतौ तथा ॥३९॥

या स्थितिर्महदादेः सा भावसृष्टिर्निगद्यते ।
समष्टिव्यष्टिभेदेन लिङ्गं यत्सृज्यते मया ॥ ४० ॥

विराजश्च तथान्येषां भूतानां लिङ्गजा तु सा ।
महदाद्या विशेषान्ता विंशतिश्च त्रयश्च ये ॥४१॥

पदार्था लिङ्गदेहस्था[10] विराजः परिकीर्तिताः ।
स्थानां समष्टिभूतानां तथान्तःकरणस्य च ॥४२॥

त्रिधा स्थितस्य ये येंऽशाः प्रतिजीवं व्यवस्थिताः ।
स्थूलानां चैव भूतानां ये सूक्ष्माः कीर्तिताः पुरा ॥

व्यष्टयोऽष्टादशेमाश्च क्लेशाः कर्माणि वासनाः ।
प्राणाश्चेति तदुद्दिष्टं लिङ्गं जीवगणाश्रयम् ॥ ४४ ॥

चिच्छक्तयो हि लिङ्गस्थाः संसरन्ति यथा तथा ।
शुद्धं हि भगवज्ज्ञाने जाते सत्कर्मजीविनाम् ॥

जीवानां विनिवर्तन्ते लिङ्गान्येतानि नान्यदा[11] ।
विराजः स्थूलदेहो यो ब्रह्माण्डाख्यस्स महान् ॥

[1] रागो A. E. I. [2] रम्य A. B. C. D. I. [3] F. omits 3 lines from here.
[4] देह चात्म A. B C. [5] देहिनः E. [6] कर्मणः E.
[7] अभिधानता A. B. C. D. F. [8] सातत्येन E. I. [9] अनंशं D. F.
[10] देहस्थो E. [11] नान्यथा B.

चतुर्विधानि चान्यानि शरीराणि शरीरिणाम् ।
एषा मे भौतिकी सृष्टिरितीद सृष्टिचिन्तनम् ॥

स्थितिर्नाम तृतीया मे [1]शक्तिर्या ते पुरोदिता ।
तस्या स्वरूप वक्ष्यामि तन्मे शक्र निशामय ॥

आद्यसृष्टिक्षणो यस्तु सजिहीर्षाक्षणश्च य ।
यत्स्थैर्यकरण नाम तयोरन्तरवर्तिनाम्[2] ॥ ४९ ॥

नानारूपैर्मदीयै सा स्थितिशक्ति परा मम ।
विष्णुना देवदेवेन मया चैव तथा तथा ॥ ५० ॥

या स्थिति कथिता [3]सा तु प्रथमा तत्त्वचिन्तकै ।
मन्वन्तराधिपैश्चैव द्वितीया परिकीर्तिता ॥ ५१ ॥

मनुपुत्रैस्तृतीयान्या क्षुद्रैरिति चतुर्विध ।
चतुर्थी सहृतीशक्तिस्तस्या भेदमिम शृणु ॥

नाशो जरायुजादीना भूताना नित्यदा तु या ।
सा नित्या सहृतिस्त्वन्या शक्र नैमित्तिकी स्मृता ॥

त्रैलोक्यविषया सा तु ब्रह्मप्रस्वापहेतुका ।
तृतीया [4]प्राकृती प्रोक्ता महदादिव्यपाश्रया ॥५४॥

प्रासूती तु चतुर्थी स्यादव्यक्तविषया तु सा ।
मायी या पञ्चमी प्रोक्त प्रसूतिविषया तु या ॥

[5]शाक्ती षष्ठी तु विज्ञेया मायासविषया तु सा ।
सप्तम्यात्यन्तिकी प्रोक्ता विलयो योगिना मयि ॥

सूक्ष्माणि विनिवर्तन्ते शरीराणि तदा सताम् ।
एषा सप्तविधा शक्र सहृतिस्त मयोदिता ।
पञ्चम्यनुमहाख्या[6] मे [7]शक्तिर्व्याख्यामिमा शृणु ॥

इति [8]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे तिरोभावादिशक्तिप्रकाशो नाम
द्वादशोऽध्याय

---

[1] सा शक्तिर्या D E I
[2] वर्तिना B
[3] साधु E I
[4] प्राकृते A B C G
[5] E. omits this line
[6] महाख्या A C D G F
[7] शक्ति मुख्या A C G
[8] श्रीपञ्चरात्र A , श्रीपाञ्चरात्रे I

# त्रयोदशोऽध्यायः

श्रीः—

अनुग्रहात्मिका शक्र शक्तिर्मे पञ्चमी स्मृता ।
तामिमां तत्त्वतो वत्स वदामि तव सांप्रतम् ॥

अविद्यया समाविद्धा अस्मितादिवशीकृताः ।
मच्छक्त्यैव तिरोभूतास्तिरोधानाभिधानया ॥

उच्चान्नीचे पतन्तस्ते नीचादुत्पतयालवः ।
निबद्धास्त्रिविधैर्बन्धैः स्थानत्रयविवर्तिनः ॥ ३ ॥

संसाराङ्गारमध्यस्थाः पच्यमानाः स्वकर्मणा ।
सुखाभिमानिनो दुःखे नित्यमज्ञानधर्षिताः ॥ ४ ॥

[1]ता योनीरनुधावन्तश्चराचरविभेदिनीः[2] ।
अपूर्वपूर्वभूताभिश्चित्राभिः स्वहेतुभिः ॥ ५ ॥

देहेन्द्रियमनोबुद्धिवेदनाभिरहर्निशम् ।
जननानि प्रबध्नन्तो मरणानि तथा तथा ॥ ६ ॥

क्लिश्यमाना इति क्लेशैस्तैस्तैर्योगवियोगजैः ।
उद्यत्कारुण्यसंताननिर्वापिततदागसा ॥ ७ ॥

मया जीवाः समीक्ष्यन्ते श्रिया दुःखविवर्जिताः ।
सोऽनुग्रह इति प्रोक्तः शक्तिपातपराह्वयः[3] ॥ ८ ॥

कर्मसाम्यं भजन्त्येते प्रेक्ष्यमाणा मया तदा ।
अपश्चिमा तनुः सा स्याज्जीवानां प्रेक्षिता मया ॥९॥

अहमेव हि जानामि[4] शक्तिपातक्षणं च तम्[5] ।
नासौ पुरुषकारेण न चाप्यन्येन हेतुना ॥ १० ॥

केवलं स्वेच्छयैवाहं[6] प्रेक्षे कंचित् कदाचन ।
ततः प्रभृति स स्वच्छस्वच्छान्तःकरणः पुमान् ॥

कर्मसाम्यं समासाद्य शुक्लकर्मव्यपाश्रयः ।
वेदान्तज्ञानसंपन्नः सांख्ययोगपरायणः ॥ १२ ॥

सम्यक्सात्त्वतविज्ञानाद्विष्णौ सद्भक्तिमुद्वहन् ।
कालेन महता योगी निर्धूतक्लेशसंचयः ॥ १३ ॥

विधूय विविधं बन्धं द्योतमानस्ततस्ततः ।
प्राप्नोति परमं ब्रह्म लक्ष्मीनारायणात्मकम् ॥ [illegible]

एषा तु पञ्चमी शक्तिर्मदीयानुग्रहात्मिका ।
स्वाच्छन्द्यमेव मे हेतुस्तिरोभावादिकर्मणि [illegible]

इत्थं शक्र विजानीहि नानुयोज्यमतः[7] [illegible]

शक्रः—

नमः सरोरुहावासे नमो नारायणाश्रये ॥ [illegible]

नमो नित्यानवद्यायै कल्याणगुणसिन्धवे ।
त्वद्वागमृतसंदोहक्षालितं मे मनस्तमः ॥ [illegible]

[8]भूयोऽहं श्रोतुमिच्छामि चित्रार्थं [illegible]

श्रीः—

एको नारायणो देवः परमात्मा [illegible]

सदा ज्ञानबलैश्वर्यवीर्यशक्त्योजसां [illegible]
अनादिरपरिच्छेद्यो देशकाल[illegible]

[1] तयोर्निरनु A. B. C.
[2] भेदिनः A. B. C. F. G.
[3] [illegible]
[4] जनानि E.
[5] क्षणाश्रितम् E.
[6] [illegible]
[7] इतः E. ; योज्यास्म्यतः I
[8] B. omits verses 18 and 19.

तस्याह परमा देवी षाड्गुण्यमहिमोज्ज्वला ।
सर्वकार्यकरी शक्तिरहंता नम शाश्वती ॥ २० ॥

संविदेका स्वरूप मे स्वच्छस्वच्छन्दनिर्भरा[1] ।
सिद्धयो विश्वजीवानामायतन्तेऽखिला मयि ॥ २१ ॥

आत्मभित्तौ जगत्सर्वं स्वेच्छयोन्मीलयाम्यहम् ।
मयि लोका स्फुरन्त्येते जले शकुनयो यथा ॥

स्वाच्छन्द्यादवरोहामि पञ्चकृत्यविधायिनी ।
साह यदवरोहामि [2]सा हि चिच्छक्तिरुच्यते ॥

सकोचो मामक सोऽय स्वच्छस्वच्छन्दचिद्घन ।
अस्मिन्नपि जगद्भाति दर्पणोदरशैलवत् ॥ २४ ॥

वज्ररत्नवदेवैष [3]स्वच्छ स्फुरति सर्वदा ।
चैतन्यमस्य धर्मो य प्रभा भानोरिवामला ॥

[4]तया स्फुरति जीवोऽसौ स्वत एवानुरूपया[5] ।
विधत्ते पञ्च कृत्यानि जीवोऽयमपि नित्यदा ॥

या [6]वृत्तिर्नीलपीतादौ सृष्टि सा कथिता बुधै ।
[7]सक्तिर्या विषये तत्र[8] सा स्थिति परिकीर्त्यते ॥

गृहीताद्विषयाद्योऽस्य विरामोऽन्यजिघृक्षया ।
सा सहृति समाख्याता तत्त्वशास्त्रविशारदै ॥

तद्वासना तिरोभावोऽनुग्रहस्तद्विलापनम् ।
[9]ग्राह्यग्रसनशीलोऽय वह्निवद्ग्रसन [10] सदा ॥ २९ ॥

पुष्यत्येष सदा जीवो मात्रया मे समिन्धनम् ।
आविद्य मत्स्वरूप तु व्याख्यात त पुरा मया ॥

शुद्धविद्यासमायोगात् सकोचं यज्जहात्यसौ ।
तदा प्रद्योतमानोऽय सर्वतो मुक्तबन्धन ॥ ३१ ॥

ज्ञानक्रियासमायोगात् सर्ववित्सर्वकृत्सदा[11] ।
अनणुश्चाप्यसंकोचान्मद्भावायोपपद्यते ॥ ३२ ॥

यावन्निरीक्ष्यते नाथ मया कारुण्यवत्तया ।
तावत्सकुचितज्ञान करणैर्विश्वमीक्षते ॥ ३३ ॥

चक्षुरालोक्य वस्तूनि विकल्प्य मनसा तथा ।
अभिमत्याप्यहकाराद् बुद्धयैव ह्यध्यवस्यति ॥

[12]जगरायामथ स्वप्ने करणैरान्तरैश्चरन् ।
विहाय तत् सुषुप्तौ तु स्वरूपेणावतिष्ठते ॥ ३५ ॥

अवस्थास्ता इमास्तिस्र [13]आकृत्यो नैव जीवगा ।
तुर्यापि या दशा जीवे समाधिस्थे प्रजायते ॥ ३६ ॥

सापि नैवास्य किं त्वेषा शुद्धसत्त्वव्यवस्थिति ।
अनवस्थमनाघ्रातमखिलै प्राकृतैर्गुणै ॥ ३७ ॥

अनौपाधिकमच्छेद्य जीवरूप तु चिन्मयम् ।
एवरूपमपि त्वेतच्छाद्यतेऽनाद्यविद्यया ॥ ३८ ॥

सुदृश्यामात्मभूता मा नैव पश्यत्यसौ तत ।

शक्र —

सुदृश्यासि कथ देवि त्व प्रमाणातिगा सती ॥

वेदान्ता अपि नैव त्वा विदुरित्थतयाम्बुजे ।

श्री —

मा तु शक्र विजानीहि प्रत्यक्षा सर्वदेहिनाम् ।
समाहितमना भूत्वा शृणुष्वेद मत मम ॥ ४० ॥

इति [14]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [15]जीवस्वरूपप्रकाशो नाम
त्रयोदशोऽध्याय

---

1 निर्भरा B D F
2 जव A B F
3 सदा स्फुरति छन्दत C I
4 तया E
5 रूपवान् E
6 भित्तौ नीलपीतादि E. I
7 सक्ति D
8 यत्र B F , योऽत्र E
9 ग्राह्यासनोय A B C.
10 छदन A B C
11 तदा B
12 जगरान्ते यथा A G
13 मत्कृत्या A. B C. D
14 श्रीपञ्चरात्र A , श्रीपञ्चरात्रे I
15 जन्मस्वरूपप्रकाशो B I

# चतुर्दशोऽध्यायः

[1]श्री —

ज्ञानस्वरूपो भगवान् देशकालाद्यभेदित [2] ।
वासुदेव पर ब्रह्म गुणशून्य निरञ्जनम् ॥ १ ॥

सुख सदैकरूप तु षाड्गुण्यमजरामरम्[3] ।
तस्याह परमा शक्तिरहता शाश्वती ध्रुवा ॥ २ ॥

व्यापारशक्तिरेषा मे सिसृक्षालक्षणा भवेत्[4] ।
[5]अयुतायुतकोट्योघकोटिकोट्ययुताशत [6] ॥ ३ ॥

साह सृजामि स्वाच्छन्द्याद् द्विधा भेदमुपेयुषी ।
चेत्यचेतनभावेन चिच्छक्तिश्चेतनोऽनयो ॥ ४ ॥

चेत्यचेतनता प्राप्ता सविदेव मदात्मिका ।
सविदेव हि मे रूप[7] स्वच्छस्वच्छन्दनिर्भरा ॥५॥

सा त्विक्षुरसवद्योगात् स्त्यानता प्रतिपद्यते ।
अतो [8]निरूप्यमाण तच्चेत्य [9]चित्त्वमुपेष्यति ॥६॥

यथा हि वह्निना लीढमिन्धन तन्मय भवेत् ।
एव [10]चिता समालीढ चेत्य चिन्मयता व्रजेत् ॥

नीले पीते सुखे दुःखे चित्स्वरूपमखण्डितम् ।
विशिनष्टि [11]विकल्पस्तच्चिन्नयोपाधिसपदा ॥ ८ ॥

[12]विकल्पोऽपि हि मद्रूप स्वाच्छन्द्यादेव निर्मितम् ।
चेत्य [13]विकल्प्यते येन बहिरन्तर्व्यवस्थया ॥ ९ ॥

न बहिर्नैव चान्तस्तच्चिद्रूप मम तत् परम्[14] ।
वेद्यवेदकरूपेण भेद्यते मे स्वयतया ॥ १० ॥

यद्विकल्पैरनाक्रान्त[15] यच्छन्दैरकदर्थितम् ।
यदुपाधिभिरम्लान [6] रूप तच्चेत्यता गतम् ॥ ११ ॥

दूरापास्तविकल्पेन चेतसा [17]यत्र भूयते ।
मध्यमा वृत्तिमास्थाय चेत्य सवित्तया तदा ॥

यथा चक्षु स्थित रूप बाह्ये स्व रूपमीक्ष्यते[18] ।
[19]तथा ज्ञानस्थित रूप ज्ञेये स्व रूपमीक्ष्यते ॥१३॥

[20]यथा वह्निसमाविष्ट काष्ठ तद्रूपमीक्ष्यते ।
तथा सवित्समाविष्ट चेत्य सवित्तयेक्ष्यते ॥१४॥

वेद्य वेदनता नीत्वा [21]यदा वेत्त्रा निरूप्यते ।
तदा वित्तिमयी स ह प्रत्यक्षा स्फुटभासिनी ॥

अद्वैतेन हि चित्तत्व वेद्याद्भिन्न स्वलक्षणम् ।
सा चाहमेव तेनाह [22]सर्वत शुद्धचिन्मयी ॥१६॥

सप्लुतेदपदद्वीपे प्रान्तेऽध्ये चिदम्बुधौ ।
मज्जता चैव चेत्यानामस्मि हस्तावलम्बनम् ॥१७॥

मद्रूपतामृतानिष्यन्दप्लावितारोपभासना ।
मामेवात्मनि पश्यन्ति चेत्यौघग्रसनीं चितम् ॥

[1] श्रीरुवाच B E
[2] भेदत E F I
[3] षाड्गुण्यं सचराचरम् C
[4] भवत् F. G I
[5] अयुतायुतकोट्याश्च A B
[6] अर्बुदाशत E. I
[7] रूपं मे E I
[8] निरूप्यमानं A B C D
[9] चित्त्वं न मुञ्चति C
[10] चेयं समालीढमेवं A , च तन्मया E
[11] विकल्पस्त्वच्चिन्नया E I
[12] अन्यैव मद्रूपे A B C.
[13] विकल्पभेदेन E.
[14] अमलं परम् A B C D
[15] अनाकृत्त E.
[16] अम्लानं A E. I
[17] येन A D E. F G
[18] ईक्षते B
[19] B C. D E. omit this line
[20] E. omits this line
[21] यत्र A B D
[22] सर्वत्र चिन्मयी C.

मम [1]चित्तैकरूपाया वेद्यवेदकता जना ।
अविद्ययैव मन्यन्ते मत्सकल्पितया [2]पुरा ॥१९॥

न शान्ता नोदिता नापि मध्यमाह स्वरूपत ।
मद्विवेकजुषामेव प्रकाशे जागरास्वपि ॥ २० ॥

परित्यक्तविभागेन निस्तरङ्गेण चेतसा ।
[3]ज्ञाये विकल्प्यमाना तु प्रत्यक्षाप्यस्मि विस्मृता ॥

पुर स्थितो यथा भावश्चेतसोऽन्याभिलाषिण ।
न भासते तथैवाह न भासे वासनाजुषाम् ॥२२॥

बुभुत्सावान् यथा [4]वृत्तीनिरुध्यान्यत्र चेतसा ।
प्रत्यक्षमीक्षते वस्तु तथा मा शुद्धसविदम् ॥२३॥

सदैवाप्रतिवद्धाया भात्या एव [5]वपुर्मम ।
प्रत्यक्ष चेत्यसचारकालेऽपि विमलात्मनाम्[6] ॥

यथा जात्या सित [7]वस्त्र रक्त रागेण केनचित् ।
पुन स्ववर्णमप्राप्य नैव रागान्तर श्रयेत् ॥ २५ ॥

नीलाद्येव विदन् पीत मध्ये शुद्धचिदात्मनि ।
मयि चेन्नैव विश्रान्त पीत विद्यात्कथ न्वयम् ॥

तथैवोच्चारयन् वाक्यं वर्णाद्वर्णं कथ व्रजेत् ।
यदि मध्ये न विश्रान्तो मयि शुद्धचिदात्मनि ॥

एव शुद्धा स्वतन्त्रापि यदाकारोपरागिणी ।
तत्त्यागापरसचारा मध्ये शुद्धैव भाम्यहम् ॥२८॥

दक्षिणेतरसचारनिरोधान्मध्यमाश्रित ।
अग्नीषोमेन्धनो भाव प्रकाशयति मे पदम् ॥२९॥

धिया ध्येयमनालम्ब्य विषय चास्पृशन् बहि ।
यदन्तरा वेदयते तन्मे रूपमनाकुलम् ॥ ३० ॥

अनुवृत्ता तु या सम्यक् तेनस्यपि तमस्यपि ।
भाति भावेऽप्यभावेऽपि सा मे तनुरकुर्बरा ॥

निवृत्तविषयेच्छस्य मद्भक्त्युल्लसितात्मन ।
आन्तर यदनालम्बमहत्व तद्वपुर्मम ॥ ३२ ॥

तदेवाभ्यस्यमानाना देहप्राणाद्यगोचरम् ।
विवेकिनामहरूप मद्भावेनावतिष्ठते ॥ ३३ ॥

ततस्तेजो यथैवार्के व्यज्यते न तु जन्यते ।
भावैश्चिद्रूपमप्येव व्यक्त नैव च जन्यते ॥ ३४ ॥

भावैर्विना यथा भानु समुदेति नभ स्थले ।
वेद्यैर्विनैव मे रूपमेव प्रद्योतते स्वयम् ॥ ३५ ॥

अत्यन्ताच्छस्वभावत्वात् स्फटिकादिर्यथा मणि ।
उपरक्तो जपाद्यैस्तु स्वेन रूपेण नेक्ष्यते ॥ ३६ ॥

मत्सकल्पसमुद्रिक्तैश्चेत्यै [8] स्वच्छाहमप्यथ[9] ।
पृथग्जनैर्न लक्ष्यास्मि नैवाह नास्मि तावता ॥३७॥

कुण्डलादेर्यथा भिन्ना न लक्ष्या कनकस्थिति ।
[10]न च शक्या विनिर्दिष्टु तथाप्यस्त्येव सा ध्रुवम् ॥

एव नित्या विशुद्धा च सुखदु खाद्यभेदिता ।
स्वसवेदनसवेद्या मम सविन्मयी स्थिति ॥ ३९ ॥

विज्ञातरि तथा ज्ञाने ज्ञेये जानातिना वय ।
योऽय मदन्वय सोऽय प्रत्ययार्थविशेषित ॥४०॥

देशकालक्रियाकारा प्रसिद्धा भेदहेतव ।
तान् भेदयति या सवित्तस्या भेद कुतो भवेत् ॥

चेत्यभेदो हि य कालो भूतादित्रितयात्मक ।
सविन्महोदधौ सोऽपि विलीनस्तन्मयो भवेत् ॥

यदा हि वर्तमानाया मयि भूतभविष्यती ।
प्रतिक्षिप्ते तदा चेय नैव स्याद्वर्तमानता ॥ ४३ ॥

आधारोऽहमशेषाणा नैवाधेयास्मि केनचित् ।
देशोऽप्याधारत इमस्ततो मे नैव विद्यते ॥४४॥

[1] चित्तैक A D E G
[2] तथा A B D F
[3] B omits 4 lines from here
[4] वृत्ति E
[5] पुन E G
[6] निदितामनाम् A B C D G
[7] वस्तु E
[8] समुद्रुत्तेश्चेये E
[9] उत I
[10] F omits 3 lines from here, न च शक्यैव निर्दिष्टु I

काप्यवस्था [1]न मे सास्ति यस्यां संविन्न वर्तते ।
तेन मां चिद्घनामेकां सर्वाकारामुपासते ॥ ४५ ॥

कालो देशस्तथाकारः क्रिया कर्ता च कर्म च ।
करणं संप्रदानं च भवेद्यच्च ततः फलम् ॥ ४६ ॥

भोगो भोक्ता च तत्सर्वं विलीनं [2]संविदात्मनि ।
देवा दैत्यास्तथा नागा गन्धर्वा रक्षसां गणाः ॥

विद्याधराः पिशाचाश्च भूताश्चेति गणाष्टकम् ।
मनुजा बहुधात्मानो वर्णकर्मादिभेदिताः ॥ ४८ ॥

पशवोऽथ मृगाश्चैव पक्षिणश्च सरीसृपाः[3] ।
स्थावराश्च तथैवान्ये कपूयचरणात्मकाः ॥ ४९ ॥

स्वर्गस्था नरकस्थाश्च लोकाश्चैव चतुर्दश ।
सरिद्द्वीपसमुद्राश्च विविधा ह्यण्डपद्धतिः ॥ ५० ॥

उच्चावचानि तत्त्वानि विविधाः शब्दराशयः ।
भोग्यं भोगोपकरणं भोगस्थानं च यत् स्मृतम् ॥

कोशाः षट् कोशजाश्चैव[4] चेतनाचेतनात्मकाः ।
शुद्धाशुद्धमयौ भावौ पुरुषार्थश्चतुर्विधः ॥ ५२ ॥

सर्वं प्रकृतिभिर्नद्धं कालेन कलितं तथा ।
इत्येतत्सकलं वस्तु भावाभावस्वरूपकम् ॥ ५३ ॥

अमन्मयं मन्मयं च मयि लीनमवस्थितम् ।
सर्वात्मना सदैवाहं स्वच्छस्वच्छन्दचिन्मयी ॥

लक्ष्या सुखमयी शान्ता भावे भावे विपश्चिता ।
एवं व्यवस्थिताया मे तिरोभावाभिधानया ॥

बद्धा शक्त्या तु चिच्छक्तिः स्वतो मां नैव विन्दति ।
यदा निर्विद्यते [5]सासौ मदनुग्रहबिन्दुना ॥ ५६ ॥

उपायैर्मां तदाराध्य[6] जीवश्चिच्छक्तिसंज्ञकः ।
संक्षिण्वन् [7]निखिलान्क्लेशान्विधून्वन्वासनारजः ॥

संप्राप्य ज्ञानसद्भावं योगक्षपितबन्धन[8] ।
मामेव परमानन्दमयीं लक्ष्मीं स विन्दति ॥ ५८ ॥

इति [9]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [10]लक्ष्मीस्वरूपप्रकाशो नाम
चतुर्दशोऽध्यायः

---

[1] तु मे नास्ति A. B. C.
[2] सर्वदा A. G.
[3] ससरीसृपाः E. I.
[4] एते A. B. C. F.
[5] वासौ B.
[6] मान्तराराध्य B.
[7] सकलान् कोशान् E.; निखिलान् कोशान् G. I.
[8] बन्धनः E. I.
[9] श्रीपञ्चरात्रे F.; श्रीपाञ्चरात्रे सारे I.
[10] A. G. I. omit लक्ष्मी.

# पञ्चदशोऽध्यायः

शक्र—

नमस्ते पद्मसम्भूते नमः कमलमालिनि।
नमः कमलवासिन्यै[1] गोविन्दगृहमेधिनि ॥ १ ॥

नमस्ते कञ्जकिञ्जल्ककल्पिताल्पकविभ्रमे।
सर्वज्ञे सर्वभूतानामन्तःस्थे सर्वसाक्षिणि ॥ २ ॥

त्वद्वक्त्रकमलोद्भूतं सर्वं तदवधारितम्।
तत्त्वतः सृष्टं त्वया जातं त्वय्येव लयमेष्यति ॥ ३ ॥

माता मानं मितिर्मेयं त्रिधा एतास्त्वदात्मिकाः।
त्वामेवाराध्य जीवास्ते तरन्ति भवसागरम् ॥ ४ ॥

एवमादि मया देवि तत्त्वतस्त्ववधारितम्।
कौतूहलमिदं मेऽद्य वर्तते पद्मसम्भवे ॥ ५ ॥

तोषणीयासि केन त्वमुपायेनाम्बुजासने।
परमः पुरुषार्थो यस्त्वत्प्रीतिस्तस्य साधनम् ॥ ६ ॥

त्वत्प्रीतौ क उपायः स्यात्कीदृशः किंविधः स्मृतः[2]।
एतन्मे सकलं ब्रूहि नमस्ते पद्मसम्भवे ॥ ७ ॥

श्री—

चातुरात्म्यं परं ब्रह्म [3]सच्चिदानन्दलक्षणम्।
सत् सर्वोत्तरं सर्वभूतान्तःस्थमनामयम् ॥ ८ ॥

वासुदेवः परं ब्रह्म [4]नारायणमयं महत्।
तस्याहं परमा शक्तिरहन्तानन्दचिन्मयी ॥ ९ ॥

भिन्नाऽभिन्ना च वै ततोऽहं ज्योत्स्नेव हिमदीधितेः।
तावावां तत्त्वमेकं तु द्विधा भूतौ[5] व्यवस्थितौ ॥

ब्रह्म नारायणं मां [6]च यज्ज्ञानेनैवाप्नुयाद्यतिः।
पन्था नान्योऽस्ति विज्ञानादयनाय विपश्चिताम् ॥

ज्ञानं च विवेकोत्थं सर्वतः शुद्धमव्रणम्।
वासुदेवैकविषयमपुनर्भवकारणम् ॥ १२ ॥

ज्ञाने तस्मिन् समुत्पन्ने विशते मामनन्तरम्।
तैस्तैरुपायैः प्रीताहं जीवानाममलात्मनाम् ॥ १३ ॥

उद्भावयामि तज्ज्ञानमात्मज्योतिःप्रदर्शकम्।
उपायास्ते च चत्वारो मम प्रीतिविवर्धनाः ॥

६. परमः पुरुषार्थो मोक्षः। तस्य त्वत्प्रीतिः साधनम्। यथा चाहुः—"श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते संसृत्यामयवैष्णवाध्वसु नृणां सम्भाव्यते कर्हिचित्" इति। ८. "सत्यं ज्ञानम्" इत्यादिश्रुतिप्रतिपाद्यं स्वरूपलक्षणमुच्यते—सदित्यादिना। सर्वोपादानत्वात् सर्वात्मत्वाच्च सर्वमित्युच्यते। तथापि स्वेतरसमस्तवस्तुविलक्षणत्वमाह—सर्वोत्तरमिति। ९. नारायणमयमिति मयट् स्वार्थे। १०. प्रपञ्च इव ब्रह्मण एवावस्थाभेदः श्रीरिति केषाञ्चिन्मतमनभिमतमित्याह—भिन्नेति। ११. यतिः नियतात्मवान्। नात्र चतुर्थाश्रमी विवक्षितः। १२. विवेको ब्रह्मणः सर्वविलक्षणत्वज्ञानम्। १४. कर्मज्ञानभक्तिन्यासाख्या

[1] मालिन्यै F
[2] तथा B D I
[3] संविदा E I
[4] नयगाम्यर्न E I
[5] भूत्वा G
[6] वा ज्ञानेन E I

[1]शक्र —

भगवत्यरविन्दरथे पङ्कजेक्षणरामिणि ।
[2]उपाया के च चत्वारस्तान्मे दर्शय पङ्कजे ॥

श्री —

उपायाश्चतुर शक्र शृणु मत्प्रीतिवर्धनान् ।
यैरह परमा प्रीतिं यास्याम्यनपगामिनीम् ॥ १६ ॥

स्वजातिविहित कर्म सारय योगस्तथैव च ।
सर्वत्यागश्च विद्वद्भिरुपाया कथिता इमे ॥ १७ ॥

चतुर्भिर्लक्षणैर्युक्त त्रिविध कर्म वैदिकम् ।
स्ववर्णाश्रमसबन्धि नित्यनैमित्तिकात्मकम् ॥ १८ ॥

अकामहतससिद्ध कर्म तत् पूर्वसाधनम् ।
चतुर्विधस्तु सन्यासस्तत्र कार्यो विपश्चिता ॥ १९ ॥

मन्त्रोक्तदेवताया वा प्रकृताविन्द्रियेषु वा ।
परस्मिन् देवदेवे वा वासुदेवे जनार्दने ॥ २० ॥

[3]पूर्व कर्तृत्वसन्यास फलसन्यास एव च ।
कर्मणामपि सन्यासो देवदेवे जनार्दने ॥ २१ ॥

शास्त्रीयमाचरन्नेव नित्यनैमित्तिकात्मकम् ।
मदाराधनकाम सञ्शश्वत् प्रीणाति मा नर ॥

इति ते लेशत प्रोक्त श्रुतिस्मृतिनिदर्शितम्[4] ।
द्वितीय सारव्यविज्ञानमुपाय शृणु साम्प्रतम् ॥ २३ ॥

सख्यास्तिस्रो हि मन्तव्या सारव्यशास्त्रनिदर्शिता ।
प्रथमा लौकिकी सख्या द्वितीया [5]चर्चनात्मिका ॥

समीचीना तु या धी सा तृतीया परिपठ्यते ।
सख्यात्रयसमूहो य सारय तत्परिपठ्यते ॥ २५ ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
अहकारो महाश्चैव प्रकृति परमा तथा ॥ २६ ॥

एता प्रकृतयस्त्वष्टौ तासा व्याख्यामिमा शृणु ।
प्रकृतिस्त्रिविधा प्रोक्ता माया सूतिर्गुणात्मिका ॥

चत्वारो येगा अत्र विवक्षिता । १८. लक्षणचतुष्क विंशे श्लोके वक्ष्यते । नित्यनैमित्तिककाम्यभेदेन त्रैविध्यम्। १९. काम्यकर्मसु विशेषमाह—अकामेति। फलविशेषकामनया कृतानि कर्माणि काम्यानि ज्योतिष्टोमादय । तानि च कामहतानीत्युच्यन्ते । कामना विना केवल भगवत्प्रीत्यर्थं कृतानि तान्यकामहतानि । अनेन काम्यानामपि कर्मणा कामना विनानुष्ठानमनुमन्यते । पर त्वेनदुपायान्तरनिष्ठविषयम् । न्यासयोगनिष्ठ'ना तु काम्यकर्मणा सर्वथा स्वरूपतोऽपि त्याग एव, न तु कामना विनाप्यनुष्ठानमिति सिद्धान्तोऽवगन्तव्य । २०. भगवति वासुदेवे कर्मणा सन्यसनमेव मुमुक्षुभि कर्तव्यम्। मन्त्रदेवत'दौ विन्यसन तु बुभुक्षुविषयमिति ध्येयम् । २१. 'भगवानेव स्वशेषतैकरसेन मया स्वकीयैश्चोपकरणै स्वाराधनैकप्रयोजनाय स्वशेषभूतमिद कर्म स्वयमेव कारयति' इत्यनुसधानप्रकारो विवक्षित । २४. त्रयाणामप्येषा ज्ञानाना विवरणमत्रेव करिष्यते । २५. सख्या ज्ञानानि पूर्वोक्तानि । तेषा समूह सारव्यमित्युच्यते । एतदेव ज्ञानयेग इत्युच्यते । २६. लैकिकी लोकविषया सख्योच्यतेऽनेन श्लोकेन । उपरितने श्लोकैरस्या विवरण क्रियते । २७. माया प्रसूति त्रैगुण्यमिति प्रकृतिभेदा । यद्यपि प्रकृति सूक्ष्मेव, तथापि तत्रैव सूक्ष्मसूक्ष्मतरसूक्ष्मतमरूपेण त्रैविध्या-

[1] B omits six lines from here [2] के तेऽप्युपाया E I [3] सर्व E I
[4] निदर्शनम् A B C [5] चर्चिका E I

नि सक्तासक्तमद्वैतमतरङ्गमनश्वरम् ।
अचेतनाना परम सौक्ष्म्य मायेति गीयते ॥ २८ ॥

ईषदुच्छूनता तस्या प्रसूतिरिति गीयते ।
गुणत्रयसमुन्मेष साम्येन प्रकृति परा ॥ २९ ॥

अव्यक्तमक्षर योनिरविद्या त्रिगुणा स्थिति ।
माया स्वभाव इत्याद्या शब्दा पर्यायवाचका ॥

सत्त्व रजस्तमश्चेति गुणा एते त्रयो मता ।
तत्र सत्त्व लघु ज्ञेय सुखरूपमचञ्चलम् ॥ ३१ ॥

प्रकाशो नाम तद्वृत्तिश्चैतन्योद्ग्रहणात्मक ।
रजोऽपि च लघु ज्ञेय दु खरूप च चञ्चलम् ॥

प्रवृत्तिर्नाम तद्वृत्ति स्पन्दहेतुरनश्वर ।
तमो नाम गुरु ज्ञेय मोहरूपमचञ्चलम् ॥ ३३ ॥

नियमो नाम तद्वृति क्वचित् स्थापनलक्षणम् ।
न तदस्ति पृथिव्या वा दिवि व्योम्नि च वासव ॥

भूत प्रकृतिजैर्मुक्त यदेभि स्यात् त्रिभिर्गुणै ।
एते चित्तमधिष्ठाय गुणा इन्द्रियगास्तथा ॥ ३५ ॥

सुख दु ख तथा मोह विषयस्थाश्च कुर्वते ।
[1]शरीरेन्द्रियता याता[2] गुणा कर्माणि कुर्वते ।
इति यस्य मतिर्नित्या स गुणात्ययमश्नुते ॥ ३६ ॥

इति [3]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [4]उपायप्रकारप्रकाशो नाम
पञ्चदशोऽध्याय

देव व्यवहार । ३०. अवान्तरभेदै सह सकलस्य प्रकृतिपर्यायनामानि अव्यक्तादीनि । उपनिषदि "अव्यक्तमक्षरे लीयते । अक्षर तमसि लीयते । तम परमात्मन्येकीभवति" इति त्रयाणामेषा व्यवहार क्रियते । ३२. चैतन्यस्य ज्ञानस्य उद्ग्रहणम् उन्मेष इत्यर्थ , वस्तुयाथात्म्यग्रहणशीलतेति यावत् । ३४. नियमो बन्ध ।

## इति पञ्चदशोऽध्यायः

---

[1] F omits this line
[2] इन्द्रियतायाा च E
[3] श्रीमन्नरात्र A
[4] उपायप्रकाशो B F G I

# षोडशोऽध्यायः

श्रीः—

व्याख्यानं महतः शक्र शृणुष्वावहितो मम ।
वैषम्यस्य समुन्मेषो गुणानां प्रथमो हि यः ॥१॥

स महान्नाम तस्यापि विधास्तिस्रः प्रकीर्तिताः ।
सात्त्विको बुद्धिरित्युक्तो राजसः प्राण एव हि[1] ॥२॥

तामसः काल इत्युक्तस्तेषां व्याख्यामिमां शृणु ।
बुद्धिरध्यवसायस्य प्राणः प्रयतनस्य च ॥ ३ ॥

कालः [2]कलनरूपस्य परिणामस्य कारणम् ।
महतोऽपि विकुर्वाणादहंकारो व्यजायत[3] ॥ ४ ॥

स चापि त्रिविधो ज्ञेयो गुणवैषम्यसंभवात् ।
तामसाद्वियदादिस्तु तन्मात्रगण उज्ज्वलः ॥ ५ ॥

जातः सत्त्वसमुद्रिक्ताद्बुद्धीन्द्रियगणो महान् ।
कर्मेन्द्रियगणश्चापि [4]राजसादुभयात्मकम् ॥ ६ ॥

उभयस्मात् समुद्भूतमितीयं तत्त्वपद्धतिः ।
अत्र प्रकृतिरेकैव मूलभूता सनातनी ॥ ७ ॥

महदाद्यास्तु सप्तान्ये कार्यकारणरूपिणः ।
तन्मात्रेभ्यः समुद्भूता विशेषा वियदादयः ॥ ८ ॥

बुद्धिकर्मेन्द्रियगणौ पञ्चकौ मन एव च ।
विकारा एव विज्ञेया एते षोडश चिन्तकैः ॥ ९ ॥

चतुर्विंशतिरेतानि तत्त्वानि कथितानि ते ।
यावान्यश्चात्र वक्तव्यो विशेषो यादृशस्त्विह ॥१०॥

स सर्वः कथितः पूर्वं तव वृत्रनिषूदन ।
विंशत्या च त्रिभिश्चैव विकारैः स्वैः समन्विता ॥

१. अनेन गुणत्रयस्य साम्यावस्थायां प्रकृतिरिति, वैषम्यावस्थायां महानिति च व्यवहार इत्युक्तं भवति । ३. कालस्य तामसत्वमत्रोच्यते । औपनिषदप्रक्रिया कालस्याप्राकृतत्वमेवेति वदन्ति । ४. कलनं विपरिणतिः । आम्रादिशलाटोः तत्फलात्मना, युवदेहस्य वलिभवृद्धदेहात्मना च या परिणतिः सेत्यर्थः । ६. कर्मेन्द्रियाणां राजसत्वं, मनसः सात्त्विकराजसत्वमिति विभागस्तान्त्रिकैकदेशिनां मतेन । वस्तुतस्तु एकादशापीन्द्रियाणि सात्त्विकानीत्येव बहूनां पाञ्चरात्रिकाणां मतम् । "देवा वैकारिका दश । एकादशं मनश्च" इति विष्णुपुराणे चोक्तम् । ७. तत्त्वपद्धतिः । अचित्तत्त्वपद्धतिरित्यर्थः । इत्थमत्र विभागः—तत्त्वं द्विविधम्, अचित्तत्त्वं चित्तत्त्वं चेति । तत्राचित्तत्त्वं चतुर्विंशतिधा—प्रकृतिमहदहंकारास्त्रयः, तन्मात्राणि पञ्च, महाभूतानि पञ्च, एकादशेन्द्रियाणीति । चित्तत्त्वं द्वेधा—जीव ईश्वरश्चेति ।

[1] उच्यते E.
[2] कालन D.
[3] अस्य जायते A. B. C. D.
[4] राजसात्तूभया॰ A. B.

इय प्रकृतिरव्यक्ता कथिता ते सुराधिप ।
व्यक्ताव्यक्तमयी सैषा नित्य प्रसवधर्मिणी ॥१२॥

विलक्षणा सा विज्ञेया चिच्छक्तिरनिनश्वरा[1] ।
स जीव कथित सद्भिस्तत्त्वशास्त्रविशारदै ॥१३॥

अथ स्वरसत शुद्ध परिणामविवर्जित ।
कूटस्थश्चिद्घनो [2]नित्यो ह्यनन्तोऽप्रतिसक्रम ॥१४॥

इमौ स्वरसतोऽसक्तौ सत्तात्मानाविव स्थितौ[3] ।
प्रकृति पुरुषश्चैव महद्भ्यश्च महत्तरौ ॥ १५ ॥

लिङ्गग्राह्यावुभौ नित्यावलिङ्गौ चाप्युभावपि ।
साधर्म्यमेवमाद्येवमनयोरुन्नयेद्बुध ॥ १६ ॥

वैधर्म्यमनयो शक्र कथ्यमान निबोध मे ।
प्रकृतिस्त्रिगुणा नित्य सतत परिणामिनी ॥ १७ ॥

अविवेक्याप्यशुद्धा च सर्वजीवसमा सदा ।
विषयोऽचेतना[4] चैव सुखदु खविमोहिनी ॥१८॥

मध्यस्थ पुरुषो नित्य क्रियावानप्यविह्वल ।
साक्षी द्रष्टिस्तथा द्रष्टा शुद्धोऽनन्तो गुणात्मक ॥

वैधर्म्यमनयोरेतत् प्रकृतिं चानयो शृणु ।
या सा सदसदाख्यादिविकल्पविकला[5] ध्रुवा॥२०॥

नित्योदिता सदानन्दा पूर्णषाड्गुण्यविग्रहा ।
अह नारायणी शक्तिर्विष्णो श्रीरनपायिनी ॥२१॥

मत्त प्रभवतो ह्येतौ मय्येव लयमेष्यत ।
साहमेतावती [6]भावैर्निर्मितैर्निर्वृतिं गता ॥ २२ ॥

नारायणे प्रतिष्ठाय पुनस्तस्मादुदेम्यहम् ।
एको नारायणो विष्णुर्वासुदेव सनातन ॥२३॥

अपृथग्भूतशक्तित्वाद्द्वैत ब्रह्म निष्कलम् ।
ज्ञानशक्तिबलैश्वर्यवीर्यतेजोमहोदधि ॥ २४ ॥

निस्तरङ्ग सदैवासौ जगदेतच्चराचरम् ।
इति ते सारयविज्ञान लेशत शक्र दर्शितम् ॥२५॥

या तत्त्वगणना सख्या ता पुरा शील्येद्बुध ।
तत साधर्म्यवैधर्म्यस्वरूपप्रभवादिकाम् ॥ २६ ॥

कुर्याच्चर्चामिमा सख्या शास्त्रतत्त्वोपदेशजाम् ।
चर्चायामिह सख्याया [7]सिद्धायाममलात्मनि ॥

उदेति या समीचीना सख्या सत्तत्त्वगोचरा ।
एषा सा परमा सख्या मत्प्रसादसमुद्भवा ॥ २८ ॥

साख्यदर्शनमेतत्ते परिसख्यानमीरितम् ।
एव हि परिसख्याय सारया [8]मद्भावमागता ॥२९॥

आहत्य षड्विंशतिस्तत्त्वानि । १२. प्रकृत्यवस्थायामव्यक्ता, परिणत्यवस्थाया व्यक्ता । कार्यकारणयोरभेदादेवमुक्ति । १४. स्वरसत स्वभावत । अनन्त , सख्यया ज्ञान दिगुणैश्चापरिच्छिन्न इत्यर्थ । २०. विकल्पविकलेति । विविधपरिणत्यभागिन त्यर्थ । २४. शक्तिशक्तिमतोरपृथक्सिद्धसम्बन्धात् एकत्वम् । अतो न द्वितीयत्वविरोध इति भाव । २५. असौ नारायण एव चराचरात्मकजगद्रूपतयावतिष्ठत इति यावत् । २७. चर्चा नाम पुन पुन परिशीलनम् ।

[1] अविनश्वरी B
[2] नियमन्त स्थो A D F
[3] सत्ता मानौ व्यवस्थितौ B
[4] अवेदना G
[5] विगुण C D
[6] भावै बन्धै A B C D
[7] F omits all portions from here up to एव हि परिसख्याय in the 29th verse
[8] सद्भाव A B C

उपायो [1]यस्तृतीयस्ते वक्ष्यते योगसंज्ञकः ।
योगस्तु द्विविधो ज्ञेयः समाधिः संयमस्तथा ॥३०॥

यमाद्यङ्गसमुद्भूता समाधिः संस्थितिः परे ।
ब्रह्मणि श्रीनिवासाख्ये ह्युत्थानपरिवर्जिता[2] ॥

साक्षात्कारमयी सा हि स्थितिः सद्ब्रह्मवेदिनाम् ।
ध्यातृध्येयाविभागस्था मत्प्रसादसमुद्भवा ॥ ३२ ॥

संयमो नाम सत्कर्म परमात्मैकगोचरम् ।
तत्पुनर्द्विविधं प्रोक्तं शारीरं मानसं तथा ॥ ३३ ॥

विस्तरेणाभिधास्येते समाधिः संयमस्तथा ।
प्रथमो य उपायस्ते कर्मात्मा कथितः पुरा ॥ ३४ ॥

संज्ञानं जनयेच्छुद्धमन्तःकरणशोधनात् ।
तेन हि प्रीणिता साहं सदाचारनिषेवणात् ॥

ददामि बुद्धियोगं तमन्तःकरणशोधनम् ।
सांख्यं नाम द्वितीयो य उपायः कथितस्तव ॥

परोक्षः शास्त्रजन्योऽसौ निर्णयो दृढतां गतः ॥
प्रत्यक्षतामिवापन्नो मत्प्रीतिं जनयेत्पराम् ॥ ३७ ॥

अहं संख्यायमाना हि स्वरूपगुणवैभवैः ॥
उद्भावयामि तज्ज्ञानं प्रत्यक्षं यद्विवेकजम् ॥ ३८ ॥

तृतीयस्तु समाध्यात्मा [3]प्रत्यक्षोऽविप्लवो दृढः ।
प्रकृष्टसत्त्वसंभूतः प्रसादातिशयो हि सः ॥ ३९ ॥

तृतीयस्य विधा योऽसौ संयमो नाम वर्णितः ।
भोगैः शुद्धैस्त्रिधोद्भूतैरत्यन्तप्रीतये मम ॥ ४० ॥

अहं हि तत्र विश्वात्मा विष्णुशक्तिः परावरा ।
साक्षादेव समाराध्या देवो वा पुरुषोत्तमः ॥४१॥

इति ते कथिताः सम्यगुपायास्त्रय ऊर्जिताः ।
शृणूपायं चतुर्थं मे सर्वत्यागसमाह्वयम् ॥ ४२ ॥

[4]तत्र धर्मान् परित्यज्य सर्वानुच्चावचाङ्गकान् ।
संसारानलसंतप्तो मामेकां शरणं व्रजेत् ॥ ४३ ॥

अहं हि शरणं प्राप्ता नरेणानन्यचेतसा ॥
प्रापयाम्यात्मनात्मानं निर्धूताखिलकल्मषम् ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [6]उपायप्रकारविवरणं नाम
षोडशोऽध्यायः

३७. अविभागस्थेति । "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इत्युक्तरीत्या परस्य ब्रह्मणोऽविभागेनोपासनमत्राभिप्रेतम् ।

## इति षोडशोऽध्यायः

---

[1] अयं A. B.
[2] वर्जित: A. B. C. D.
[3] प्रत्यक्षाविप्लवो A.
[4] इयं C.
[5] श्रीपञ्चरात्र A.; श्रीपञ्चरात्रे सारे I.
[6] वेदान्तार्थप्रकाशो E.; F. omits the title.

## सप्तदशोऽध्यायः

शक्र —

नमस्ते कमलावासे जनन्यै सर्वदेहिनाम् ।
गृहिण्यै पद्मनाभस्य नमस्ते सरसीरुहे ॥ १ ॥

उपायास्ते त्रय पूर्व कथिता अवधारिता ।
व्याचक्ष्वाम्ब चतुर्थं [1]तमुपाय परमम्बुजे ॥ २ ॥

श्री —

एको नारायणो देवो वासुदेव सनातन ।
चातुरात्म्य पर ब्रह्म सच्चिदानन्दमव्रणम् ॥ ३ ॥

एकाह परमा शक्तिस्तस्य देवी सनातनी ।
करोमि सकल कृत्य सर्वभावानुगामिनी ॥ ४ ॥

[2]शान्तानन्तचिदानन्द यद् ब्रह्म परम ध्रुवम् ।
महाविभूतिसस्थान सर्वत समता गतम् ॥ ५ ॥

तस्य शक्तिरह ब्राह्मी शान्तानन्दचिदात्मिका ।
महाविभूतिरनघा सर्वत समता गता ॥ ६ ॥

आश्वासनाय जीवाना यत्तन्मूर्तीकृत मह ।
नारायण पर ब्रह्म दिव्य नयननन्दनम् ॥ ७ ॥

तदा मूर्तिमती साह शक्तिर्नारायणी परा ।
समा समविभक्ताङ्गा सर्वावयवसुन्दरी ॥ ८ ॥

तयोर्नौ परम व्योम निर्दुःख [3]पदमुत्तमम् ।
षाड्गुण्यप्रसरो दिव्य स्वाच्छन्द्याद्देशता गत ॥

स्वकर्मनिरतै सिद्धैर्वेदवेदान्तपारगै ।
अनेकजन्मसतानैनि शेषितकषायकै ॥ १० ॥

क्लेशेन महता सिद्धैरन्तरायातिगै क्रमात् ।
सख्याविधिविधानज्ञै साख्यै सख्यानपारगै ॥

प्रत्याहृतेन्द्रियग्रामैर्धारणाध्यानशालिभि ।
योगै [4] समाहितै शश्वक्लेशेन यदवाप्यते ॥ १२ ॥

अच्छिद्रा पञ्चकालज्ञा पञ्चयज्ञविचक्षणा ।
पूर्णे वर्षशते धीरा प्राप्नुवन्ति यदञ्जसा ॥ १३॥

यत्तत्पुराणमाकाश सर्वस्मात् परम ध्रुवम् ।
यत्पद प्राप्य तत्त्वज्ञा मुच्यन्ते सर्वबन्धनै ॥१४॥

सूर्यकोटिप्रतीकाशा पूर्णद्व्युतसनिभा ।
यस्मिन् पदे विराजन्ते मुक्ता ससारबन्धनै ॥१५॥

इन्द्रियच्छिद्रविधुरा द्योतमानाश्च सर्वत ।
अनिष्यन्दा अनाहारा षाड्गुण्यतनवोऽमला [5] ॥

५. महाविभूति नित्यविभूति । "त्रिपादस्यामृत दिवि" इत्युक्तरीत्या लीलाविभूत्यपेक्षया तस्या महत्त्वात् महाविभूतित्वम् । ९. मदीयेच्छया षाड्गुण्यप्रसर एवाप्राकृतदिव्यदेशता प्राप्त इत्यर्थ । १३. अच्छिद्रा , भगवदननुभवरूपच्छिद्ररहिता । यथोक्तम्—"यन्मुहूर्तं क्षण वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्र सा भ्रान्ति सा च विक्रिया ॥" इति ।

[1] त्वम् E I
[2] शान्तानन्द A B G
[3] मुत्त I
[4] योगै A B I
[5] सहितामला A B C

एकान्तिनो महाभागा यत्र पश्यन्ति नौ सदा ।
क्षपयित्वाधिकारान् स्वान् शश्वत्कालेन भूयसा ॥

[1]वेधसो यत्र मोदन्ते शंकराः सपुरंदराः ।
सूरयो नित्यसंसिद्धाः[2] सर्वदा[3] सर्वदर्शिनः ॥१८॥

वैष्णवं परमं रूपं साक्षात्कुर्वन्ति यत्र ते ।
अष्टाक्षरैकसक्तानां द्विपट्कार्णरतात्मनाम् ॥ १९ ॥

षडक्षरप्रसक्तानां प्रणवासक्तचेतसाम् ।
जितंतासक्तचित्तानां तारिकानिरतात्मनाम् ॥२०॥

अनुताराप्रसक्तानां यत् पदं विमलात्मनाम् ।
अनन्तविहगेशानविष्वक्सेनादयोऽमलाः ॥ २१ ॥

मदाज्ञाकारिणो यत्र मोदन्ते सकलेश्वराः ।
तत्र दिव्यवपुः श्रीमान् देवदेवो जनार्दनः ॥२२॥

अनन्तभोगपर्यङ्के निषण्णः [4]सुसुखोज्ज्वले ।
विज्ञानैश्वर्यवीर्याद्यैः शक्तितेजोबलोल्वणैः ॥ २३ ॥

आयुधैर्भूषणैर्दिव्यैरद्भुतैः समलंकृतः ।
पञ्चात्मना सुपर्णेन पक्षिराजेन सेवितः ॥ २४ ॥

सारूप्यमेयुषा[5] साक्षाच्छ्रीवत्सकृतलक्ष्मणा ।
सेनान्या सेवितः सम्यग्विष्वक्सेनेन दीप्यता[6] ॥

क्षेमाय सर्वलोकानामाप्यानाय मनीषिणाम् ।
मुक्तयेऽखिलबन्धानां रूपदानाय योगिनाम् ॥२६॥

आस्ते नारायणः श्रीमान् वासुदेवः सनातनः ।
सुकुमारो युवा देवः श्रीवत्सकृतलक्षणः ॥ २७ ॥

चतुर्भुजो विशालाक्षः किरीटी कौस्तुभं वहन् ।
हारनूपुरकेयूरकाञ्चीपीताम्बरोज्ज्वलः ॥ २८ ॥

वनमालां दधद्दिव्यां पञ्चशक्तिमयीं पराम् ।
सर्वावयवसंपन्नः[7] सर्वावयवसुन्दरः ॥ २९ ॥

[8]राजराजोऽखिलस्यास्य विश्वस्य परमेश्वरः ।
कान्तस्य तस्य देवस्य विष्णोः सद्गुणशालिनः ॥

दयिताहं सदा देवी ज्ञानानन्दमयी परा ।
अनवद्यानवद्याङ्गी नित्यं तद्धर्मधर्मिणी ॥ ३१ ॥

ईश्वरी सर्वभूतानां पद्माक्षी पद्ममालिनी ।
शक्तिभिः सेविता नित्यं सृष्टिस्थित्यादिभिः परा ॥

अभिगमनोपादानेज्यास्वाध्याययोगाख्याः पञ्च कालाः । १७. क्षपयित्वेति । अत्र "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति शारीरकसूत्रं तदुपबृंहणानि वचनानि चानुसंधेयानि । १९. अष्टाक्षरः नारायणाष्टाक्षरमन्त्रः । द्विपट्कार्णः वासुदेवद्वादशाक्षरमन्त्रः । २०. षडक्षरः श्रीविष्णुषडक्षरमन्त्रः । जितंता "जितंते पुण्डरीकाक्ष" इत्यादिश्लोकरूपमन्त्रः । अस्य महिमादिकमहिर्बुध्न्यसंहितायामुक्तं वेदितव्यम् । तारिका ह्रीमन्त्रः । २१. अनुतारा श्रीमन्त्रः । २४. पञ्चात्मना पञ्चोपनिषन्मन्त्रस्वरूपेण । २५. सारूप्यं शङ्खचक्रादिना भगवत्सारूप्यम् । तदेवाह—श्रीवत्सेति । इदं च विशेषणद्वयं सेनान्येत्यनेनान्वेति । २९. सृष्टिस्थितिसंहारनिग्रहानुग्रहाः पञ्च शक्तयः । ३२. ईश्वरीति । ईष्टे इत्यर्थे कर्तरि औणादिको वरट् प्रत्ययः ।

[1] वसवो A. B. F. [2] संरन्धाः D. [3] सर्वेशाः A. B. C. F.
[4] समुखो B. [5] ईयुषा A. C. D. F. [6] दीव्यता E. F.
[7] संपूर्णः E. [8] रामो राजा B. G.

द्वात्रिंशता सहस्रेण सृष्टिशक्तिभिरावृता ।
[1]धृता तद्द्विगुणाभिश्च दिव्याभि स्थितिशक्तिभि ॥

ततश्च द्विगुणाभिश्च पूर्णा सङ्गतिशक्तिभि ।
नायिका सर्वशक्तीना सर्वलोकमहेश्वरी ॥ ३४ ॥

महिषी देवदेवस्य सर्वकामदुघा विभो ।
तुल्या गुणवयोरूपैर्मन प्रमथनी[2] हरे ॥ ३५ ॥

तैस्तैरनुगुणैर्भावैरह देवस्य शार्ङ्गिण
करोमि सकल कृत्य नित्य तद्धर्मधर्मिणी ॥ ३६ ॥

साहमङ्के स्थिता[3] विष्णोर्देवदेवस्य शार्ङ्गिण ।
लालिता तेन चात्यन्त सामरस्यमुपेयुषी ॥ ३७ ॥

कदाचिन् सर्वदर्शिन्या कृपा मे स्वयमुद्गता ।
क्लिश्यत प्राणिनो दृष्ट्वा ससारज्वलनोदरे ॥ ३८ ॥

कथ न्विमे[4] भविष्यन्ति [5]दुःखोत्तीर्णा सुखोत्तरा ।
[6]ससारपरसीमानमाप्नुयुर्मा कथ न्विति[7] ॥ ३९ ॥

साहमन्त कृपाविष्टा[8] दवदेवमचूचुदम् ।
भगवन् देवदेवेश लोकनाथ मम प्रिय ॥ ४० ॥

सर्वदे सर्वमध्यान्त सर्व सर्वोत्तराच्युत ।
गोविन्द पुण्डरीकाक्ष पुराण पुरुषोत्तम[9] ॥ ४१ ॥

दुस्तरापारससारसागरोत्तारकारण ।
व्यक्ताव्यक्तज्ञकालाख्यक्लृप्तभावचतुष्टय ॥ ४२ ॥

वासुदेव जगन्नाथ सकर्षण जगत्प्रभो ।
प्रद्युम्न [10]सुभग श्रीमन्ननिरुद्धापराजित ॥ ४३ ॥

नानाविभवसस्थान नानाविभवभाजन[11] ।
दिव्यशान्तोदितानन्दषाड्गुण्योदयविग्रह ॥ ४४ ॥

स्फुरत्किरीटकेयूरहारनूपुरकौस्तुभ ।
पीताम्बर महोदार पुण्डरीकनिभेक्षण ॥ ४५ ॥

चतुर्मूर्ते चतुर्व्यूह शरदिन्दीवरद्युते ।
अभिरामशरीरेश नारायण जगन्मय ॥ ४६ ॥

अमी हि प्राणिन सर्वे निमग्ना क्लेशसागरे ।
उत्तार प्राणिनामस्मात्कथ चिन्तयसि प्रभो ॥४७॥

इत्युक्तो देवदेवेश स्मयमानोऽब्रवीदिदम् ।
अरविन्दासने देवि पद्मगर्भ सरोरुहे ॥ ४८ ॥

उत्तारहेतवोऽमीषामुपाया विहिता मया ।
कर्म साख्य तथा योग इति शास्त्रव्यपाश्रया ॥४९॥

प्रत्यवोचमह देवमित्युक्ता पुरुषोत्तमम् ।
देवदेव न ते शक्या कर्तुं कालेन गच्छता ॥५०॥

कालो हि कल्पयन्नेव[12] स्वतन्त्रो भवदात्मक ।
ज्ञान सत्त्व बल चैषामायुश्च विनिकृन्तति[13] ॥५१॥

अन्तःकरणसस्था हि वासना विविधात्मिका ।
तत्तत्कालवश प्राप्य यातयन्ति शरीरिण[14] ॥५२॥

उदासीनो भवानेव प्राणिना कर्म कुर्वताम् ।
[15]तत्तत्कालानुकूलानि तत्फलानि प्रयच्छति ॥५३॥

येन त्व वत सरब्ध प्राणिन पालयिष्यसि ।
प्रब्रूहि तमुपाय मे प्रणतायै जनार्दन ॥ ५४ ॥

इत्युक्त प्रत्युवाचेद भगवानुत्स्मयन्निव ।
सरोरुहे विजानीषे सर्वमेवात्मनो गतम् ॥ ५५ ॥

[1] B omits this line
[2] प्रमथने A B F
[3] अङ्कस्थिता A C D F G
[4] त्विमे A B C F
[5] दु खात् E
[6] B omits 4 lines from here
[7] त्विति A
[8] शुभ्रा E I
[9] पुरुषेश्वर E I
[10] सर्वग E I
[11] भावन A B F G
[12] एव D
[13] परिकृन्तति B, आयुश्चापि निकृन्तति E
[14] शरीरिणाम् B
[15] तत्तद्या E.

मा तु जिज्ञाससे देवि तथापि शृणु भामिनि ।
[1]उपायाश्चाप्यपायाश्च शास्त्रीया निर्मिता मया॥५६॥

विहिता य उपायास्ते निषिद्धाश्चेतरे मता ।
अधो नयन्त्यपायास्त य [2]एनाननुवर्तते ॥ ५७ ॥

ऊर्ध्वं नयन्त्युपायास्त य [3]एनाननुवर्तते ।
उपायापायसत्यागी[4] मध्यमा वृत्तिमाश्रित ॥५८॥

मामेक शरण प्राप्य मामेवान्ते समश्नुते ।
षडङ्ग तमुपाय च शृणु मे पद्मसभवे ॥ ५९ ॥

आनुकूल्यस्य सकल्प प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरण तथा ॥ ६० ॥

आत्मनिक्षेपकार्पण्ये षड्विधा शरणागति ।
एव मा शरण प्राप्य वीतशोकभयक्लम ॥ ६१ ॥

निरारम्भो निराशीश्च[5] निर्ममो निरहङ्कृति ।
मामेव शरण प्राप्य तरेत् ससारसागरम् ॥ ६२ ॥

[6]सत्कर्मनिरता शुद्धा साङ्ख्ययोगविदस्तथा[7] ।
नार्हन्ति शरणस्थस्य कला कोटितमीमपि ॥ ६३ ॥

इति तस्य वच श्रुत्वा देवदेवस्य शार्ङ्गिण ।
प्रीताहमभव शक्र तदिद वर्णित तव ॥ ६४ ॥

शक्र —

[8]देवप्रिये महादेवि नमस्ते पङ्कजासने ।
आनुकूल्यादिकं भाव मम व्याचक्ष्व विस्तरात् ॥

श्री —

आनुकूल्यमिति प्रोक्त सर्वभूतानुकूलता ।
अन्त स्थिताह सर्वेषा भावानामिति निश्चयात् ॥

मयीव सर्वभूतेषु ह्यानुकूल्य समाचरेत् ।
तथैव प्रातिकूल्य च भूतेषु परिवर्जयेत् ॥ ६७ ॥

त्यागो गर्वस्य कार्पण्य श्रुतशीलादिज मन ।
अङ्गसामर्थ्यसपत्तेरशक्तेरपि कर्मणाम् ॥ ६८ ॥

अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् ।
उपाया नैव सिध्यन्ति ह्यपाया बहुलास्तथा ॥६९॥

इति या गर्वहानिस्तद्दैन्य कार्पण्यमुच्यते ।
शक्ते सूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ॥७०॥

५६. उपाया पुण्यसपादका ज्योतिष्टोमादय । अपाया पापसपादका परहिंसादय । ५८. सत्यागीति । पुण्यपापसपादकानि काम्यनिषिद्धानि परित्यज्य नित्यनैमित्तिकक्रियापर इत्यर्थ । ५९. मामेकम्, मामेवेत्यर्थ । एकशब्दोऽवधारणार्थ सन् अन्ययोगव्यवच्छेदे वर्तते। अत्रेद बोध्यम्—शरणवरणात् पूर्वं मध्यमवृत्त्याश्रयण भवतु वा, मा वा। अस्ति चेत्, शरणवरणे त्वरामुपजनयति । न चेत्, विलम्ब । शरणवरणानन्तर तु यावज्जीव मध्यमवृत्त्याश्रयणमवश्य कर्तव्यम् । न चेत् विलम्बेन फल स्यात् । पूर्वकृतानि तु कर्माणि न्यासबलादेव नश्यन्ति । पश्चात् कृतानि तु प्रामादिकानि न श्लिष्यन्ति । बुद्धिपूर्वकृतान्यपि प्रायश्चित्तापनोद्यानि भवन्ति । अत चान्द्रायणादिप्रायश्चित्तपरिहरणाय मध्यमवृत्त्याश्रयणमावश्यक निर्णीयत इति। ६३. सत्कर्मनिरता , कर्मयोगनिष्ठा । साङ्ख्यविद , ज्ञानयोगिन । योगविद , भक्तियोगिन । ६६. आनुकूल्यसकल्पो न केवलमावयोर्विषये । किंतु अस्मच्छेषभूतेषु सर्वेष्वपि भूतेष्वि-

[1] अपायाश्चाप्युपायाश्च E [2] एतान् A. B F [3] एतान् A C.
[4] ष्ट्स्यागान् D [5] निराशी च A D E. [6] सत्कर्म C. यत्कर्म G
[7] विदश्च ये E. [8] देवदेवप्रिये देवि E

ईशेशितव्यसबन्धादनिदम्प्रथमादपि ।
रक्षिष्यत्यनुकूलान इति या सुदृढा मति ॥७१॥

स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशन ।
करुणावानपि व्यक्त शक्त स्वाम्यपि देहिनाम् ॥

अप्रार्थितो न गोपायेदिति तत्प्रार्थनामति ।
गोपायिता भवेत्येव गोप्तृत्ववरण स्मृतम् ॥७३॥

तेन सरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ।
केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥७४॥

निक्षेपापरपर्यायो न्यास पञ्चाङ्गसयुत ।
सन्यासस्त्याग इत्युक्त शरणागतिरित्यपि ॥७५॥

उपायोऽय चतुर्थस्ते प्रोक्त शीघ्रफलप्रद ।
अस्मिन् हि वर्तमानाना विधौ विघ्ननिषेविते ॥

पूर्व त्रय उपायास्ते भवेयुरमनोहरा ।
आनुकूल्येतराभ्या च विनिवृत्तिरपायत ॥७७॥

कार्पण्येनाप्युपायाना विनिवृत्तिरिहोदिता[1] ।
रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम्[2] ॥

गोप्तृत्ववरण नाम स्वाभिप्रायनिवेदनम् ।
सर्वज्ञोऽपि हि विश्वेश सदा कारुणिकोऽपि सन् ॥

ससारतन्त्रवाहित्वाद्रक्षापेक्षा प्रतीक्षते ।
आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ॥८०॥

हिंसास्तेयादय शास्त्रैरपायत्वेन दर्शिता ।
कर्मसाख्यादय शास्त्रैरुपायत्वेन दर्शिता ॥८१॥

अपायोपायसत्यागी [3]मध्यमा स्थितिमास्थित ।
रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचर ॥८२॥

बुध्येत देवदेवेश[4] गोप्तार पुरुषोत्तमम् ।

शक्र —

उपायापाययोर्मध्ये कीदृशी स्थितिरम्बिके ॥८३॥

अपायोपायतामेव क्रिया सर्वावलम्बते ।
स्वीकारे[5] व्यतिरेके[6] च निषेधविधिशास्त्रयो ॥

दृश्यते कर्मणो व्यक्तमपायोपायरूपता ।

श्री —

त्रिविधा पश्य देवेश कर्मणो गहना गतिम् ॥८५॥

निषेधविधिशास्त्रेभ्यस्ता विधा च निबोध मे ।
अनर्थसाधन किंचित्किंचिच्चाप्यर्थसाधनम् ॥८६॥

अनर्थपरिहार[7] च [8]किंचित् कर्मोपदिश्यते ।
त्रैराश्य कर्मणामेव विज्ञेय शास्त्रचक्षुषा ॥८७॥

त्याह—सर्वेति । ७९. शरण्यस्य सर्वज्ञत्वात् करुणाकरत्वाच्च स्वयमेवार्तान् रक्षिष्यतीत्याशङ्क्याह— सर्वज्ञोऽपीति । ससारतन्त्रवाहित्व नाम लीलाविभूतिनिर्वर्तणम् । व्याजानपेक्षरक्षणे सुहृद्दुष्कृत्साधारण्येन सर्वरक्षणप्रसक्तौ धर्माधर्मकृत्याकृत्यन्यायान्यायसकरप्रसङ्ग । स्वेच्छया काश्चिदेव रक्षन् अन्यान् न रक्षति चेत् "समोऽह सर्वभूतेषु" इत्युक्तोपपयतस्तस्य वैषम्यनैर्घृण्य प्रसङ्ग इति भाव । ८८. निषिद्धस्वीकारे विहितास्वीकारे चापाय । विहितस्वीकारे निषिद्धास्वीकारे चोपाय । ८६. हिंसादि अनर्थसाधनम् । ज्योतिष्टोमादि स्वर्गाद्यर्थसाध-

[1] इहेरिता E I
[2] रक्षणोपायकल्पनम् A G
[3] माध्यमा A C F G
[4] देवदेव ते E I
[5] स्वीकार E
[6] व्यतिरेक E
[7] परिहाराय E I
[8] किंचित्कर्मोऽपि E

अपायोपायसङ्गौ तु पूर्वराशी परित्यजेत् ।
[1]तृतीयो द्विविधो राशिरनर्थपरिहारक ॥ ८८ ॥

प्रायश्चित्तात्मक कश्चिदुत्पन्नानर्थनाशन ।
तमश्च नैव कुर्वीत मनीषी पूर्वराशिवत् ॥ ८९ ॥

क्रियमाण न कस्मैचिद्यदर्थाय प्रकल्पते ।
अक्रियावदनर्थाय [2]तत्तु कर्म समाचरेत् ॥ ९० ॥

एषा [3]सा वैदिकी निष्ठा ह्युपायापायमध्यमा ।
अस्या स्थितो जगन्नाथ प्रपद्येत जनार्दनम् ॥

सकृदेव हि शास्त्रार्थ कृतोऽय तारयेन्नरम् ।
उपायापायसयोगे निष्ठया हीयतेऽनया ॥ ९२ ॥

अपायसप्लवे सद्य प्रायश्चित्त समाचरेत् ।
प्रायश्चित्तिरिय सात्र यत्पुन शरण श्रयेत्[4] ॥

उपायानामुपायत्वस्वीकारेऽप्येतदेव हि ।
अनिष्टवाय धर्माणा पालनाय कुलस्य च ॥ ९४ ॥

सग्रहाय च लोकस्य मर्यादास्थापनाय च ।
प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिण ॥९५॥

मनीषी वैदिकाचार मनसापि न लङ्घयेत् ।
यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम् ॥

लोकोपयोगिनीं रम्या बहुसस्यविवर्धिनीम् ।
लङ्घयञ्शूलमारोहेदनपेक्षोऽपि ता प्रति ॥ ९७ ॥

नम् । प्रायश्चित्तादि अनर्थपरिहारकम् । ८८. अनर्थपरिहारक तृतीय द्विविधम्—चान्द्रायणादि प्रायश्चित्तम् उत्पन्नानर्थनाशकम् । नित्यनैमित्तिकादि भाव्यनर्थपरिहारकमिति । ८९. तृतीये प्रथमा विधामाह—प्रायश्चित्तेति । ९०. तृतीये द्वितीया विधामाह—क्रियमाणेत्यादि । नित्यनैमित्तिकरूपमित्यर्थ । ९२. "सकृत्कृत शास्त्रार्थ" इति न्यायानुसारेणाह—सकृदेव हीति । अनयेति । प्रपत्तिरूपयेत्यर्थ । ९३. अपायसप्लव इति । बुद्धिपूर्वापराधसमय इत्यर्थ । ९४. ज्योतिष्टोमादीना मोक्षोपायत्वस्वीकारेऽपि निष्ठाप्रच्युतिर्भवत्येव । तस्मात् तानि न कुर्वीत । अयमत्र निर्गलितार्थ —भक्तियोगनिष्ठाना तद्योगमहिम्नैव प्रपत्तियोगनिष्ठानामपि प्रपत्तिमहिम्नैव पूर्वतनानि सर्वाण्यपि बुद्धिपूर्वकाण्यबुद्धिपूर्वकाणि च मोक्षविरोधिकर्माणि समूलनाश नश्यन्ति । प्रपन्नाना प्रायश प्रपत्तेरनन्तर तादृशानि कर्माणि न सभवन्त्येव । कदाचिज्ज्ञातान्यप्यबुद्धिपूर्वकाणि अश्लिष्टानि भवन्ति । बुद्धिपूर्वकाणि तु पुन प्रपदनेन नश्यन्ति । असकृत्पुनःप्रपदनाना तु स्वल्पदण्डेन तद्भोगादिनाश । प्रारब्धकर्माण्यपि प्रपन्नस्यार्तितारतम्येन सद्यो वा तद्देहावसाने वा नश्यन्ति । भक्तियोगात् न्यासयोगस्याय महिमातिशय —भक्तियोग प्रारब्धकर्माणि नापोहयितुमलम् । न्यासयोगस्तु प्रारब्धकर्माण्यप्यपोहयितुमलम् । यथार्थनिश्चयात् प्रपत्तिकाले सद्यस्तन्नाशोऽपि प्रार्थित, तदा सद्य एव तानि नश्यन्ति । यदि तद्देहावसाने प्रार्थित, तदा तद्देहावसान एव नश्यन्ति । न तु भक्तियोगनिष्ठानामिव तद्भोगार्थदेहान्तरापादकानि । तथा चाहु—"साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इति । किंच वैदिकानि काम्यकर्माणि निष्कामतया भक्तियोगवत्प्रपन्नस्यानुष्ठातुमप्यनु-

[1] In F the chapter ends with this verse
[2] कर्म तत्तु E. I
[3] हि A B C G
[4] प्रपद्येत् B C G

एव विलङ्घयन् मर्त्यो मर्यादा वेदनिर्मिताम् ।
प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात् ॥

उपायत्वग्रह तत्र [1]वर्जयन् मनसा सुधी ।
चतुर्थमाश्रयन्नेवमुपाय शरणाश्रयम् ॥ ९९ ॥

अतीत्य सकल क्लेश सविशत्यमल पदम् ।
अपायोपायनिर्मुक्ता मध्यमा [2]स्थितिमास्थिता ॥

शरणागतिरप्यैषा ससारार्णवतारिणी ।
इद शरणमज्ञानामिदमेव विजानताम् ॥ १०१ ॥

इद तितीर्षता पारमिदमानन्त्यमिच्छताम् ।
[3]प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे ॥ १०२ ॥

मामेका देवदेवस्य महिषीं शरण [4]श्रयेत् ।
[5]उपायाद्विरत शश्वन्मा चैव[6] शरण व्रजेत् ॥

तनूकृत्याखिल पाप मा चाप्नोति नर शनै ।
अथोपायप्रसक्तश्च भुक्त्वा भोगाननामयान्[7] ॥

अन्ते विरक्तिमासाद्य विशते परम पदम् ।
उपाय सुकर सोऽय दुष्करश्च मतो मम ॥

शिष्टैर्निषेव्यते सोऽयमकामहतचेतनै ।
अकामैश्च सकामैश्च तस्मात्सिद्ध्यर्थमात्मन ॥

अर्चनीया नरै शश्वन्मम मन्त्रमयी तनु ।
प्रविश्य विधिवद्दीक्षा गुरोर्लब्ध्वार्थसपद [8] ।
मन्मयैरर्चयेन्मन्त्रैर्मामिका मान्त्रिकीं[9] तनुम् ॥

इति [10]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे रहस्योपायप्रकाशो[11] नाम
सप्तदशोऽध्याय

ज्ञायन्ते । प्रपन्नाना तु निष्कामनयापि तेषामनुष्ठान स्वरूपविरुद्धमिति । ९८. अथ भाव — नित्यनैमित्तिककर्माणि न सर्वथा फलरहितानि । किंतु प्रत्यवायोत्पत्तिनिरोधफलानि । आनुषङ्गिकमपि हि प्राजापत्यादिलोकप्राप्तिरूपफल स्मर्यते । तत्र विनियोगपृथक्त्वात् प्रत्यवायोत्पत्तिनिरोधफलकानि तान्याद्रियन्ते । प्रत्यवायश्च भगवन्निग्रह एव । एवच भगवन्निग्रहोत्पत्तिनिरोधाय तानि क्रियन्त इति न सर्वात्मना निरर्थकानीति । अत "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति चोद्यस्य नावकाश । १०५. ननु चिरकालसाध्यस्य भक्तियोगस्य क्षणकालसाध्यस्य न्यासयोगस्य च मोक्षाख्यतुल्यफलत्व न घटते, गुरुलघूपाययोर्विकल्पायोगात् । तथा सति प्रेक्षावन्त सर्वेऽपि लघूपाय एव प्रवर्तेरन्, न गुरूपाय इति तद्विधेरननुष्ठानलक्षणमप्रामाण्य स्यादित्यत्राह—उपाय सुकर इति । यद्यप्यय न्यासयोग क्षणकालकर्तव्यत्वात् कर्माद्यनङ्गत्वाच्च सुकर एव, तथाप्यत्यन्तदुर्लभमहाविश्वासाद्यङ्गापेक्षत्वात् दुरूहमध्यमवृत्त्याश्रयत्वाच्च दुष्कर एवेति भाव । अत्र यद्यपि ज्ञानशक्त्यादिपौष्कल्यतद्राहित्याभ्यामधिकारिभेदात् व्यवस्था सुवचा, तथापि 'इदमेव विजानताम्' इत्यादिना ज्ञानादिमतामपि न्यासयोगविधानात् सा रीतिर्निर्दिष्टा ।

## इति सप्तदशोऽध्यायः

---

[1] वर्जयेत् A B C G
[2] वृत्तिम् E
[3] प्रायश्चित्ति E
[4] व्रजेत् B E G
[5] अपायात् B E
[6] चापि A C
[7] अमानवान् A B C
[8] संपदम् E I
[9] मम मन्त्रमयीं E I
[10] A omits श्रीपाञ्चरात्रसारे
[11] प्रसङ्गो A B G

# अष्टादशोऽध्यायः

शक्रः—

[1]नमस्ते पद्मनिलये नमस्ते पद्मसंभवे ।
विदितं वेदितव्यं मे वेदान्तेष्वपि दुर्लभम् ॥

ब्रूहि मन्त्रमयं मार्गमिदानीं विष्णुवल्लभे ।
यं विज्ञायार्चयेयं ते दिव्यां मन्त्रमयीं तनुम् ॥ २ ॥

कुतो मन्त्रसमुत्पत्तिः क्व च मन्त्रः [2]प्रलीयते ।
मन्त्रस्य किं फलं पद्मे केन मध्ये प्रपूर्यते ॥ ३ ॥

कियत्यश्च [3]विधा अस्य परिमाणं कियत् किल ।
क्षेत्रक्षेत्रज्ञभावश्च कीदृशः परमोऽम्बुजे ॥ ४ ॥

मन्त्रश्च केन संग्राह्य उपदेष्टा च कीदृशः ।
उपासनप्रकारश्च कथमस्याब्जसंभवे ॥ ५ ॥

उपासनोपयोगी च यावानर्थोऽम्बुजासने ।
सिद्धिसाधनयोगश्च प्रत्ययाश्च तथा तथा ॥ ६ ॥

योगः स्वाध्याययोगश्च रक्षायोगस्तथैव च ।
[4]प्रायश्चित्तविधिश्चैव [5]श्राद्धकल्पस्तथैव च ॥ ७ ॥

दीक्षाप्रतिष्ठयोः कल्पो यन्त्रकल्पस्तथैव च ।
एतच्च निखिलं यच्चाप्यदृष्टमुपयुज्यते[6] ॥ ८ ॥

प्रब्रूहि तदशेषेण नमस्ते पद्मसंभवे ।
तवैव शिरसा पादौ नतोऽस्मि कमलारुणौ ॥ ९ ॥

शरणं च प्रपन्नोऽस्मि पङ्कजे त्वमधीहि भो ।

श्रीः[7]—

प्रश्नभारोऽयमतुलस्त्वयोद्दिष्टः पुरंदर ॥ १० ॥

वाच्यस्ते प्रीतिसंयोगाच्छृणु वक्ष्याम्यशेषतः ।
अहमित्येव यः [8]पूर्णः पुरुषः पुष्करेक्षणः ॥ ११ ॥

स्वभावः सर्वभावानामभावानां च वासव ।
इदंतयावलीढं यत् सदसज्जगति स्थितम् ॥ १२ ॥

तत्तल्लक्षणवन्तो ये तदहंत्वे विलीयते ।
विलीनेदंपदद्वीपः प्रातिकथ्यश्चिदम्बुधिः ॥ १३ ॥

निस्तरङ्गोदयोऽनन्तो वासुदेवः प्रकाशते ।
पूर्णाहंतास्मि तस्यैका शक्तिरीश्वरतामयी ॥ १४ ॥

नित्योदिता सदानन्दा सर्वतः समतां गता ।
सर्वभावस्वमुद्भूतिः सर्वप्रत्यक्षसंमता ॥ १५ ॥

या ह्येषा प्रतिभा तत्तत्पदार्थक्रमरूपिता[9] ।
उद्भूतेषु पदार्थेषु साहमक्रमशालिनी ॥ १६ ॥

१२. इदंतयेति । इदमिति प्रतीतिविषयतयेत्यर्थः । पराक्त्वेनेति यावत् । युष्मदस्मत्प्रत्ययगोचरत्वं हि क्रमेण पराक्त्वप्रत्यक्त्वयोर्लक्षणमामनन्ति । १३. विलीनेत्यादि ; इदंपदार्थभूताः सर्वेऽपि अचित्पदार्थाः ; त एव द्वीपाः चिदम्बुधौ वासुदेवे विलीय तेन महैकत्वं प्राप्ता इत्यर्थः । १५. नित्योदितेति । उदयो द्विविधः—शान्तोदयः नित्योदयश्चेति । अस्तारास्त्यस्याभावः ।

[1] F. omits this verse.
[2] निलीयते B
[3] विधाप्यस्य B. G I.
[4] प्रायश्चित्ति A. F. G.
[5] श्राद्धकल्पः A.
[6] उपयुज्यते B.
[7] श्रीरुवाच I.
[8] पूर्णं B G I.
[9] रूपिणी G.

अवबोधात्मिकाया मे या प्रत्यगवमर्शिता[1] ।
सा स्फुरत्ता महानन्दा शब्दब्रह्मेति गीयते ॥ १७॥

प्रकाशानन्दसाराहं सर्वमन्त्रप्रसू परा ।
शब्दाना जननी शक्तिरुदयास्तमयोज्झिता ॥ १८॥

व्यापक यत्पर ब्रह्म नारायणमनामयम् ।
शान्तता नाम यावस्था साह शान्ताखिलप्रसू ॥

तस्या मे य उदेति स्म सिसृक्षाख्योऽल्प[2] उद्यम ।
स शब्दार्थविभेदेन शान्त उन्मेष उच्यते ॥ २०॥

शब्दोदयपुरस्कार सर्वत्रार्थोदय स्मृत ।
अर्थशब्दप्रवृत्त्यात्मा शब्दस्य स्थूलता हि सा ॥

बोधोन्मेष स्मृत शब्द शब्दोन्मेषोऽर्थ उच्यते ।
उच्चच्छब्दोदय शक्ते प्रथम शान्ततात्मन ॥२२॥

स नाद इति विख्यातो वाच्यतामसृणस्तदा ।
नादेन सह शक्ति सा सूक्ष्मेति परिगीयते ॥२३॥

नादात् परो य उन्मेषो द्वितीय शक्तिसभव ।
विन्दुरित्युच्यते सोऽत्र वाच्योऽपि मसृण स्थित ॥

पश्यन्ती नाम सावस्था मम दिव्या महोदया ।
तत परो य उन्मेषस्तृतीय शक्तिसभव ॥ २५॥

मध्यमा सा दशा तत्र सस्कारयति सगतिम् ।
वाच्यवाचकभेदस्तु तदा सस्कारतामय ॥ २६ ॥

चतुर्थस्तु य उन्मेष शक्तेर्माध्यमिकात् पर ।
वैखरी नाम सावस्था वर्णवाच्यस्फुटोदया ॥२७॥

अस्ति शक्ति क्रियात्मा मे बोधरूपानुयायिनी[3] ।
सा प्राणयति नादादिं शक्त्युन्मेषपरपराम् ॥२८॥

शान्तरूपाथ पश्यन्ती मध्यमा वैखरी तथा ।
चतूरूपा चतूरूप वच्मि वाच्य स्वनिर्मितम् ॥२९॥

वासुदेवादय सूक्ष्मा वाच्या शान्तादय क्रमात् ।
अहमेकपदी ज्ञेया प्रकाशानन्दरूपिणी ॥ ३० ॥

वाच्यवाचकभेदेन[4] पुन सा द्विपदी स्मृता ।
[5]ऊष्मान्त स्थस्वरस्पर्शभेदाच्चाह चतुष्पदी ॥ ३१ ॥

अष्टवर्गविभेदाच्च साहमष्टपदी स्मृता ।
अघोषरूपेणान्येन युक्ता नवपदी स्मृता ॥ ३२ ॥

अहमेकपदी दिव्या शब्दब्रह्ममयी परा ।
घोषवर्णस्वरूपेण वर्तेऽह द्विपदी पुन ॥ ३३ ॥

तक्षती सलिल सर्व द्रव्यजातिगुणक्रिया ।
चतुर्धाभिदधानाह चतुष्पद्युदिता बुधै ॥ ३४ ॥

परावस्थाया द्वितीय । १७. प्रत्यगवमर्शिता, अहप्रत्ययगम्यता । २१. शब्दस्योदय प्रथमम्, अनन्तरमर्थस्येति तान्त्रिकसिद्धान्त । श्रुतावपि "नामरूपे व्याकरवाणि" इति नामव्याकरण पूर्वं, ततो रूपव्याकरणमुक्त वेदितव्यम् । २३. एव च शब्दब्रह्म, परा वाक्, नाद इति पर्याया २४. नादानन्तर य शक्त्युन्मेष स विन्दुरिति पश्यन्तीति चोच्यते । २५. विन्दोरनन्तर शक्त्युन्मेषस्य मध्यमेति नाम । ३१. शषसहा उष्माण । यरलवा अन्त स्था । अच स्वरा । कादयो मावसाना स्पर्शा । ३२. अष्ट वर्गा — स्वरवर्ग, कादिपान्तवर्गा पञ्च, उष्मवर्ग, अन्त स्थवर्गश्चेति । अघोषाश्च—यमा, जिह्वामूलीयोपध्मानीयौ विसर्गश्चेति । ३३. प्रकारान्तरेणैकपद्यादिरुच्यते । शब्दब्रह्मरूपेणै-करूपा । ध्वनिवर्णात्मना द्विरूपा । ३४. तक्षती, तक्षन्ती तनूकुर्वती । सर्वं सलिल ससरणहेतु प्राक्तनतुष्टिम् । सलिलाख्यतुष्टिविशेष साख्यसमयप्रसिद्ध । अत्र "गौरीर्मिमाय

[1] अवमर्शिनी C.
[2] अयम् B
[3] अनपायिनी F
[4] भावेन B
[5] B and F omit nine lines from here

नामभावद्वयोपेता साहमष्टपदी स्मृता ।
अविकल्पविकल्पस्था साह नवपदी स्मृता ॥३५॥

व्योम्न्यह परमे दिव्या ह्यनन्ताक्षरमालिनी ।
इयद्वितितिविस्तीर्णा पूर्णाहताहमादिमा ॥ ३६ ॥

मन्त्राणा जननी ज्ञेया भुक्तिमुक्तिप्रदायिनी ।
उद्यन्ति मन्त्रकल्लोला मत्त एव चिदम्बुधे ॥ ३७ ॥

[1]मामाश्रित्य विवर्तन्ते यान्ति चास्त मुहुर्मयि ।
सविदानन्दसदोहसुन्दरा शब्ददेहका ॥ ३८ ॥

सामर्थ्यपूर्णा फलदा मन्त्रात्मानो हि मन्मया ।
वर्णा पदानि वाक्यानि सहप्रकरणाह्निकै ॥ ३९ ॥

अध्यायाश्च परिच्छेदा सर्गा उल्लासकास्तथा ।
पटलाद्या [2]अवच्छेदा [3]प्रश्नवाकानुवाकका ॥

मण्डलानि च काण्डानि संहिता विविधात्मिका ।
ऋचो यजूषि सामानि सूक्तानि च खिलै समम् ॥

शास्त्रतन्त्रात्मका शब्दा बाह्याबाह्यागमास्तथा ।
भाषाश्च विविधास्तास्ता व्यक्ताव्यक्तगिर स्मृता ॥

मन्त्ररूपमिद शक्र विद्धि मद्रूपवेदिनाम् ।
भावनातारतम्येन मन्त्रमन्त्रिव्यवस्थिति ॥ ४३ ॥

मा त्रायतेऽयमित्येव योगेन स्वीकृतो ध्वनि ।
गुप्ताशय सदा यश्च मन्त्रज्ञ त्रायते भयात् ॥

स मन्त्र सस्मृतोऽहतात्मिकास शब्दजै क्रमै ।
पूर्णाहतासमुद्भूतै शुद्धबोधान्वयो यत ॥ ४५ ॥

सर्वे मन्त्रा मदीया स्यु प्रभवाप्ययवेदिनाम् ।
मदीयाश्चान्यदीयाश्च भावनातारतम्यत ॥ ४६ ॥

प्रकृत्यन्वयिनो मन्त्रा मदीया स्यु प्रधानत ।
भवद्भावात्मक ब्रह्म स्वारस्येन विशन्ति ये ॥४७॥

प्रकृत्यन्वयिनो मन्त्रास्तारिकोत्तारिकादय ।
मन्त्रा स्वरसतो यान्ति ये भाव भवदुत्तरम् ॥

तेऽपवर्गप्रदा ज्ञेयास्तारप्रासादकादय ।
भावोत्तरा समा वापि ये भजन्ति भवत्स्थितिम् ॥

भोगापवर्गदा मन्त्रा ज्ञेयास्ते तारिकादय ।
विशन्ति भावमेवैके यान्त्येके भवदेव च ॥५०॥

भुक्तिदा मुक्तिदाश्चैव द्वितये ते व्यवस्थया ।
प्रकृत्यन्वयिनामेव स्वभाव परिकीर्तित ।
अभिसधिवलात् सर्वं द्वितये ते वितन्वते ॥५१॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [5]मन्त्रस्वरूपकथन नाम
अष्टादशोऽध्याय

सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥" (ऋ १-१६४-४१) इति श्रुतिरनुक्रियते । चतुष्पदी, द्रव्यजातिगुणक्रियाशब्दात्मना चतूरूपा । ३५. तेषामेव शब्दार्थात्मना प्रत्येक द्वैविध्ये सकलव्यष्टिरूपा । ३६. एषा च व्यवस्था प्राकृतलोक एव । अप्राकृतलोके तु अनन्ताक्षररूपा । ३८. विवर्तन्ते, परिणमन्ति । नात्रान्यपरिभाषितो विवर्तो विवक्षित, 'त्रैगुण्य परिणामि तत्' इत्युक्तत्वेन त्रिगुणपरिणामत्वात् शब्दस्य ।

इत्यष्टादशोऽध्यायः

---

[1] मामेवाश्रित्य वर्तन्ते F [2] व्यवच्छेदा D [3] प्रश्ना C
[4] श्रीपञ्चरात्र A [5] I omits the title.

# एकोनविंशोऽध्यायः

श्री[1]—

सिसृक्षालक्षणा पूर्वा पूर्णाहन्ता हरेरहम् ।
सृष्टिरूपा परा शक्तिरूपेत्येवोदितास्म्यहम् ॥ १ ॥

दश पञ्च च तुल्या मे दशास्त्रिदशनन्दन ।
अनुत्तर स्वसवेद्य चिद्रूप मम शाश्वतम् ॥ २ ॥

वाक्तत्त्व तदकारात्मा सर्ववाङ्मयसभव ।
तदेवानन्दरूपेण द्वितीय स्वर इष्यते ॥ ३ ॥

इच्छात्मना तृतीय स्यादीशानात्मा तुरीयक ।
उन्मेष पञ्चम षष्ठ ऊर्जतारूप उच्यते ॥ ४ ॥

चतुष्क मध्यम यत्तदिच्छादेरेव विक्रिया ।
अनुत्तरेच्छासयोगादेकारो नाम जायते ॥ ५ ॥

तस्यैवानन्दसयोगाज्जगद्योनिरुदाहृता ।
अनुत्तरोन्मेषयोगादोकारो नाम जायते ॥ ६ ॥

तस्यैवानुत्तरश्लेषात् सद्योजातसमुद्भव ।
अनुत्तराद्भवन्त्येते विकासा वेद्यसश्रया ॥ ७ ॥

तान्त्कादक्समुन्मेषा आनन्दाद्यास्त्रयोदश ।
त्रयोदशतयोन्मेषा श्रिता वेदनशेषिताम् ॥ ८ ॥

अनुत्तरीं सूक्ष्मदशा स तु [2]पञ्चदश स्वर ।
एता पञ्चदशावस्था विसृष्टे स्फुरणोद्यमा ॥ ९ ॥

दशभि पञ्चभिश्चैवमङ्गै [3]पूर्णा सिसृक्षया ।
[4]दैवी सृष्टिमयी शक्ति कृत्ये कृत्ये कृतोद्यमा ॥

विसृजत्यास्तु तस्या मे तत्त्वाना पञ्चविंशतिम्[5] ।
पुरुषाद्या पृथिव्यन्ता कादिमान्ता समुद्गता ॥

तत्तदक्षरसस्फूर्तेस्तत्तत्तत्त्व समुद्गतम् ।
चतुष्क धारणारूप यादिवान्तमुदीर्यते ॥ १२ ॥

धारयन्ति यतो मध्ये पुरुष धारणा स्मृता ।
कला किंचित्क्रियारूपा यकारो वातसञ्ज्ञित[6] ॥

किंचिज्ज्ञानात्मिका विद्या रेफ पावकसञ्ज्ञित ।
स्तम्भमोहात्मिका माया लकार पृथिवी मत ॥

१. सिसृक्षावस्थायाम् अहन्तेति नाम्ना प्रथिता । सृष्ट्यवस्थाया परा शक्तिरिति नाम्ना प्रथिता । २. दशेत्यादि, अकारादिबिन्द्वन्ता पञ्चदश दशा ज्ञेया । विसर्गस्य दशाप्रकृतित्वात् दशासु न परिगणनमिति ज्ञेयम् । ५. चतुष्कमिति । ऋॠऌॡकाररूपमित्यर्थ । तस्मात् तेषा न पृथक् ग्रहण कृतम् । ६. जगद्योनि ऐकार । ७. सद्योजात औकार । ८. वेदनशेषिताम्, सविद्रूपेण परिशेषिताम् । अस्य सूक्ष्मदशामित्युत्तरेणान्वय । ९. सूक्ष्मदशा बिन्दु । स च पञ्चदश अकारमारभ्य गणने भवति । १०. सिसृक्षयेति हेतौ तृतीया । ११. मे इति पञ्चम्यर्थे विभक्तिप्रतिरूपकमव्ययम्, मदित्यर्थ । समुद्गता इत्यनेनान्वेति । कादिमान्ता इति व्युत्क्रमेणान्वय । १२. धारणेति । परदशाया अपर-

[1] श्रीरुवाच B I
[2] पञ्चदश स्वरा B
[3] पूर्ण B D F
[4] देवी B
[5] विंशति G
[6] संज्ञक B

रञ्जनात्मा रागशक्तिर्विकारो वरुणात्मकः ।
परापरदशामध्ये धारयन्त्यो नरं सदा ॥ १५ ॥

चतस्रो धारणा ज्ञेयास्ता एतास्तत्त्वकोविदैः ।
शादिक्षान्तं तु विज्ञेयं विशुद्धं ब्रह्मपञ्चकम् ॥१६॥

शपसहोऽनिरुद्धाद्या विज्ञेयास्त्रिदशेश्वर ।
सृजन्त्याः क्षुभितं रूपं सृष्ट्यादौ यन्ममाद्भुतम् ॥१७॥

क्षोभिका सा महाशक्तिः क्षात्मा सत्यापराह्वया ।
पृथिव्याद्या वियदन्ता या दिव्याः पञ्च शक्तयः ॥

वलादिपञ्चकात्मानो दिव्या मत्सत्त्वनामिकाः ।
ज्ञानात्मानो ममोद्यत्यास्ता एताः शादिशक्तयः ॥

विसर्गो नाम यः प्रोक्तः पुरा पञ्चदशाङ्गवान् ।
साहं सोममयी शक्तिः किरणायुतसंकुला ॥२०॥

[1]संकोचश्च विकासश्च तावेव परिकीर्तितौ ।
अङ्गानामन्तिमो यस्तु प्रोक्तः पञ्चदशो मया ॥२१॥

आदानशीलं तं विद्धि सूर्यं भोक्तारमञ्जसा ।
सूर्याचन्द्रमसावेतौ बिन्दुसर्गौ पुरंदर ॥ २२ ॥

[2]किरणाः सप्त सप्त स्युर्देवयोरनयोर्द्वयोः ।
चतुर्दश स्वराः शिष्टाः सप्त युग्मानि कल्पयेत् ॥

तेषु सप्तसु युग्मेषु पूर्वे सप्त पुरंदर ।
शोषकाः सूर्यरूपाया भोक्त्राख्याया ममांशवः ॥

उत्तरे सप्त युग्मेषु शीतलाह्लादकारिणः ।
पोषकाः सोमरूपाया भोग्याख्याया ममांशवः ॥

आलोकस्तीक्ष्णता व्याप्तिर्ग्रहणं क्षेपणेरणे ।
पाक इत्युदिताः पूर्वे किरणाः सूर्यसंभवाः ॥ २६ ॥

[3]द्रवता शीतभावश्च शान्तिः[4] कान्तिः प्रसन्नता ।
रसतानन्द इत्येते सप्त चान्द्रमसाः कराः ॥ २७ ॥

अग्नीषोमात्मकैरेभिः[5] किरणैः कान्तिशालिनी ।
पुमांसं बिन्दुरूपं तमङ्गीकृत्य विशेषणी ॥ २८ ॥

सोमरूपोत्तरा शक्तिकोटिमण्डलमण्डिता ।
महासृष्टिर्महानन्दा प्रवर्तेऽन्त्यस्वरात्मना ॥ २९ ॥

[6]तस्याः प्रवर्तमानाया उद्गतं ब्रह्मपञ्चकम् ।
क्षादि शान्तं सुरेशान शक्त्युन्मेषविशेषितम् ॥

दशामवतरतः पुरुषस्य धारणात् धारणेति समाख्या । १७. अनिरुद्धाद्या इति क्रमेणान्वयः । शकारः अनिरुद्धात्मकः । १८. क्षकारस्य सत्यात्मकत्वमाह—क्षोभिकेति । १९. वलादीति । बलैश्वर्यवीर्यशक्तितेजांसीत्यर्थः । २१. बिन्दुः संकोचः । विसर्गः विकासः । अन्तिम इति । बिन्दुरित्यर्थः । २२. भोक्तारम् ; संहारकमित्यर्थः । बिन्दुः सूर्यः । विसर्गश्चन्द्रमा इत्यर्थः । २४. पूर्वे सप्तेति । अ, इ, उ, ऋ, ऌ, ए, ओ इति सप्तेत्यर्थः । २५. उत्तरे सप्तेति । आ, ई, ऊ, ॠ, ॡ, ऐ औ इति सप्तेत्यर्थः । २६. अकाराद्योकारान्तानां सप्तानां युग्मस्थपूर्ववर्णानां सूर्यकिरणात्मकत्वं गुणांश्चाह—आलोक इत्यादि । तथा च जयाख्ये—"आलोकस्तीक्ष्णता व्याप्तिर्ग्रहणं क्षेपणेरणे । पाकः प्राप्तिरिति ह्यष्टौ सूर्यभागे व्यवस्थिताः । अकारादिषु

[1] C. omits 4 lines from here. [2] B. omits 3 lines from here. [3] भावना F.
[4] शक्तिः A. B. C. [5] एतैः D. [6] तस्या प्रवर्तमानाया B.

क्ष इत्येव महाक्षोभ उदित सत्यसज्ञया ।
वासुदेवाख्यया होऽभूत् सास्य सकर्षणोदय ॥

प्रद्युम्न पाख्यया ज्ञेयो ह्यनिरुद्धस्तु शाख्यया ।
ता एता शक्तय पञ्च पञ्चब्रह्मात्मिका परा ॥३२॥

स्फूर्तयो मदभिन्नास्ता जगदुत्पत्तिहेतव ।
ज्वाला इव महावह्नेर्ब्रह्मणो मम शक्तय ॥ ३३ ॥

चतस्रो धारणा जाता याद्या यान्ता पुरदर ।
तुर्याद्या जाग्रदन्तास्ता अवस्था परिकीर्तिता ॥

पुमास धारयन्त्येता मध्यतो दशयोर्द्वयो ।
यैषा ब्रह्मदशा प्रोक्ता प्राकृती भादिका[1] च या ॥

मध्ये तयोर्मकाराख्यो धारणाना चतुष्कत ।
[2]म्रियते स पुमान् प्रोक्तो जाग्रदादिविभेदवान् ॥

यदि न ध्रियते ताभिर्दशामन्यतरा व्रजेत् ।
ब्राह्मीं वा प्राकृतीं वापि नैव स्यात् ससृतिस्तत ॥

[3]इत्यर्थं धारणा मत्त प्रादुर्भूता ममाज्ञया ।
ततो दशाचतुष्कस्थ पुरुषो भोक्तृसज्ञक ॥३८॥

मत्तो जज्ञे म इत्येव योग्यो भोगापवर्गयो ।
भोगाना प्रसवार्थाय पुरुषस्यास्य वासव ॥ ३९ ॥

अचैतन्य पर सूक्ष्म गुणसाम्यमनुल्बणम् ।
योनिस्वभावसज्ञात मत्तोऽभूद्भ इति स्वयम् ॥

ह्रस्वेषु वर्णेष्वेतेष्वनुक्रमात् ” ॥ (६-१३) इति । अत्रानुस्वारमपि सयोज्याष्टत्वमुक्तम् । २७. एवमुत्तरवर्णाना सोमकिरणात्मकत्व गुणाश्चाह—द्रवतेत्यादिना । जयाख्ये च—“द्रवता शैत्यभावश्च तृप्ति कान्ति प्रसन्नता । रसतास्वाद आनन्दो ह्यष्टौ चान्द्रा इमे मता ॥” (६-१५) इति । अत्र विसर्गं सयोज्याष्टत्व भाव्यम् । ३१. क्षादिशान्ताधिष्ठायिब्रह्मपञ्चकनामान्याह—सत्येत्यादिना । ३२. ब्रह्मात्मिका , ब्रह्ममय्य इत्यथ । ३३. ब्रह्मणो ममेति । ब्रह्माभिन्नाया ममेत्यर्थ । ३६. मध्यत इति । परापरदशयोर्मध्ये इत्यर्थं । भादिकेति । भकारादिकक्कार-पर्यन्ताधिष्ठातृभूता प्रकृत्यादिपृथिव्यन्ता ज्ञेया । ३८. धारणा अन्त स्था । ब्रह्मप्राकृत दशामध्यस्थत्वात् अन्त स्था इत्युक्ता । अहिर्बुध्न्ये तु—“अन्त स्था इति च प्रोक्ता अन्त स्थ-पुरुषेशया ” इति व्युत्पत्त्यन्तरमुक्तम् । ३९. मत्तो जज्ञे म इत्येवमित्यनेन मशब्दस्य जीववाचकस्य व्युत्पत्तिरभिप्रेता । मनज्ञातोर्निष्पत्तिरप्यन्यत्रोक्ता । ४०. अचैतन्यमिति बहुव्रीहि । अचेतनमित्यर्थ । “अचेतना परार्था च नित्या सततविक्रिया ” इत्यन्यत्रोक्तम् । अनुल्बणम् , अव्यक्तमित्यर्थ । योनि स्वभाव इति च तन्नाम । भ इति , भकारवाच्यत्वेनत्यथ ।

[1] भौक्ति A. B

[2] भ्रियते A क्रियते F

[3] य इत्थं A B

[1]भोग्यभोगादिसिद्ध्यर्थं भुञ्जानस्य विपश्चितः[2] ।
बाद्यात् ककारपर्यन्ताद्वर्णग्रामात् पुरंदर ॥ ४१ ॥

व्यक्तानि जज्ञिरे मत्तो विंशतिस्त्रीणि च क्रमात् ।
बुद्ध्यहंकारमनसां सृष्टिर्बादित्रयात्तथा ॥ ४२ ॥

श्रोत्रादेर्नादितान्तेषु पञ्चकस्य समुद्भवः ।
वागादेर्णादिटान्तेषु पञ्चकस्य समुद्भवः ॥ ४३ ॥

[3]शब्दाद्याः पञ्चतन्मात्रा ञादिचान्तेषु जज्ञिरे ।
वियदादीनि भूतानि ङादिकान्तेषु जज्ञिरे ॥ ४४ ॥

बोधः शब्दात्मनोदेति शब्दस्त्वर्थात्मना ततः ।
विद्धि बोधं तु मद्रूपं सर्वेयं मत्ततिस्ततः ॥ ४५ ॥

वर्णाध्वनस्त्वियं रीतिर्मध्यमा कथिता तव ।
आद्यामन्त्यां च देवेश गदन्त्या मे निशामय ॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [5]वर्णोत्पत्तिनिरूपणं नाम
एकोनविंशोऽध्यायः

४१. तत्त्वाविर्भावक्रममनुरुध्य बाद्यादित्यादिना वर्णानां व्युत्क्रमेण निर्देशः कृतः ।

**इत्येकोनविंशोऽध्यायः**

---

[1] भोग्यदत्त्वादि B [2] अविपश्चितः F. [3] व्योमाद्या I.
[4] श्रीपद्मरात्र A. D. [5] A. omits the title.

# विशोऽध्यायः

शक्र —

नमो निखिलनिर्माणत्राणसंहारशक्तये ।
हरे स्वरूपभूतायै नमस्ते ज्ञानरूपिणि ॥ १ ॥

त्वत्प्रसादान्मया पद्मे रहस्य परम श्रुतम् ।
वर्णाध्वान यथावन्मे[1] भूयस्त्व वक्तुमर्हसि ॥ २ ॥

श्री [2]—

शृणु वर्णाध्वनो रीतिमाद्या त्रिदशपुगव ।
प्राप्नोति यत्परिज्ञानात्साधको [3]मत्सरूपताम् ॥ ३ ॥

वेद्यवेदकनिर्मुक्तमच्युत ब्रह्म यत् परम् ।
अनस्तमितभारूप सर्वाभिन्नमहत्पदम् ॥ ४ ॥

अहता नाम सा शक्तिस्तदभिन्ना सदोदिता ।
अनस्तमितभारूपा वेद्यवेदकवर्जिता ॥ ५ ॥

प्रकाशानन्दसाराह सर्वत समता गता ।
कोटिकोट्ययुतैकाशकोटयशे क्षुभिता सती ॥ ६ ॥

शब्दब्रह्मस्वरूपेण स्वशक्त्या स्वयमेव हि ।
मुक्तयेऽखिलजीवानामुदेमि परमेश्वरात् ॥ ७ ॥

तदव्यक्ताक्षर विद्धि तन्त्रीशब्दो यथा कल ।
पृथग्वर्णात्मना याति स्थितये नैकधा[4] स तु ॥८॥

सूक्ष्मवर्णस्वरूपोऽसौ धारासतानरूपधृत् ।
पञ्चाध्वकोशमुक्तस्य मन्निष्ठस्य विवेकिन [5] ॥ ९ ॥

[6]अनुभूतिपद याति प्रसादात् परमात्मन ।
मच्चातुरात्म्यनिचयो विज्ञेयो हि तदात्मना[7] ॥१०॥

प्रभवाप्यययोगेन भारूपध्वनिलक्षण ।
सकारान्तस्त्वकाराद्य हकारादान्त एव च ॥ ११ ॥

प्रभवे द्वादशान्तस्तु हकारश्चतुरात्मनाम् ।
अकारस्त्वप्यये चैतौ द्वादशान्तावुभौ समौ ॥१२॥

वार्णे व्यूहसमूहेऽस्मिन् ज्ञेय ज्ञानसमाधिना ।
विश्राम उदयो व्याप्तिर्व्यक्तिरा वासुदेवत ॥१३॥

९. भुवनाध्वपदाध्वमन्त्राध्वतत्त्वाध्वकलाध्वान पञ्चाध्वान । मायाप्रसूतिप्रकृतिब्रह्माण्डनीरदेहाख्या पञ्च कोशा । १०. चातुरात्म्य वासुदेवसङ्कर्षणादिकम् । तदात्मना, वर्णात्मना । तच्चानन्तरमेव वक्ष्यते । ११. उत्पत्तिक्रमे ध्वनिलक्षण । अप्ययक्रमे परारूपेण चिल्लक्षण । अकारमारभ्य सकारपर्यन्त गणने अष्टचत्वारिंशत् वर्णा भवन्ति । यथा—स्वरा षोडश, स्पर्शा पञ्चविंशति, अन्त स्थाश्चत्वार, हकार विहायोष्माणस्त्रय इति । एव हकारमारभ्य दीर्घाकारपर्यन्तगणनेऽपि । १२. चतुरात्मना वासुदेवादीना प्रभवे हकारो द्वादशान्तो भवति । अप्यये तु अकारस्तथा । अय भाव —पूर्वोक्ताष्टचत्वारिंशद्वर्णाना द्वादशधा विभागे प्रतिविभाग चत्वारो वर्णा सपद्यन्ते । एते च क्रमेण वासुदेवादिभिश्चतुर्भिरधिष्ठिता भवन्ति । द्वादशभागान्ते प्रभवे हकार लये अकारश्च भवत इति । १३. प्रतिविभागमाश्रयिना वासुदेवादय

[1] पद्मे A B
[2] श्रीरुवाच C
[3] मत्स्वरूपताम् C
[4] अनेकधा F
[5] विपश्चित B
[6] सोऽनुभूति A. B C D
[7] तदात्मनाम् C

छत्रैकैकोपरि ज्ञेया मूर्तिर्वै त्वेवमेव हि ।
[1]युक्ता विश्रामपूर्वेण चतुष्केण समासत ॥ १४ ॥

विश्राम चिन्तयेद्देव वासुदेव सनातनम् ।
अकार पुण्डरीकाक्ष पूर्वदेव सनातनम् ॥ १५ ॥

सकर्पणादितत्त्वानि विश्राम्यन्ति लयेऽत्र हि ।
तत सकर्पण देवमाकारमुदय स्मरेत् ॥ १६ ॥

उदितो हि स सर्वात्मा प्रथम सर्वकृत् स्वयम् ।
व्याप्त प्रद्युम्नदेव तमिकार परिचिन्तयेत् ॥ १७ ॥

विविध प्राप्यते तेन त्रयीकर्मात्मना जगत् ।
अनिरुद्ध व्यक्तिरूपमीकार तमनुस्मरेत् ॥ १८ ॥

व्यज्यन्ते शक्तयो ह्यत्र जगत्सृष्ट्यादयोऽखिला ।
दण्डवत्सनिवेशेन सस्थिता ह्येवमेव हि ॥ १९ ॥

आ सकाराच्चतूरूपयुक्ता मे चतुरात्मता ।
स्मरेत् प्रभवचिन्ताया हकार द्वादशान्तकम् ॥२०॥

हकार वासुदेव तु विश्राम परिचिन्तयेत् ।
सकर्पण सकार तमुदय त्वप्यये स्मरेत् ॥ २१ ॥

एवमाकारतो दिव्या चिन्तयेच्चतुरात्मताम् ।
द्विषट्क धारणाना च द्वादशाध्यात्मलक्षणम्[2] ॥

सोपानभूत यत्क्रान्त्वा द्वादशान्ताद्विशेत् परम्[3] ।
एषा सा प्रथमा रीतिर्वर्णमार्गस्य दर्शिता ॥ २३ ॥

सूक्ष्मा तच्चातुरात्मीया भारूपा मन्मयी परा ।
*मध्यमा पूर्वमेवोक्ता विशेष तत्र मे शृणु ॥ २४ ॥*

धारणा पूर्वमुक्ता याश्चतस्रो मत्स्वरूपिका ।
वकारस्यानिरुद्धस्य शक्ति सा रागसज्ञिता[4] ॥

माया नाम महालक्ष्मीर्लकारापरनामिका ।
निद्रा या रेफसज्ञाता महावाणी तु सा स्मृता ॥

वातसज्ञा महाकाली क्रियाशक्तिर्यकारिणी ।
ब्रह्माद्या मूर्तयस्तिस्र पत्न्यस्त्रय्यादयश्च या ॥२७॥

तज्ज्ञेय सकल सूक्ष्ममकारस्यादिमऽशके ।
मध्यमे भोक्तृकूटस्थ पुरुषोंऽशे प्रतिष्ठित ॥ २८ ॥

ससारी पुरुष सर्वश्चरमाशेऽवतिष्ठते ।
एषा ते मध्यमा रीतिर्वर्णमार्गस्य दर्शिता ॥ २९ ॥

चरमामथ वक्ष्यामि रीतिं वलनिषूदन ।
वैखरी चरमा रीति प्रयत्नस्थानभेदिनी ॥ ३० ॥

व्यक्तवाचा समुच्चारे सा स्फुटीभवति ध्रुवम् ।
जीवाना देहबद्धाना तत्तत्सन्मार्गदर्शिका ॥ ३१ ॥

मातृका जायते सेय विष्णुशक्त्युपबृंहिता ।
विष्णुवक्त्र पञ्चाशच्छक्तय परिकीर्तिता ॥ ३२ ॥

[5]अधितिष्ठन्ति ये या च मातृका वर्णमालिनीम् ।
वासुदेवादयो व्यूहा दश द्वौ केशवादय ॥ ३३ ॥

स्वराधिष्ठायिनो देवा शक्तीस्तेषामिमा शृणु ।
लक्ष्मी कीर्तिर्जया माया व्यूहशक्तय ईरिता ॥३४॥

श्रीश्च वागीश्वरी कान्तिक्रियाशान्तिविभूतय ।
इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ॥३५॥

शक्तय केशवादीना ता एता स्वरशक्तय ।
*काद्यधिष्ठायिनो देवान् गदन्त्या मे निशामय ॥*

पद्मनाभादिनामानो विष्णव कादिदेवता ।
पद्मनाभो ध्रुवोऽनन्त शक्तीशो मधुसूदन ॥

क्रमेण विश्रामोदयव्याप्तिव्यक्तिरूपा ज्ञेया । १९. तदेव विशदयति—विश्राममित्यादिना । २०. आ सकारादिति । सकारपर्यन्तमित्यर्थ । २१. व्युत्क्रमे चातुरात्म्यनिर्देशमाह—हकारमिति । २२. आकारत इति । आकारपर्यन्तमित्यर्थ । ३७. पद्मनाभादयो विभवभेदा

[1] C. omits four lines from here [2] चिन्तनम् B [3] पुरम् B D
[4] संज्ञिका C. [5] C. omits 4 lines from here

विद्याधिदेव कपिलो विश्वरूपो विहङ्गम ।
[1]क्रोडात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा ॥३८॥

एकार्णवशयो देव कूर्म पातालधारक ।
वराहो नारसिंहश्चाप्यमृताहरणस्तथा ॥ ३९ ॥

श्रीपतिर्दिव्यदेहोऽथ कान्तात्मामृतधारक ।
राहुजित् कालनेमिघ्न पारिजातहरो महान् ॥४०॥

लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभु ।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्तत ॥ ४१ ॥

देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रम ।
नरो नारायणश्चैव हरि कृष्णस्तथैव च ॥ ४२ ॥

ज्वलत्परशुधृद्रामो रामश्चान्यो धनुर्धर ।
वेदविद्भगवान् कल्की पातालशयन प्रभु ॥ ४३ ॥

एतेष्वन्त्येषु चत्वारो देवा रामादयो हि ये ।
ते रङ्गयमयोर्जिह्वामूलोपध्मानयोरपि ॥ ४४ ॥

धीस्तारा वारुणी शक्ति पद्मा विद्या तथैव च ।
सत्या विश्वा रमा भूर्गौर्लक्ष्मीर्वागीश्वरी तथा ॥

अमृता धरणी छाया नारसिंही सुधा तथा[2] ।
श्री कीर्तिर्विश्वकामा मा सत्या कान्ति सरोरुहा ॥

माया पद्मासना खर्वा विश्रान्तिर्नरसंभवा ।
नारायणी हरिप्रीतिर्गान्धारी काश्यपी तथा ॥४७॥

वैदेही [3]वेदविद्या च पद्मिनी नागशायिनी[4] ।
मदशका इमा देव्यो विज्ञेया कादिशक्तय ॥४८॥

भवोपकरणैश्चैव मातृकाधिष्ठिता सुरै ।
श्रीकण्ठानन्दसूक्ष्माद्यैर्लम्बोदर्यादिशक्तिभि ॥४९॥

विनायकैश्च दुर्गाभि क्षेत्रेशैर्मातृभिस्तथा ।
समयस्थैस्तथा बौद्धैरार्हतैरपि चापरै ॥ ५० ॥

यथा हि क्षुधिता बाला मातर पर्युपासते ।
एव सर्वे सुरा देवीं मातृका पर्युपासते ॥ ५१ ॥

इय योनिर्हि मन्त्राणा विद्याना जन्मभूरियम् ।
तत्त्वाना तात्त्विकाना च ज्ञानाना प्रसवस्थली ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे मातृकाप्रकाशो नाम
विंशोऽध्याय

पूर्वमेवैकादशाध्याये पठिता ज्ञातव्या । ४८. रङ्ग अनुनासिक । यमा प्रातिशाख्ये प्रसिद्धा वर्णविशेषा ।

**इति विंशोऽध्यायः**

---

[1] धर्मात्मा I.
[2] तथा सुधा B C
[3] देव B
[4] पद्मशायिनी C.
[5] श्रीप्रागम A , श्रीप्रागम I

# एकत्रिंशोऽध्यायः

शक —

शब्दार्थव्यक्तिरूपायै षडध्वपरिवर्तिनि ।
अध्वातीतावबोधात्मये नमस्ते हरिवल्लभे ॥ १ ॥

वर्णाः प्रकाशिता देवि यथावत् सर्वहेतव ।
मन्त्रमार्गमिदानीं मे यथावद्वक्तुमर्हसि ॥ २ ॥

श्री —

एक एव परो देव श्रीमान् पुरुषसत्तम ।
षाड्गुण्याम्भोनिधिर्दिव्य सर्वात्मा सर्वतोमुख ॥

तस्याहं परमा शक्तिरहंता श्रीरभेदिनी ।
सर्वाधारा सर्वशक्ति सर्वज्ञा सर्वतोमुखी ॥ ४ ॥

मयि प्रकाशते विश्वं दर्पणोदरशैलवत् ।
बोध एव स्वरूपं मे निर्मलानन्दलक्षण ॥ ५ ॥

इच्छापरवती साहं बोधकाशविवर्तिनी ।
शब्दब्रह्ममयी भूत्वा विवर्तेऽहं कलाध्वना ॥ ६ ॥

कला ज्ञानादय प्रोक्ता षड् गुणा पारमेश्वरा ।
तासा त्रिकद्वियोगेन विवर्ते तत्त्ववर्त्मना ॥ ७ ॥

सकर्षणादयो देवास्तत्त्वानि सुरसत्तम ।
वर्णव्यतिकरैर्भूयो विवत मन्त्रवर्त्मना ॥ ८ ॥

तस्य मन्त्राध्वनो व्यक्तिं गदन्त्या मे निशामय ।
शब्दब्रह्मविवर्तोऽयं किरणायुतसकुल ॥ ९ ॥

चिल्लक्षण षड्गुणात्मा तस्य भेदश्चतुर्विध ।
कचिद्बीज कचित्पिण्ड कचित्सज्ञा कचित्पदम् ॥

तुर्यं सुषुप्ति स्वप्नश्च जाग्रद्बीजादय क्रमात् ।
एकस्वरं द्विस्वरं वा स्वरव्यञ्जनयोर्द्वयम् ॥ ११ ॥

बीजं बहुस्वरं वापि विज्ञेयं विबुधेश्वर ।
[1]अन्तरा हरय पिण्ड कचित्स्वरसमायुतम् ॥ १२ ॥

तत्तद्वाच्याभिधा सज्ञा नम प्रणवसयुता ।
क्रियाकारकसयोगस्तुतिसबोधलक्षण ॥ १३ ॥

नानाभिज्ञासमायुक्त पदात्मा मन्त्र उच्यते ।
एतच्चतुष्टय मन्त्र सपूर्णं देवतात्मनि ॥ १४ ॥

१. षडध्वेति । वर्णकलातत्त्वमन्त्रपदभुवनाख्या षडध्वान । २. सर्वेति । शब्दानामर्थाना चेत्यर्थ । ६ इच्छापरवतीति । स्वच्छन्देत्यर्थ । विवर्त परिणाम । कलाध्वनेति । ज्ञानादिगुणात्मनेत्यर्थ । ७. त्रिकद्वियोगेन, युगलत्रययोगेनेत्यर्थ । ११ बीजपिण्डसज्ञापदमन्त्रा क्रमेण तुर्यादिजाग्रदन्तपदचतुष्टयसगता ज्ञेया इत्यर्थ । १२. अन्तरा मध्ये स्थिता हरय व्यञ्जनानि पिण्डमन्त्र इत्यर्थ । तस्यापवादमाह— कचिदिति । १३. पदमन्त्रस्वरूपमाह—क्रियेत्यादि । सबोध सबोधनम् । १४. अभिज्ञा

[1] अन्तराहुरय A अन्तराहल्य B G अन्तराकुल्य C अनन्तराविल D

सा चतुष्टयसंबद्धा सिद्धिमिष्टां प्रयच्छति ।
क्षेत्रक्षेत्रज्ञभावं च मन्त्राणां त्रिदशेश्वर ॥ १५ ॥

विज्ञाय तत्त्वतो मन्त्रान् प्रयुञ्जीत विचक्षणः ।

शक्रः—

क्षेत्रक्षेत्रज्ञसद्भावं मन्त्राणां वद मेऽम्बुजे ॥ १६ ॥

[1]यद्विज्ञाय न मुह्यन्ति सिद्धिमेष्यन्ति चाचिरात् ।

श्रीः—

बीजं बीजवतां जीवः शिष्टं क्षेत्रं प्रकीर्तितम् ॥

निर्बीजानामादि जीवः क्षेत्रं तु परिशेषितम् ।
बीजानां चैव पिण्डानामस्तु क्षेत्रज्ञ उच्यते ॥

शिष्टं तु क्षेत्रमुद्दिष्टमकाररहिते पुन. ।
क्षेत्रज्ञः स्वर उद्दिष्टः केवले च स्वरे पुनः ॥ १९ ॥

जीवः स्यात् प्रथमा मात्रा द्वितीयादि [2]तनुर्भवेत् ।
एकमात्रे तु जीवः स्यात् संस्कारोऽद्भुतलक्षणः[3] ॥

उच्चार्यमाणं क्षेत्रं स्यान्निःस्वरे पिण्डके पुनः ।
प्रथमो जीव उद्दिष्टः शिष्टं क्षेत्रं प्रचक्षते[4] ॥ २१ ॥

क्षेत्रक्षेत्रज्ञसद्भाव एष ते संप्रदर्शितः ।
आदौ मध्ये तथान्ते च त्रिषु चान्यतरत्र वा ॥

एषां पिण्डोऽथवा बीजं ते मन्त्राः सार्वकालिकाः ।
बीजाभावे तु मन्त्राणां बीजं कृत्वादिमाक्षरम् ॥

अनुस्वारयुतं पश्चात् सकलं मन्त्र उच्यते ।
प्रक्रीडयन्ति पुरुषं मन्त्रा रागेण रञ्जितम् ॥ २४ ॥

चतुर्दशविभागस्थे प्राकृते भुवनाध्वनि ।
तुर्यवर्जं सुषुप्त्याद्ये प्राकृते च पदाध्वनि ॥ २५ ॥

आचार्यदृष्टिपातस्थं पुरुषं संयतेन्द्रियम् ।
प्रसादसुमुखा मन्त्रा उत्तार्य भुवनाध्वनः ॥ २६ ॥

[5]पदाध्वनश्च वैराग्यं जनयन्तः पदे पदे ।
क्रमात्तत्त्वकलावर्णपदवीषु नयन्ति तम् ॥ २७ ॥

मान्त्रं प्रासादमासाद्य निर्धूताशेषबन्धनः ।
लक्ष्मीनारायणाख्यं तद्विशति ब्रह्म शाश्वतम् ॥२८॥

शक्रः—

आचार्यः कीदृशो देवि शिष्यस्तस्य च कीदृशः ।
मन्त्रेषु कतमो मन्त्रः प्रभवेत् परमाप्तये ॥ २९ ॥

कथं स चोपदेष्टव्य एतद् ब्रूहि नमोऽस्तु ते ।

श्रीः—

सर्वलक्षणसंयुक्तो[6] ब्राह्मणो वेदपारगः ॥ ३० ॥

सञ्ज्ञा । १५. सा ; देवता। १७. बीजवतां मन्त्राणां बीजाक्षरं जीव इत्यर्थः। १८. आदीति। आद्यक्षरमित्यर्थः। अस्तु ; अकारस्त्वित्यर्थः। १०. अकाररहिते पुनरिति उत्तरत्रान्वेति। स्वरः ; यः कश्चित् स्वर इत्यर्थः। केवले च स्वरे इत्युत्तरत्रान्वेति । २०. संस्कार इति । मध्यमा वागित्यर्थः। अत्राष्टादशाध्यायस्थः षड्विंशः श्लोकोऽवधेयः २१. उच्चार्यमाणमिति। वैखरीत्यर्थः। २३. यत्र मन्त्रे बीजं नास्ति तत्र प्रथमाक्षरमनुस्वारयुतं बीजमित्यर्थः। यथा गणपतये नमः

[1] F. omits four lines from here.
[2] मनुर्भवेत् B.
[3] संस्कारोद्बोधलक्षणः I.
[4] क्षेत्रज्ञ उच्यते I.
[5] I. omits three lines from here.
[6] सत्यो C.

षट्कर्मनिरतः शान्तः पञ्चकालरतः शुचिः ।
पञ्चरात्रार्थविन्मौनी मन्त्राक्षरकृतश्रमः ॥ ३१ ॥

न स्थूलो न कृशो ह्रस्वो न काणो नैव रोगवान् ।
नान्धो न बधिरो मूढो न खल्वाटो न पङ्गुकः ॥

न हीनाङ्गोऽतिरिक्ताङ्गो न श्वित्री न च डाम्भिकः ।
न क्रोधनो न दुश्चर्मा न लोभहतचेतनः ॥ ३३ ॥

अकुलीनं दुराचारं शठं जिह्मं च वर्जयेत् ।
दयादान्तिशमोपेतं[1] दृढभक्तिं क्रियापरम् ॥ ३४ ॥

सत्यवाक्छीलसंपन्नं रेखाकर्मसु कौशलम् ।
जितेन्द्रियं सुसंतुष्टं करुणापूर्णमानसम् ॥ ३५ ॥

[2]आर्यलक्षणसंपन्नमार्जवं चारुहासिनम् ।
[3]एवंगुणगणाकीर्णं गुरुं विद्यात्तु वैष्णवम्[4] ॥ ३६ ॥

शिष्यश्च तादृशो ज्ञेयः सर्वलक्षणलक्षितः ।
क्षान्तिशीलं सुधीमन्तं[5] क्रोधलोभविवर्जितम् ॥

स्नानार्चनरतं[6] नित्यं गुरुशुश्रूषणोद्यतम् ।
विप्राग्निदेवपितृषु भक्तं तर्पणशीलिनम् ॥ ३८ ॥

कुलीनं च तथा प्राज्ञं शास्त्रार्थनिरतं सदा ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा भगवत्परम् ॥ ३९ ॥

ईदृग्लक्षणसंयुक्तं शिष्यमार्जवसंयुतम् ।
वर्णधर्मक्रियोपेतां नारीं वा सद्विवेकिनीम् ॥ ४० ॥

[7]विद्यादनुमते पत्युरनन्यां पतिमानिनीम् ।
एवंलक्षणकं शिष्यमाचार्यो भगवन्मयः ।
[8]ज्ञापयेद्विधिवन्मन्त्रान् गुरुदृष्ट्या समीक्ष्य तु ॥

इति [9]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे गुरुशिष्यलक्षणं नाम
एकविंशोऽध्यायः

इत्यत्र गं इति बीजमन्त्रः । ४१. अनेन स्त्रीशूद्रयोरपि तान्त्रिकमन्त्रग्रहणे अधिकारो विधीयते । परं तु तारविषये विशेषो ग्रन्थान्तरेष्ववगन्तव्यः ।

## इत्येकविंशोऽध्यायः

---

[1] शान्तिदमोपेतं B.; शमदमोपेतं D. I.
[2] आर्यं F.; कुर्यात् I.
[3] एवंगुरुगुणा C. B.
[4] वैमल्यम् F.
[5] सुशीलं तं B.
[6] परं C.
[7] दद्यात् I.
[8] श्रावयेद्विधिवान् C.
[9] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B. D.

# द्वाविंशोऽध्यायः

शक्र —

अनादिनिधने देवि सर्वज्ञे हरिवल्लभे ।
कथं वै ज्ञापयेन्मन्त्रांस्तेषां रूपं च कीदृशम् ॥१॥

समप्रधानता वैषामुत ज्येष्ठकनिष्ठता ।
एतत् पृष्टा मया ब्रूहि नमस्ते सरसीरुहे ॥ २ ॥

श्री —

शृणु सर्वमशेषेण मत्तस्त्वं पाकशासन ।
यथास्मि मन्त्ररूपाहं यथा च ज्ञापयामि तान् ॥

परं ब्रह्म परं धाम षाड्गुण्यममलोज्ज्वलम् ।
देशकालानवच्छिन्नमनाकारमनूपमम् ॥ ४ ॥

अहमित्येव तद्ब्रह्म स्वात्मसंबोधि निर्गुणम् ।
अनादिनिधनं दिव्यं लक्ष्मीनारायणं महत् ॥ ५ ॥

चिदानन्दरसं दिव्यमखण्डमजरामरम् ।
अनुन्मिषद्भवद्भाव भाह्यमाहन्त्ववर्जितम्[1] ॥ ६ ॥

स्तिमितं तत् परं ब्रह्म तस्य स्तिमिततास्म्यहम् ।
तत् कदाचित्परं ब्रह्म भवद्भावव्यवस्थया ॥ ७ ॥

उन्मिषत्यजहद्रूपं स्वेच्छयैव कदाचन ।
[2]साहं भावात्मिकाहन्ता [3]संपूज्या परमात्मनः ॥

उदेमि भवतो देवादिच्छयैव निरन्तरं[4] ।
संभृत्याखिलसंभारमिच्छयैव स्वनिर्मितम् ॥ ९ ॥

स्वभित्तौ लिखितं नीत्वा[5] प्रभवामि षडध्वना ।
वार्णं कलामयश्चैव तात्त्विको मान्त्रिकस्तथा ॥

पादिको भौवनश्चैव षडध्वानः प्रकीर्तिताः ।
परमं यदहन्ताख्यं [6]संविद्रूपमनामयम् ॥ ११ ॥

उन्मेषः प्रथमस्तस्य वर्णाध्वा परिकीर्तितः ।
व्याकृतिर्दर्शिता तस्य पूर्वं ते पाकशासन ॥ १२ ॥

तदेव परमं रूपं मम संविन्मयं महत् ।
विवर्ततेऽध्वभावेन ज्ञानाद्येन कलात्मना ॥ १३ ॥

ज्ञानादीनां कलानां तु गुणानां परमात्मनः ।
पूर्वं ते कथिता सूक्तिर्यावन्तो यादृशाश्च ते ॥१४॥

अध्वद्वयमुपादाय तद्रूपं मम चिन्मयम् ।
वासुदेवादिरूपेण वर्तते तत्त्ववर्त्मना ॥ १५ ॥

३. ज्ञापयामीति । आचार्यरूपेण बोधयामीत्यर्थः । ४. अनूपममिति । अनुपममित्यर्थः । ५. निर्गुणम्, सत्त्वादिप्राकृतगुणहीनम् । ६. अनुन्मिषदित्यादि । शान्तपराख्याया भवद्भावरूपोन्मेषरहितमित्यर्थः । तथा ग्राह्येत्यादिकमपि भाव्यम् । ८. उन्मिषति, प्रकाशत इत्यर्थः । अजहदित्यादि । स्वाभाविकं निर्विकारत्वमजहदित्यर्थः । ९. निरन्तरं, तेजोमयाद्भगवत इत्यर्थः । १०. अध्वद्वयम्, वर्णाध्वानं कलाध्वानं चेत्यर्थः ।

[1] ग्राह्यकर्तृवर्जितम् I
[2] अह D
[3] संपूर्णा B पूजिता F
[4] स्वनिर्मितं C.
[5] नीत्वा A निर्मितान्तीदं I
[6] संविद्रूपम् B

व्यूहाश्च विभवाश्चैव यच्चान्यद्भगवन्मयम् ।
तत्त्वाध्वनो विभूतिः सा कीर्तिता परमात्मनः ॥

पूर्वाध्वद्वयमादाय तदेव मम चिन्मयम् ।
रूपं विवर्तते शश्वन्मात्रेण परमाध्वना ॥ १७ ॥

उत्तारणाय जीवानां मग्नानां भवसागरे ।
भोगाय भवसंस्थानां वैराग्यजननाय च ॥ १८ ॥

[1]आराधनस्य सिद्ध्यर्थं मानसालम्बनाय च ।
मन्त्राध्वा परमोदारो मम चिद्रूपलक्षणः ॥ १९ ॥

वासुदेवादिदेवानां मूर्तिभावं व्रजत्यसौ ।
मन्त्राः सर्वे चिदात्मानः सर्वगाः सर्वसाधकाः ॥

त्रायमाणाश्च मन्तारं गुप्तरूपाश्च शाश्वतः ।
भोगापवर्गदा ह्येते देवदेवस्य शार्ङ्गिणः ॥ २१ ॥

रूपं मे [2]भगवन्मन्त्रा विज्ञेया मूर्तयोऽमलाः ।
जाग्रत्स्वप्नौ[3] सुषुप्तिश्च तुर्यं चेति चतुष्टयम् ॥

ज्ञेयं पदाध्वनो रूपं जाग्रद्बाह्येन्द्रियक्रमः[4] ।
बाह्येन्द्रियाणां तमसाभिभूते विभवे सति ॥

अन्तःकरणवृत्तिर्या संस्कारपरिशेषिणी ।
सा स्वप्न इति विज्ञेया तदभावे सुषुप्तिका ॥ २४ ॥

तमसानभिभूतस्य सत्त्वस्थस्य विपश्चितः ।
बाह्यान्तःकरणस्थाया वृत्तेरुपरमे सति ॥ २५ ॥

शुद्धसत्त्वप्रसादस्य संततिस्तुर्यसंज्ञिता ।
एवं चतुर्विधे मार्गे निर्दिष्टेऽस्मिन् पदाभिधे ॥

तुर्यवर्जं सुषुप्त्यादिरशुद्धां भजते गतिम् ।
मायादिक्षितिपर्यन्ता योक्ता भुवनपद्धतिः ॥ २७ ॥

भुवनाध्वा स विज्ञेयो ह्यशुद्धो मलपङ्किलः ।
प्रक्रीडयन्ति मन्त्रास्ते शब्दब्रह्मपरं नरम् ॥ २८ ॥

तत्तद्योगेन्द्रजालानि दर्शयन्तो विमोहितम् ।
गुरुणा सदयं सम्यग्वीक्षितं करुणादृशा ॥ २९ ॥

उत्तारयन्ति वैराग्यं जनयन्तः पदे पदे ।
ततः शुद्धमयान् मार्गान् प्रापयन्तः शनैः शनैः ॥

शब्दब्रह्मणि निष्णातं प्रापयेयुः परां श्रियम् ।
एवंविधा महात्मानो मन्त्राः परमपावनाः ॥ ३१ ॥

त्रिविधास्ते तु विज्ञेया अधमा मध्यमाः परे ।
भवोपकरणानां ये देवानां मूर्तितां गताः ॥ ३२ ॥

अन्तवत्फलदा मन्त्रास्ते ज्ञेया अधमा बुधैः ।
मन्त्रा विभवदेवानां सशक्तीनां तु मूर्तयः ॥ ३३ ॥

१६. अन्यत्; व्यूहान्तराणि विभवान्तराणि चेत्यर्थः । १८. मन्त्राध्वप्रयोजनमाह—उत्तारणायेत्यादिना । १९. मानसालम्बनायेति । शुभाश्रयरूपप्रदर्शनेन योगिनां मानसस्य ध्यानालम्बनप्रदानायेत्यर्थः । एतच्च श्रीविष्णुपुराणे प्रपञ्चितम् । २०. अथ प्रकृतं मन्त्रमहिमानमाह—मन्त्रा इत्यादिना । २१. महिमवर्णनमुखेन मन्त्रशब्दयौगिकार्थमाह—त्रायमाणाश्चेति । मन्धातोः त्रैधातोश्च व्युत्पन्न इति भावः । व्युत्पत्त्यन्तरमाह—गुप्तेति । "मत्रि गुप्तभाषणे" इति धातुः । २३. स्वप्नावस्थां निरूपयति—बाह्येन्द्रियेत्यादिना । २४. तदभावे; संस्काराभावे । २७. भुवनाध्वानं निरूपयति—मायादीति । ३०. पदे पदे; जाग्रदादिक इत्यर्थः । ३१. शब्दब्रह्मणि; मन्त्रेष्वित्यर्थः । ३२. परे इति । उत्तमा इत्यर्थः ।

[1] आराधनसिद्ध्यर्थं I. [2] भगवन् B. [3] स्वप्नः D [4] क्रमात् D.

ते ज्ञेया मध्यमा मन्त्रा उत्तमा व्यूहमूर्तयः ।
ये तु ब्रह्मावगाहन्ते लक्ष्मीनारायणात्मकम् ॥ ३४॥

भवद्भावव्यवस्थानात्ते मन्त्रा उत्तमोत्तमाः ।
एवं च ज्यैष्ठ्यकानिष्ठ्यं विज्ञेयं मन्त्रकोविदैः ॥

उत्तमाः पञ्चरात्रस्था मध्यमास्तु त्रयीमयाः ।
तन्त्रान्तरस्था विज्ञेया अधमाः शास्त्रचक्षुषा ॥

फलाङ्गा उत्तमा ज्ञेया अन्याङ्गा मध्यमाः स्मृताः ।
अनङ्गा अधमा मन्त्रा भूयः शृणु सुरेश्वर ॥३७॥

बीजपिण्डादिसंयुक्ता उत्तमाः परिकीर्तिताः ।
बीजाद्यन्यतमान्तःस्था मन्त्रा मध्यमसंज्ञिताः ॥३८॥

अबीजादियुता ज्ञेया मन्त्रा अधमसंज्ञिताः ।
एवं मन्त्रविधा ज्ञात्वा ह्याचार्यः शास्त्रलोचनः ।
[1]यथास्वरूपतः शिष्यान् ज्ञापयेदर्थितो मनून् ॥

इति [2]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [3]षडध्वमन्त्रस्वरूपकथनं नाम
द्वाविंशोऽध्यायः

भवोपकरणानि; सर्गोपकरणभूतानि । ३६. पञ्चरात्रस्था इति । अनन्यपरसात्त्विकतम-भागवतोद्देशप्रवृत्तत्वात् तेषामुत्तमत्वम् । त्रयीमया इति । त्रैगुण्यविषयत्वाच्चेषां मध्यमत्वम् । ३७. फलाः; ज्ञानादयः ।

इति द्वाविंशोऽध्यायः

---

[1] यथानुरूपतः D. F.   [2] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B.   [3] I. omits the title

# त्रयोविंशोऽध्यायः

श्रीः—

व्यापकं यत् परं ब्रह्म लक्ष्मीनारायणं महत् ।
[1]अहंता परमा तस्य शक्तिर्नारायणी ह्यहम् ॥ १ ॥

अनुग्रहाय लोकानामहमाचार्यतां गता ।
संकर्षणस्वरूपेण शास्त्रं प्रद्योतयाम्यहम् ॥ २ ॥

पुनश्च गुरुमूर्तिस्था सम्यग्विज्ञानशालिनी ।
शक्तिमय्या स्वया दृष्ट्या करुणामन्त्रपूर्णया[2] ॥३॥

[3]पालयामि गुरुर्भूत्वा शिष्यानात्मोपसर्पिणः ।
तस्माज्ज्ञेयः सदा शिष्यैराचार्योऽसौ[4] मदात्मकः ॥

शिष्यं संज्ञापयेन्मन्त्रान् [5]यथा तदवधार्य ।
आदौ शुद्धे समे स्निग्धे देशे भूदोषवर्जिते ॥५॥

वर्णानुरूपवर्णाढ्ये गोमयेनोपलेपिते ।
धूपिते शल्यनिर्मुक्ते गन्धपुष्पाद्यलंकृते ॥ ६ ॥

पञ्चगव्येन संसिक्ते चन्दनाद्यनुलेपिते[6] ।
मुमृन्मयीं च घटिकां केवलैः कुसुमैः शुभैः ॥

प्रणवादिनमोऽन्तेन स्वेन मन्त्रेण पूजयेत् ।
व्याहृत्या परिजप्याथ [7]पूर्वया प्रणवाद्यया ॥ ८ ॥

मृदं भूमौ प्रसार्याथ गन्धधूपाधिवासितम्[8] ।
चतुरश्रं सुवृत्तं वा द्विहस्तं हस्तमेव वा ॥ ९ ॥

सुसमं मातृकापीठं कृत्वा प्रस्तारयेत्तु ताम् ।
एकैव भिन्नवर्गा या[9] देवी पञ्चदशाक्षरा ॥ १० ॥

मन्त्राणां जननी साक्षान्मम शब्दमयी तनुः ।
पद्माकारेण वा मन्त्री चक्राकारेण वा स्तरेत् ॥

पौरुषे चक्ररूपं तु पाद्मीं लक्ष्मीमनुक्रमेत् ।
अग्नीषोममयी [10]शक्तिर्विसृष्टाख्या द्विरष्टधा ॥१२॥

[11]स्वराख्यां तां लिखेत्पत्रमरं वा पूर्वदिग्गतम् ।
पृथिव्यादिपुमन्ता ये पञ्च वर्गास्तु कादयः ॥१३॥

अग्न्यादिवायुपर्यन्ते तां लिखेदरपत्रवत् ।
अन्तःस्थधारणारूपं यादिवान्तचतुष्टयम् ॥ १४ ॥

५. भूदोषाः केशनखास्थिसंसर्गजाः, ऊपरत्वादयश्च । ६. वर्णानुरूपेत्यादि । ब्राह्मणादिवर्णानुगुणसितादिवर्णयुक्ते इत्यर्थः । तथा चोक्तं परमसंहितायाम्—"ब्राह्मणस्य सिता भूमिः क्षत्रियस्यारुणा भवेत् । पीतवर्णा च वैश्यस्य कृष्णा शूद्रस्य कीर्तिता ॥" (७-५) इति । शल्यानि कण्टकादीनि । ७. केवलैः; विमर्दैः, अग्रथितैरित्यर्थः । ८. पूर्वयेति । व्याहृत्येत्यर्थः । १०. भिन्नवर्गा; कवर्गाद्यात्मना भिन्नेत्यर्थः । १३. पृथिवी ककारः ।

[1] B. omits this line.
[2] पूर्णा C.
[3] पारयामि B.
[4] आचार्यः स: D.
[5] यदयम् B. D. F. G.
[6] चन्दनपुरःपिते B. C. F. I.
[7] B. omits this and the next *pāda*.
[8] धूपादिवासितम् A.; पुष्पादिवासितम् F.
[9] वर्णाढ्य C.; वर्णा या D. F.
[10] शिवा सृष्टाख्याना द्विरष्टधा I.
[11] स्वराख्यां तां I.

उदग्गतं लिखेत् पत्रमर वा पूर्ववद्बुध ।
शाद्य क्षान्त तुरीयान्त यदुक्त ब्रह्मपञ्चकम् ॥ १५ ॥

तल्लिखेद्देशदिक्संस्थमर पत्रमथापि वा ।
शब्दाख्यं यत्पर ब्रह्म ज्योतिर्मयमनामयम् ॥ १६ ॥

ध्यायेदालोकरूपेण पर्यन्ते चक्रपद्मयो ।
प्रणवाद्यैर्नमोऽन्तैस्तैरक्षरैस्तत्त्वसञ्ज्ञकै ॥ १७ ॥

[1]प्रकृतिं त्वर्चयेत्तत्र तत्त्वरूपा तु मा बुध ।
ततस्तत्कर्णिकामध्ये चिन्तयेन्मन्त्रमातृकाम् ॥ १८ ॥

अनादिनिधना देवीमहता पुरुषोत्तमीम्[2] ।
पाशाङ्कुशधरा देवीं पद्मिनीं पद्ममालिनीम् ॥१९॥

प्रसन्ना पद्मगर्भाभा सर्वलोकमहेश्वरीम् ।
वर्णप्रक्लृप्तावयवा वर्णालकारभूषिताम् ॥ २० ॥

शब्दब्रह्म तनु विद्यात् प्रणवं तु शिर स्मरेत् ।
अ आ इति भ्रुवौ विद्यादि ई विद्यात्तु चक्षुषी ॥२१॥

उ ऊ कर्णौ ऋ ॠ नासापुटावन्त्यौ कपोलकौ ।
ए ऐ ओष्ठौ [3]च विज्ञेयौ ओ औ दशनपङ्क्तिके ॥

अ जिह्वाम समुच्चार कचवर्गौ करौ स्मरेत् ।
टतवर्गौ पदौ विद्यात् पफौ पार्श्वे स्मरेद्बुध ॥२३॥

बभौ पश्चात्पुरोभागौ म नाभिं परिचिन्तयेत् ।
प्राणोष्माणौ यरौ विद्याद्ध हार परिचिन्तयेत् ॥

वकार कटिसूत्र तु कुण्डले तु शषौ स्मरेत् ।
सकार हृदय विद्याद्धृदयस्थ तु ह स्मरेत् ॥ २५ ॥

प्रसरन्तीं प्रभा विद्यात् क्षकार विद्युदुज्ज्वलाम् ।
[4]रङ्गं नासाग्रगं विद्याद्यमाख्य हृदये स्मरेत् ॥२६॥

जिह्वामूलीयकं जिह्वामूले विद्यादनन्तरम् ।
उपध्मानीयक विद्यादोष्ठयो क्रमशस्तथा ॥ २७ ॥

शुभैर्वर्णमयै पद्मैरग्नीषोममयै कृताम् ।
बिभ्रतीं वनमाला च कण्ठात्पादावलम्बिनीम् ॥२८॥

अग्नीषोमार्ककोट्याभ स्फुरद्रत्नविभूषितम् ।
मकुट चिन्तयेद्विद्वान् [5]हकार पारमेश्वरम् ॥ २९ ॥

एव सस्मृत्य ता देवीं मातृका मन्त्रमातरम् ।
पूजयेदर्घ्यपुष्पाद्यैर्नमो मन्त्रमातृके ॥ ३० ॥

इदमर्घ्यं गृहाणेति भोगैरेवमनुक्रमात् ।
तत कृताञ्जलि प्रह्व प्रणम्याष्टाङ्गवद्भुवि ॥ ३१ ॥

पद्मस्थे पद्मनिलये पद्मे पद्माक्षवल्लभे ।
सर्वतत्त्वकृताधारे मन्त्राणा जननीश्वरि[6] ॥ ३२ ॥

व्याकुरु त्व पर दिव्य रूपं लक्ष्मीमयं मम ।
प्रार्थ्यैव प्रयतो मन्त्री स्वयं लक्ष्मीमयो भवेत् ॥३३॥

मातृकाकृतविन्यास स्वय सन्मातृकामय ।
उद्धरेदीप्सितं मन्त्र शिष्यस्योपदिशेत्तत ॥ ३४ ॥

बीजपिण्डात्मका मन्त्रा सन्त्रेषु श्रेष्ठता गता ।
तत्र श्रेष्ठानि बीजानि पिण्डेभ्योऽपि सुरेश्वर ॥३५॥

पुमान् मकार । १९ पुरुषोत्तमस्य स्त्री पुरुषोत्तमी । २२. अन्त्यौ, ऌॡवर्णावित्यर्थ । अनयोर्नपुंसकत्वान्न नाम्ना निर्देश । २६. रङ्गम्, अनुनासिकम् । ३४. मातृकेत्यादि ।

[1] प्रतिमामर्चयेत्तत्र I
[2] पुरुषोत्तमाम् A B C D
[3] तु B C. I
[4] B D I omit 3 lines from here
[5] मकारं A B
[6] ईश्वरे I

बीजेषु रत्नभूतानि [1]सप्त बीजानि वासव ।
तारकः प्रथमं बीजं द्वितीयं तारिका स्मृता ॥३६॥

तयोस्तु तेजसा तुल्यं तृतीयमनुतारिका ।
चतुर्थं तु जगद्योनिः परमं बीजमुच्यते ॥ ३७ ॥

[2]मधुघ्नं पञ्चमं बीजं षष्ठं सारस्वतं मतम् ।
महालक्ष्मीमयं बीजं सप्तमं परिकीर्तितम् ॥ ३८ ॥

स्थूलसूक्ष्मपरत्वं तु प्रतिस्वं परिकीर्तितम् ।
त्वं शक्रावहितो भूत्वा शृणु बीजान्यनुक्रमात् ॥

इति [3]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [4]मातृकाप्रकाशो नाम
त्रयोविंशोऽध्यायः

अकारादिक्षकारान्तैर्वर्णैः कृतः विन्यासः पद्मचक्रयोः निक्षेपः येन सः । ३६. तारादि-मन्त्रोद्धारक्रमोऽनन्तराध्याये वक्ष्यते ।

इति त्रयोविंशोऽध्यायः

---

[1] [illegible] L. [2] मधुघ्न: A. B. C. [3] पञ्चरात्र A.; पञ्चरात्रे B. [4] [illegible] C.

# चतुर्विंशोऽध्यायः

श्रीः[1]—

परं ब्रह्म परं धाम परं ज्योतिरनूपमम् ।
लक्ष्मीनारायणं ब्रह्म दोषशून्यं निरञ्जनम् ॥ १ ॥

एकं सर्वमिदं व्याप्य स्थितं सर्वोत्तरं महः[2] ।
अहंताहं परा तस्य ब्रह्मणः परमात्मनः ॥ २ ॥

हिताय [3]सर्वजीवानामुन्मिषन्ती स्ववाञ्छया ।
शब्दब्रह्ममयी भूत्वा मातृकामन्त्रविग्रहा ॥ ३ ॥

भवामि मन्त्ररूपाहं[4] तत्तद्वाच्यानुकारिणी ।
प्रथमंताररूपेण [5]यथास्म्येवं समुद्धरेत् ॥ ४ ॥

प्रथमं ध्रुवमादाय ततः कर्णं समुद्धरेत् ।
नाभिं समुद्धरेत्पश्चात् त्रयमेकत्र योजयेत् ॥ ५ ॥

ओमित्येतत् समुत्पन्नं प्रथमं ब्रह्मतारकम् ।
बिन्दुना भूषयेत् पश्चान्नादेन तदनन्तरम् ॥ ६ ॥

ध्यायेत् संततनादेन तैलधारामिवाततम् ।
एतत्तद्वैष्णवं रूपं त्र्यक्षरं ब्रह्म शाश्वतम ॥ ७ ॥

अनिरुद्धस्त्वकारोऽत्र प्रद्युम्नः पञ्चमः स्वरः ।
संकर्षणो मकारस्तु वासुदेवस्तु बिन्दुकः ॥ ८ ॥

चतुर्णामविभागस्तु नादस्तत्र सुरेश्वर ।
नादस्य या परा काष्ठा साहंता परमेश्वरी ॥ ९ ॥

शक्तिः सा परमा सूक्ष्मा [6]नादान्तगगनाह्वया ।
शब्दब्रह्ममयी सूक्ष्मा साहं सर्वावगाहिनी ॥ १० ॥

विरामे सति नादस्य [7]यः स्फुटीभवति [8]स्वयम् ।
ज्योतिस्तत्परमं ब्रह्म लक्ष्मीनारायणाह्वयम् ॥ ११ ॥

एतत्ते वैष्णवं धाम कथितं पौरुषं परम् ।
शान्तमस्यैव यद्रूपं तस्य तत्त्वं निशामय ॥ १२ ॥

[9]विसृष्टिं पूर्वमादाय सूर्यमन्ते नियोजयेत् ।
संनिकर्षे परे जाते तदोमित्युदितं महः ॥ १३ ॥

एतत् तत् परमं धाम शक्तिसंहारलक्षणम् ।
स्मर्यमाणं परं तत्त्वं प्रकाशयति यद् ध्रुवम् ॥१४॥

१०. नादान्तेत्यादि । पूर्वोक्तस्य नादस्यान्ते यत् गगनं दहराकाशः, तद्रूपेत्यर्थः । देव्या दहराकाशरूपत्वात् परब्रह्मणस्तन्नियतवसतित्वं श्रूयते—"तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति । श्रीसात्वते च—"नादावसानगगने देवोऽनन्तः समन्वितः" (२-६९) इति । १३. विसृष्टिः विसर्गः । सूर्यः अंकारः । अ.+अं इति स्थिते "अतो रोः" इत्युत्वे गुणे पूर्वरूपे च ओमिति भवति । १४. विसर्गबिन्दुसयोगरूपत्वात्

[1] श्रीरुवाच I.
[2] महत् A B. C. D. G
[3] सर्वभूताना D
[4] भूताहं D.
[5] यथास्योऽयं B. C.
[6] नादान्ता A. I.
[7] या D.
[8] ध्रुवम् B. C. D.
[9] विसृष्टं B D.

संहृत्य सर्वसभार शुद्धाशुद्धाध्वसभवम् ।
सृष्टौ समुद्यता शक्ति सूर्ये पुसि सनातने ॥ १५ ॥

परमे भोक्तृरूपे सा निधाय प्रतिसचरम् ।
अग्नीषोममयाद्धामात् स्थूलात्सा प्रतिनिर्गता ॥१६॥

दापत्यं मध्यम शश्वद्बिन्दुनादमय श्रिता ।
शक्ति शान्तात्मक दिव्य [1]सूक्ष्मदापत्यमाश्रिता ॥

प्रतितिष्ठति सा दिव्ये व्यापके परमात्मनि ।
अस्य मात्रा विधानज्ञै सार्धास्तिस्र उदाहृता ॥

त्रयोऽग्नयस्त्रयो [2]लोकास्त्रयो वेदास्त्रयो गुणा ।
त्रयो देवास्त्रयो व्यूहास्त्रयो वर्णास्त्रय स्वरा ॥१९॥

त्रितय त्रितय शक्र यत् किंचिज्जगतीगतम् ।
तदादि त्रितय ज्ञेयमर्धमात्रा निरञ्जना ॥ २० ॥

सर्वे शब्दा अकारोत्था उकारात्तेजसा त्रयम् ।
पृथिव्यादि प्रकृत्यन्त मकारोत्थ पुरदर ॥ २१ ॥

ज्योतिर्मय्यर्धमात्रा सा चिन्मयी परमा कला ।
युग्मि स्वरै सबिन्द्वन्तैराद्यन्तस्वरषट्कयो ॥

ज्ञानादिगुणषट्कान्तैरङ्गक्लृप्तिरमुष्य तु ।
नाभौ पृष्ठे तथा बाह्वोरूरुजानुपदेषु च ॥ २३ ॥

तारपूर्वान् गुणान् भूयो विन्यसेत् पाकशासन ।
एव विन्यस्य तन्मन्त्रमङ्गोपाङ्गसमन्वितम् ॥ २४ ॥

स्वदेहे गुरुरात्मस्थ चिन्तयेत् पुरुषोत्तमम् ।
विश्वादिलयपूर्वं तु यथावत् तन्निबोध मे ॥ २५ ॥

विश्व जाग्रत्पदेशान सर्वेन्द्रियसमीरकम् ।
भोक्तार शब्दपूर्वाणा पञ्चाना विषयात्मनाम् ॥ २६ ॥

[3]अनिरुद्धात्मक [4]त च चिन्तयेत् प्रथमाक्षरम्[5] ।
त सोपकरण देवमकारे प्रविलाप्य तु ॥ २७ ॥

अकार तैजसे देवे प्रद्युम्ने स्वप्नवर्त्मगे[6] ।
अन्त करणवृत्तीना प्रेरके प्रविलापयेत् ॥ २८ ॥

त सोपकरण देवमुकारे प्रविलापयेत् ।
उकार चेश्वरे प्राज्ञे सकर्षणतनुस्थिते ॥ २९ ॥

सुषुप्तिपदगे शश्वत् प्राणादिप्रेरके विभौ ।
विलाप्य त च देवेशं तुर्यसस्थेऽर्धमात्रके ॥ ३० ॥

ज्ञानानन्दमये देवे वासुदेवे विलापयेत् ।
तुर्यातीते च तत्तुर्यं लक्ष्मीनारायणात्मनि ॥ ३१ ॥

प्रविलाप्य स्वय दिव्यामहंता वैष्णवीं श्रयेत् ।
तन्मयस्तादृश प्राप्य लयस्थान तत क्रमात् ॥३२॥

सृष्टिसहारलक्षणमित्यर्थ । १५. सूर्ये पुसि, बिन्दुरूपे । २० आदि त्रितयमिति । अकारादि त्रयमित्यर्थ । अर्धमात्रा बिन्दु । २१ तेजसा त्रयम्, सूर्यसोमाग्निरूपम् । २२ परमा कला, नाद । आदिस्वरषट्कम् अकाराद्यूकारान्तम् । अन्तस्वरषट्कम् ऌकाराद्योकारान्तम् । तेषु युक्स्वरा आ, ई, ऊ, ॡ, ऐ, औ इति । तै सबिन्दुभि-रङ्गन्यास । उपाङ्गन्यासस्तु सतारे ज्ञानादिपदे । २६ विश्वेति जाग्रत्पदस्थात्मनाम । २७. अनिरुद्धप्रद्युम्नसकर्षणवासुदेवलक्ष्मीनारायणा विश्वतैजसप्राज्ञतुर्यतुर्यातीतसज्ञकजाग्रदा-

[1] सूक्ष्मा D
[2] वेदा स्त्रयोलोका B F
[3] अनिरुद्धाभिधानं च I
[4] तत्त्वं A B G
[5] प्रथमाक्षरे I
[6] सद्मनि I

जागरामनतीर्याथ [1]दीक्षित शिष्यमग्रत ।
सद्गुरुर्मन्मयो भूत्वा तारमध्यापयेत्त्रयम् ॥ ३३ ॥

साङ्गोपाङ्गन्तम शश्वत् ससमाधि सविस्तरम ।
स च दद्यात् स्वमात्मान दक्षिणा गुरवे धनै ॥

[2]ल्ब्धानुज्ञस्तत कुर्वन् पौरश्चरणिक विधिम् ।
महानदीतट गत्वा सिद्धायायतन तु वा ॥ ३५ ॥

पालाश [3]वा वन सम्यक्पर्यन्ताद्दष्टभूतलम् ।
स्नान त्रिपवण कुर्वन् ब्रह्मचारी जितेन्द्रिय ॥

पयोयावस्भैक्षाणामश्ननन्यतम सकृन् ।
कुशोच्चये निपण्ण सन् काशचीरकुशेशय ॥३७॥

पालाश [4]धारयेद्दण्ड सवीत कृष्णचर्मणा ।
मच्चित्तो मन्मयो भूत्वा गुर्वादिष्टेन वर्त्मना ॥ ३८ ॥

[5]नित्य योगपरो भूत्वा सम्यग्ज्ञानसमाधिमान् ।
दशलक्ष जपेन्मौनी तार ससारतारकम ॥ ३९ ॥

दशाश जुहुयान् पर्ण समिद्भि सर्पिपापि वा ।
प्रीता तस्य प्रकाशेऽहमहन्ता वैष्णवी परा ॥ ४० ॥

साधकस्य तत सम्यक् सद्विवेकिनि चेतसि ।
लक्ष्मीनारायणाख्य तत् सामरस्य प्रकाशते ॥४१॥

जीवन्नेव भवेन्मुक्त पुनीते चक्षुपा जगत् ।
सिद्धा स्युस्तस्य मन्त्रास्ते लौकिका वैदिकाश्च ये ॥

स्नात सर्वपु वेदेपु विद्यासु सकलासु च ।
सिद्धान्तेपु च सर्वेपु तीर्थेपु च भवेदसौ ॥ ४३ ॥

प्रयोगा सर्वमन्त्राणा यावन्तो यान्शाश्च ये ।
तावन्तस्तान्शास्तेऽस्य प्रयोगा इति निर्णय ॥४४॥

अस्य व्यान्तयस्तिस्रो वर्णत्रयसमुद्गता ।
पञ्च समुद्गता ह्यस्या सावित्री सर्वपावनी ॥

अस्या पञ्चयस्त्रयो वेदा ऋग्यजु सामलक्षणा ।
इत्येतन्मयमेवेद लौकिक वैदिक वच ॥ ४६ ॥

यथा न्यग्रोधधानायामन्तर्भूतो महाद्रुम ।
तथेद वाङ्मय विश्वमस्मिनन्त स्थित सदा ॥ ४७ ॥

एतदाद्य महाबीज शब्दाना प्रकृति परा ।
शब्दब्रह्म पर धाम पवित्र परम महत् ॥ ४८ ॥

ओंकार प्रणवस्तारो हसो नारायणो ध्रुव ।
वेदात्मा सर्ववेदादिरादित्य सर्वपावन [6] ॥ ४९ ॥

मोक्षदो मुक्तिमार्गश्च सर्वसधारणश्रम [7] ।
एवमादीनि नामानि शास्त्रे शास्त्रे विचक्षणै ॥ ✓

धविष्ठातारो देवा । ३२ तन्मय , अहतामय । ३३ लयस्थानात् सृष्टिस्थानानतरण-
चिन्तामाह—जागरामिति । ३८ पुरश्चरण नाम गुरोर्लब्धस्य मन्त्रस्य वीर्यवत्तरत्वसपाद-
नायानुष्ठेयो जपहोमादि । तच्च पञ्चाङ्गम् । तथा चोक्तम्—"जपहोमौ तर्पण चाभिषेको विप्र
भोजनम् । पञ्चाङ्गोपासन लोके पुरश्चरणमुच्यते ॥" इति । ४० दशाशमिति । लक्षकृत्व
इत्यर्थ । ४७ तारस्य समस्तवाङ्मयरूपत्वे दृष्टान्त उच्यते—यथेति । धाना सूक्ष्म बीजम् ।
महाद्रुमस्य बीजे सूक्ष्मतयावस्थानकथन चात्र साख्यसत्कार्यवादमनुरुध्य । औपनिषदमते तु
धानाया महाद्रुमस्य चोपादानत्वात् सत्कार्यवाद इति अवस्थाभेदात् कार्यकारणभावव्यवहार

[1] दृष्टि A C
[2] लब्ध्वानुज्ञा F
[3] पावन A I
[4] धारयन् B F
[5] नित्ययाग B नित्ययाग I
[6] पावन B C
[7] सधारण पर I

[1]अधीतानि महापुण्यान्योंकारस्य महात्मन ।
इद शरणमज्ञानामिदमेव विजानताम् ॥ ५१ ॥

अयमन्विच्छता स्वर्गं पोत पार तितीर्षताम् ।
हकारौकारसयोगादय प्रासादसज्ञक ॥ ५२ ॥

पिण्डोऽय सर्वतत्त्वाना पिण्डभूत सनातन ।
साधन प्रतिपत्तिश्च विनियोगोऽथ धारणा ॥५३॥

बीजस्येव सुरेशान प्रासादस्यास्य विद्धि तत् ।
अस्यैव सज्ञामन्त्रोऽय हसो नाम महामनु ॥५४॥

भोक्तार प्रथम वर्णं विद्धि भोग्य द्वितीयकम् ।
नारायणमय पूर्वमश्वर श्रीमय परम् ॥ ५५ ॥

अग्नीषोमात्मकावेतौ वर्णौ विद्धि सनातनौ ।
अनयोरन्तरा शक्र विन्दुधर्मौ व्यवस्थितौ ॥ ५६ ॥

आधारान्मूर्धपर्यन्त भोक्तार वर्णमुन्नयेत् ।
विसृजेन्मुखतो वर्णं द्वितीय भोग्यसज्ञकम् ॥५७॥

सर्वो सृष्टि कृता तेन हसोच्चारप्रयोगत ।
अजपेय समाख्याता विद्या सर्वाङ्गशोभना ॥५८॥

चतु षष्ट्यधिकाशीतिकोटिसख्यासु योनिषु ।
तद्भेदेषु च मन्त्रोऽय स्वयमुच्चरते सदा ॥ ५९ ॥

निश्वासेन सम विद्या समुदेत्यन्तरुज्ज्वला ।
उदयास्तमयावस्या श्वासनिश्वासतुल्यकौ ॥ ६० ॥

षष्टि श्वासा भवेत्प्राणा षट् प्राणा नाडिका मता ।
नाड्य षष्टिरहोरात्रमेव कालक्रियागति ॥ ६१ ॥

एवं हसोदयाद्विद्धि सहस्राण्येकविंशतिम् ।
शतानि षट् च देवेश तावन्त स्युर्जपा कृता ॥

किंतु सकल्पन कुर्यादहरादौ मनीषया ।
एवंसख्यान्[2] जपानस्य करिष्यामीति बुद्धिमान् ॥

विन्यसेत् पञ्च चाङ्गानि तेषा रूप निबोध मे ।
सूर्यसोमौ चतुर्थ्यन्तौ नम स्वाहासमन्वितौ ॥

निरञ्जनौ निराभासौ वौषड्हुफडन्तकौ ।
फडन्त मूलमेवास्त्रमित्यङ्गान्यस्य पञ्च तु ॥ ६५ ॥

अयमेव विपर्यस्त परमात्ममनु स्मृत ।
[3]स्मृत्वा शक्तिं [4]ससभारा सूर्ये भोक्तरि सनयेत् ॥

शिष्टं प्रणववच्चित्यमिति सज्ञामनोर्विधि ।
पञ्चमन्त्रास्त्रयोऽस्य स्युर्विधाने पाञ्चरात्रिके ॥ ६७ ॥

विष्णवे नम इत्येव नमो नारायणाय च ।
नमो भगवते पूर्वं वासुदेवाय चेत्यपि ॥ ६८ ॥

इति च भिदा । ५५ प्रथम वर्णमिति । हकारमित्यर्थ । द्वितीयकमिति । सकारमित्यर्थ । ५६ विन्दुधर्मौ सृष्टिसहारौ । ५७ आधारस्थानमारभ्य मूर्धपर्यन्तगामिना पवनेन हकारमुच्चरेत् । सकार मुखतो विसृजेत् । ५८ हसमन्त्रस्याजपामन्त्र इति नाम । ६२ हसमन्त्रे सकृज्जप्ते सति २१६०० सख्याका जपा कृता भवन्तीति भाव । ६३ एवसख्यानिति । इयत्सख्याकानित्यर्थ । ६४ सूर्यसोमौ हकारसकारौ । ६६ विपर्यस्त इति । सोऽहमिति मन्त्र इत्यर्थ । सकारेण शक्तिमादाय हकारे परमात्मनि योजयेदित्यर्थ । ६७. त्रय इति । यद्यपि चत्वारो मन्त्रा वक्ष्यन्ते । तथापि तेषु कचिद्भेदमादाय त्रयाणा पृथक् निर्देश क्रियते । ६८. मन्त्रस्वरूपाण्याह—विष्णवे इत्यादि । आदौ नमो भगवते इति । अन्ते

[1] कथितानि A G [2] सैक्त्तो B C. F [3] हुत्वा A B [4] सुसंस्मृतां A B C

जित ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ६९ ॥

पदमन्त्रश्चतुर्थोऽय प्रणवस्य पुरंदर[1] ।
ओंकारसहितानेतान् मन्त्रान् पूर्वविदो विदु ॥७०॥

ज्ञानादिगुणसयुक्तैरक्षरै प्रणवादिभि [2] ।
नमोऽन्तैरङ्गक्लृप्ति स्यात्तथैवोपाङ्गकल्पना ॥

न्यूनाक्षरस्य मन्त्रस्य वर्णेन चरमेण तु ।
उपाङ्गक्ल्पना कार्या [3]तत्तद्गुणपदैर्युता ॥ ७२ ॥

[4]तथैव स्फीतवर्णस्य शिष्टैस्तु द्वादशाधिकै ।
समस्तैश्चरमोपाङ्ग कल्पयेत्तेजसा सह ॥ ७३ ॥

केवलस्तारकश्चैव चत्वारश्च तदादिका ।
पञ्चैते व्यापका मन्त्रा पाञ्चरात्रे प्रकीर्तिता ॥

[5]नासाध्य किंचिदस्तीह मन्त्रैरेभिर्महात्मभि ।
निश्रेणी पञ्चपर्वैषा परब्रह्माधिरोहणे ॥ ७५ ॥

एषा दिव्या महासत्ता पञ्चमन्त्री तु मन्मयी ।
अर्चनाज्जपतो ध्यानादिमा[6] सम्यक् समाश्रित ।
स्वा सत्ता वैष्णवीं प्राप्य पर ब्रह्माधिगच्छति ॥ ✓

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [8]तारप्रकाशो नाम
चतुर्विंशोऽध्याय

वासुदेवायेति। नमो भगवते वासुदेवायेति मन्त्र इत्यर्थ । ७२. न्यूनाक्षरस्येति। षडक्षराष्टाक्षर मन्त्रयो न्यूनाक्षरत्वम् । तत्र चरमाक्षरेण पूरण कर्तव्यमित्यर्थ । ७३. स्फीतवर्णस्येति । अधिकवर्णस्येत्यर्थ , यथा जित ते इति मन्त्रे ।

इति चतुर्विंशोऽध्यायः

---

[1] मर्मर्तित I
[2] प्रणवादिरै I
[3] तत्तत्पदगुणै B F
[4] तथैवाधिक I
[5] नानासाध्य किंचिदस्ति I
[6] अमुं D F
[7] श्रीपञ्चरात्र A, श्रीपाञ्चरात्रे B
[8] तारक I

# पञ्चविंशोऽध्यायः

श्रीः[1]—

इत्थं ते कथितः शक्र तारकस्यैष विस्तरः ।
संसारतारिकाया मे तारिकायाः शृणु क्रमम् ॥

वर्णानां [2]विधिसिद्ध्यर्थं संज्ञाः पूर्वं निशामय ।
श्रुतासु निधिवद्यासु विधिर्मान्त्रः[3] प्रवर्तते ॥ २ ॥

अकारश्चाप्रमेयश्च प्रथमो व्यापकः स्मृतः ।
आदिदेवस्तथाकार आनन्दो गोपनः स्मृतः ॥ ३ ॥

रामसंज्ञ इकारश्च इन्द्र इष्टः प्रकीर्तितः ।
ईकारः पञ्चबिन्दुर्वै विष्णुर्माया पुरंदर ॥ ४ ॥

उकारो भुवनाख्यश्च उद्दाम उदयस्तथा ।
ऊकार ऊर्जो लोकेशः प्रज्ञाधाराख्य एव च ॥५॥

सत्यश्च ऋतधामा च ऋकारः स तु चाङ्कुशः ।
ॠकारो विप्रराज्यश्च ज्वाला चैव प्रसारणम् ॥६॥

लिङ्गात्मा भगवान् प्रोक्तो ऌकारस्तारकः स्मृतः ।
ॡकारो दीर्घघोणश्च[4] देवदत्तस्तथा[5] विराट् ॥७॥

त्र्यश्र एकारसंज्ञश्च जगद्योनिरविग्रहः ।
ऐश्वर्यं योगधाता[6] च ऐ स ऐरावणः स्मृतः ॥ ८ ॥

ओकार ओतदेहश्च[7] ओदनश्चैव विक्रमी ।
औकारोऽथ भूधराख्यश्च औ स्मृतो ह्यौपधात्मकः ॥

त्रैलोक्यैश्वर्यदो व्यापी व्योमेशोऽङ्कार एव च ।
विसर्गः सृष्टिरित्युक्तो हःकारः परमेश्वरः ॥ १० ॥

[8]कमलश्च करालश्च ककारः प्रकृतिः परा ।
खकारः सर्वदेहश्च वेदात्मा विश्वभावनः ॥ ११ ॥

[9]गदध्वंसी गकारस्तु गोविन्दश्च गदाधरः ।
घकारस्त्वथ घर्मांशुस्तेजस्वी दीप्तिमांस्तथा ॥ १२ ॥

ङकार एकदंष्ट्राख्यो भूतात्मा भूतभावनः ।
चकारश्चञ्चलश्चक्री[10] चन्द्रांशुः स तु कथ्यते ॥१३॥

छन्दःपतिश्छलध्वंसी[11] छकारश्छन्द एव च ।
जन्महन्ताजितश्चैव जकारश्चैव शाश्वतः ॥ १४ ॥

झकारो झषसंज्ञश्च सामगः सामपाठकः ।
ईश्वरश्चोत्तमाख्यश्च ञकारस्तत्त्वधारकः ॥ १५ ॥

चन्द्री टकार आह्लादो विश्वाप्यायकरस्तथा ।
धाराधरष्ठकारश्च नेमिः कौस्तुभ उच्यते ॥ १६ ॥

दण्डधारो डकारश्च मौसलोऽखण्डविक्रमः ।
ढकारो विश्वरूपश्च वृषकर्मा प्रतर्दनः ॥ १७ ॥

णकारोऽभयदः शास्ता वैकुण्ठ इति[12] कीर्तितः ।
[13]तकारस्तारलक्ष्मा च वैराजः स्रग्धरः स्मृतः ॥

[14]धन्वी भुवनपालश्च थकारः सर्वरोधकः ।
दत्तावकाशो दमनो दकारः शान्तिदः स्मृतः ॥१९॥

धकारः शार्ङ्गभृद्धर्ता माधवश्च प्रकीर्तितः ।
नरो नारायणः पद्मा नकारः समुद्राह्वः ॥ २० ॥

[1] भगवान् I.
[2] सिद्धि B. E.
[3] मन्त्रः A. B. C. I.
[4] घोणश्च A.
[5] त्रिगो I.
[6] दाता A. B. C.
[7] देहश्च C. D. G.
[8] करिमश्च B ; कमलश्च D.
[9] गद A. B. E.
[10] चक्र: A. D.
[11] ध्वंसी B.
[12] वैकुण्ठः हरि B. C. F. I.
[13] D omits 4 lines from here.
[14] B. and C. omit 4 lines from here.

पकार पद्मनाभश्च पवित्र पश्चिमानन ।
फकार फुल्लनयनो लाङ्गली श्वेतसज्ञित [1] ॥ २१ ॥

वकारो वामनो ह्रस्व पूर्णाङ्ग स च कथ्यते ।
[2]भल्लातको भकारश्च ज्ञेय सिद्धिप्रदो ध्रुव ॥

मकारो मर्दन काल प्रधान परिपठ्यते ।
चतुर्गतिर्यकारश्च सुसूक्ष्म शङ्ख उच्यते ॥ २३ ॥

अशेषभुवनाधारो रोऽनल कालपावक ।
लकारो विबुधाख्यश्च धरेश पुरपेश्वर ॥ २४ ॥

वराहश्चामृताधारो वकारो वरुण स्मृत ।
शकार शकर शान्त पुण्डरीक प्रकीर्तित ॥२५॥

[3]नृसिंहश्चाग्निरूपश्च षकारो भास्करस्तथा ।
सकारस्त्वमृतस्तृप्ति सोमश्च परिकीर्तित ॥ २६ ॥

[4]सूर्यो हकार प्राणस्तु परमात्मा प्रकीर्तित ।
अनन्तेश क्षकारस्तु वर्गान्तो गरुडस्तथा[5] ॥

अशेषसज्ञा वर्णानामित्येता कीर्तिता मया ।
अनुलोमविलोमेन वर्ण्या वर्णस्य वै पुन ॥ २८ ॥

सज्ञा सख्या[6] च या शक्र सामान्या सा महामते ।
चिदशा सर्व एवैते वर्णा भास्वरविग्रहा ॥२९॥

कारण सर्वमन्त्राणा लक्ष्मीशक्त्युपबृंहिता ।
स्तुता सपूजिता ध्याता [7]वर्णा सज्ञाभिरादरात् ॥

प्रयच्छन्ति परामृद्धिं विज्ञान भावयन्त्यपि ।
परस्पराङ्गभाव च मन्त्रोत्पत्तौ व्रजन्त्यमी ॥ ३१ ॥

चराचरेऽस्मिस्तन्नास्ति यदमीभिर्न भावितम् ।
नित्या यद्यपि ता दिव्या मन्त्राणा मूर्तय परा ॥

तथाप्येवंविधैर्वर्णैर्भाविता इति चिन्तना[8] ।
भवन्ति पूर्णसामर्थ्या मन्त्रा शास्त्रनिदर्शनात् ॥

आलम्बन धिया चैव भवन्त्येव महामते ।
अभागेऽपि यथा व्योम्नि धिया भाग प्रकल्प्यते ॥

सौकर्याय तथा मन्त्रे वर्णभागोऽनुचिन्त्यते ।
कृत्वैव भावना व्याप्तिं वर्णाना पूजन त्रिधा ॥

भूमौ पद्मे तथा[9] देव्यास्तनौ[10] मन्त्रान् समुद्धरेत्
परमात्मानमादाय योजयेत् कालवह्निना ॥ ३६ ॥

त्रैलोक्यैश्वर्यदोपेतमायामस्मिन्नियोजयेत् ।
इय सा परमा शक्तिर्वैष्णवी सर्वकामदा ॥ ३७ ॥

सत्ता पूर्णा[11] चिदानन्दा मम मूर्तिर्निरन्तरा ।
इय सा परमा निष्ठा या सा ब्रह्मविदा ध्रुवा[12] ॥

अस्या निष्ठाय तत्त्वज्ञा विशन्ति ब्रह्म मन्मयम् ।
सैषा तत्त्वविदा मुख्यै शास्त्रे शास्त्रे विचिन्त्यते ॥

ओत प्रोतमनुष्या वै जगच्छब्दार्थतामयम् ।
अनयैव सदा सार्थै सत्यायेऽह सनातनी ॥

२८ सज्ञायामनुलोमेन सख्याया विलोमेन चेत्यर्थ । "अङ्काना वामतो गति" इति प्रसिद्धम् । ३६. तारिकामन्त्रमुद्धरति—परमात्मानमिति । परमात्मा हकार । कालवह्नि रेफ । माया ईकार । त्रैलोक्यैश्वर्यद अनुस्वार । एषा योगे ह्रीं इति तारिकामन्त्र ।

[1] सज्ञक B C F I
[2] मल्लातक B C E
[3] F om ts 2 l nes from here
[4] सूर्यो A F G
[5] स्मृत A I
[6] संख्या संज्ञा A
[7] वर्णसंज्ञाभि A
[8] चिन्तना C चिन्तनात् I
[9] अथवा D F
[10] तता I
[11] पूर्ण F I
[12] विदस्य वा F

अनयैव समाधिस्थैः समाधीये समाधिना ।
अभिधीयेऽनयैवाहं शैवैः षट्त्रिंशदन्तिमा ॥ ४१ ॥

महाराज्ञी तथैवाहमनयैव त्रयी परा ।
ऋग्यजुःसामसंघाते[1] चिन्त्ये[2] सौरे च मण्डले ॥

तरुणी रूपसंपन्नां सर्वावयवसुन्दरीम्[3] ।
अनयैव व्यवस्यन्ति लोकायतविचक्षणाः ॥ ४३ ॥

क्षणभङ्गविधानैश्चिन्त्ये निर्विषया च धीः ।
आर्हतैश्चानयैवाहं यक्षीनाम्ना सदोदिता[4] ॥ ४४ ॥

परमा तारिका शक्तिस्तारिणी तारिकाकृतिः ।
लक्ष्मीः पद्मा महालक्ष्मीस्तारा गौरी निरञ्जना ॥

हृल्लेखा परमात्मस्था या शक्तिर्भुवनेश्वरी ।
चिच्छक्तिः [5]शान्तिरूपा च घोषणी[6] घोषसंभवा ॥

कामधेनुर्महाधेनुर्जगद्योनिर्विभावरी ।
एवमादीनि नामानि शास्त्रे शास्त्रे विचक्षणैः ॥

तारिकाया निरुक्तानि वेदे वेदे च पण्डितैः ।
अस्या एवापरा मूर्तिर्विज्ञेया त्वनुतारिका ॥४८॥

शान्तं नियोजयेत् स्थाने पूर्वस्य परमात्मनः ।
शेषमन्यत्समं[7] ह्येषा तनुर्मेऽन्यानुतारिका ॥४९॥

तारिकायामिवास्यां च विज्ञेयं वैभवं महत् ।
इमे शक्ती परे दिव्ये मम तन्वौ पुरंदर ॥ ५० ॥

यत्किंचिदेतया साध्यं साधनीयं तदन्यया ।
इमे पूर्वापरीभावं व्रजतोऽन्योन्यवाञ्छया ॥
सम्यक्साधयतश्चैव साधकानामभीप्सितम् ॥५१॥

इति [8]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [9]तारानुताराप्रकाशो नाम
पञ्चविंशोऽध्यायः

४९. शान्तः शकारः । अन्यत् सममिति । तारिकया समम् । रीं इति योजनीयमित्यर्थः ।
श्री इत्यनुतारिकामन्त्रः ।

इति पञ्चविंशोऽध्यायः

---

[1] संख्याते C. F. [2] चिन्त्या A. [3] शोभिनीम् I.
[4] उदिता सदा D. I. [5] शान्त B. D. [6] घोरिणी D.
[7] एतत्समम् D. [8] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B. [9] तारकानुताराप्रकाशः G.; I. omits the title.

# षड्विंशोऽध्यायः

शक्र —

पर ब्रह्म पर धाम पद्मस्थे पद्ममालिनि ।
नमस्ते पद्मजे पद्मे गोविन्दगृहमेधिनि ॥ १ ॥

द्वे एते कथिते देवि तव तन्वौ सनातने[1] ।
[2]विशेषस्त्वस्ति वा कश्चिदनयो सूक्ष्मरूपत ॥

श्री —

एकमादौ पर तत्त्व लक्ष्मीनारायणात्मकम् ।
पूर्णस्तिमितषाड्गुण्य स्वच्छस्वच्छन्दचिद्घनम् ॥

तस्याह परमा शक्ति सर्वावस्थानुसारिणी ।
[3]देवी सा परमा दिव्या स्थूलसूक्ष्मपराह्वया ॥ ४ ॥

मम तन्वाविमे शक्ती तारिका चानुतारिका ।
दुहाते सकलान् कामानुभे एते[4] पुरंदर ॥ ५ ॥

उभे एते मते दिव्ये उभे निष्ठे परे स्मृते ।
उभे सस्था मते[5] सर्वा उभे ते विष्णुवल्लभे ॥ ६ ॥

उभे एते विचिन्त्याथ गच्छन्ति परमा गतिम् ।
तत्त्व तु परम सूक्ष्म गदन्त्या मे निशामय ॥ ७ ॥

पर ब्रह्म तत शान्त ततो नाद इति क्रम ।
सर्वत्रावस्थिता [6]साह निमेषोन्मेषरूपिणी ॥ ८ ॥

आद्य यत् परम ब्रह्म सूक्ष्मं स्तिमितशक्तिकम् ।
तारस्तत्र प्रतिष्ठाय तनोति वितता गतिम् ॥ ९ ॥

भवतो ब्रह्मणो योऽयमुन्मेष परमात्मन ।
भवज्ज्ञानात्मके तस्मिंस्तारिका प्रतितिष्ठति ॥ १० ॥

ब्रह्मणस्त्ववरोहो य शान्तरूप सिसृक्षया ।
शान्ताख्ये भावभूयिष्ठे तस्मिन्नास्तेऽनुतारिका ॥

द्वितीयस्त्ववरोहो य शक्त्याख्यो भाव ऊर्जित ।
वाग्भवादीनि बीजानि तत्र तिष्ठन्ति वासव ॥ १२ ॥

एतावाननयोर्भेद प्रोक्तस्ते सूक्ष्मधीमय ।
वाग्भवादीनि बीजानि गदन्त्या मे निशामय ॥

त्रैलोक्यैश्वर्यदोपेतमैश्वर्यं वर्णमुद्धरेत् ।
जगद्योनिरिद बीज वाग्भवाख्यमुदाहृतम् ॥ १४ ॥

सैषा कुण्डलिनी शक्तिर्यस्या कुण्डलित जगत् ।
शब्दशक्तिस्वरूपेण यथा[7] तदवधारय ॥ १५ ॥

ई माया परमा शक्तिर्जगद्योनिर्निरञ्जना ।
अप्रमेयस्य सा हि श्रीर्गृहिणी गृहमेधिन ॥ १६ ॥

अस्या पूर्वमिकार तु योजयेत् सूक्ष्मचक्षुषा ।
[8]इत्थं यदिष्ट यद् द्रव्य यत्तत्तत्र प्रतिष्ठितम्[9] ॥

१४. वाग्भवबीजमाह—त्रैलोक्येत्यादिना । ऐश्वर्यम् ऐकार । तेन सहानुस्वारयोगे ऐं इति बीजमन्त्र । अस्य जगद्योनित्वमनन्तर वक्ष्यते । १५. यस्या कुण्डलित जगदिति कुण्डलिनीशब्दस्य योगव्युत्पत्तिरभिप्रेता । १६-१८. ऐकारस्य वर्णचतुष्टयसमाहाररूपत्व-

[1] सनातनि B C
[2] विशेषोऽन्यस्ति D I
[3] अद्दता I
[4] कामानुगावेते I
[5] उभे A B C.
[6] मान्ती A
[7] सर्वं A.
[8] F omits 2 lines from here
[9] तत्तत्र प्रतितिष्ठति I.

आनन्दमस्य पूर्वं तु चिन्तयेत् सूक्ष्मचक्षुषा ।
अप्रमेय तत पूर्वं योजयेत् सूक्ष्मचक्षुषा[1] ॥ १८ ॥

[2]शक्तिरेषा जगद्योनिस्त्रैलोक्यैश्वर्यदोज्ज्वला ।
अप्रमेयादनाद्यन्ताद्व्यापकात् परमात्मन ॥ १९ ॥

गोपनी सर्वभूताना शक्तिरानन्दनिर्भरा ।
इच्छाज्ञानक्रियारूपैरिकारोत्थै समन्विता ॥ २० ॥

त्रैलोक्यैश्वर्यदा देवी विष्णुपत्नी जगत्प्रसू ।
इति वाच्या जगद्योनिर्बीजस्या जा विचिन्तयेत् ॥

[3]रति क्रीडाभिधा लोके क्रीडा च स्यात् क्रिया मम ।
इन्धन दीपन ज्ञानमिच्छा चेकारदर्शिता[4] ॥ २२ ॥

त्रैलोक्य तु त्रयो लोकास्ते च जीवास्त्रिधा स्थिता[5] ।
तेषामैश्वर्यदानेन त्रैलोक्यैश्वर्यदाद्भिता[6] ॥ २३ ॥

अप्रमेयादिना लोकान् वितत्य भुवनाध्वना ।
तस्मिन्नेव परे भूयो व्योमेशे परमात्मनि ॥ २४ ॥

सतिष्ठते परेत्येवमुदयास्तमयौ मम ।
ईदृशीय महाविद्या जगद्योनिर्गिरा प्रसू ॥ २५ ॥

पञ्चमी कामसूर्निद्या कामबीजापराह्वया ।
[7]प्राद्युम्नी परमा शक्तिस्तस्या रूप निबोध मे ॥२६॥

मध्यम गुणतत्त्वाना यत् प्रोक्त पश्चिमाननम् ।
रञ्जन [8]सत्त्वतमसोभागेनाल्पेन रञ्जितम् ॥ २७ ॥

सा परा प्रकृति काख्या कल्पयन्ती जगद्विधिम्[9]
पुरुषेश्वरयोगेन सा सृष्ट्यै समकल्पते ॥ २८ ॥

अव्यक्तपुरुषेशाख्यरूपत्रयविभाविनी ।
माया श्री सा पुनर्देवी व्योमेशे प्रतितिष्ठति ॥२९॥

[10]इति रूपप्रभावौ तौ कामबीजस्य दर्शितौ ।
षष्ठीं सारस्वतीं विद्या गत्वा मे निशामय ॥३०॥

प्रज्ञाधारो ह्यह शक्र प्रकृष्टज्ञानजन्मभू ।
साह प्रज्ञाप्रसूर्विष्णोरुदयेन समन्विता ॥ ३१ ॥

आनन्द योजयेत् तस्या पुरस्तात् सूक्ष्मया दृशा ।
अप्रमेयमत पूर्वं भावयेत् सूक्ष्मया दृशा ॥ ३२ ॥

अप्रमेयोन्विता साह महानन्दमयी शुभा ।
आधारभूता प्रज्ञाया व्योमेशे सस्थिता पुन ॥३३॥

माह—ई मायेति। अस्मात् पूर्वमिष्टाख्यमिकार, तत पूर्वमानन्दाख्यमाकार, तत पूर्वमप्रमेयाख्यमकार च योजयित्वा सधौ कृते ऐ इति रूपमिति भाव । २०–२४. बीजाक्षरघटकस्य दीर्घेकारस्यार्थमाह—रतिरिति । रतिरीकार । इन्धनाद्यन्तदर्था । त्रैलोक्यैश्वर्यदानाम निर्वक्ति—त्रैलोक्यमिति । जीवास्त्रिधेति । बद्धमुक्तनित्या इत्यर्थ । व्योमेशे, बिन्दौ । २८, २९. प्रकृतिं क्कारमादाय तेन पुरुषेश्वर लकार, मायामीकार, व्योमेश बिन्दु च योजयेत्। ततश्च क्लीं इति कामबीजम् । ३०–३४. सारस्वतबीजमाह—षष्ठीमित्यादिना । प्रज्ञाधार उकार । तत पूर्वमुदय ऊकार । तत पूर्वमानन्द आकार । तत पूर्वमप्रमेय अकार । अन्ते व्योमेशो बिन्दु । पुनर्विसर्ग । एषा योगे ओ इति भवति। अन्वयार्थमाह—अप्रमेयोदि-

[1] सूक्ष्मया दृशा I
[2] वृद्धिरेषा I A C omit this line
[3] रमि A B I
[4] दर्शिता B D I
[5] मता B D I
[6] ऐश्वर्यदाभिधा A C I
[7] प्रद्युम्नी I
[8] सत्वनुमयो A
[9] ज्जगद्विम् G ज्जगत्पुरा I
[10] A B C. omit this line

पुनर्निसृष्टियोगाय परमेश्वरमागता ।
षष्ठी समुद्धृता विद्या शब्दतश्चार्थतश्च ते ॥ ३४॥

इय बीजत्रयी विद्या कथिता त्रिपुराह्वया ।
व्युत्क्रमानुक्रमाभ्या सा [1]ह्यात्मसाम्यप्रदापि च ॥

विज्ञेय कामधुक् प्रोक्ता जपहोमादिसाधिता ।
[2]व्यञ्जनस्वरसयोगात् तस्या भेदान्[3] बहून्विदु ॥

चतुर्णा पुरुषार्थाना हेतून् व्यस्य समस्य च ।
सप्तमी तु महालक्ष्मीर्विद्या सा सर्वसाधनी ॥३७॥

परा प्रकृतिमादाय भास्कर तत्र योजयेत् ।
मर्दनेन समायोज्य योजयेत् कालवह्निना ॥ ३८ ॥

भूषयेन्मायया पिण्डमन्ते व्यापिनमानयेत् ।
कथित ते महालक्ष्मीबीजमेतत् पुरदर ॥ ३९ ॥

कर्षन्ती व्याकृतावस्थामह हि स्वेन तेजसा ।
प्रधानभूमिका गत्वा मूर्तित्रयविभाविनी ॥ ४० ॥

निर्माय सकल भाव व्योमेशे सप्रतिष्ठिता ।
इति भाव्यमिद बीज जपता साधकेन तु ॥४१॥

इत्येते रश्मयो ज्ञेया विद्यायास्तारिकाह्वते ।
अनुतारादयो विद्या इतीद तारिकामयम् ॥ ४२ ॥

तामिमा तारिका विद्या भजमानो यथाविधि ।
ऐहिकामुष्मिकान् [4]भोगानक्षयान् प्रतिपद्यते ॥ ✓

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे सप्तविद्याप्रकाशो नाम
षड्विंशोऽध्याय

तेत्यादिना । ३८, ३९. महालक्ष्मीबीजोद्धारमाह—परामित्यादिना । प्रकृतिं ककारमादाय तेन भास्कर षकार, मर्दन मकार, कालवह्नि रेफ, मायामीकार, व्यापिन बिन्दु च योजयेत्। क्ष्म्रीं इति मन्त्र । तथा च तन्त्रराजे—"ग्रासो नमो दाहवह्निर्वैर्युक्त कौलिनीमनु " इति। तत्र ग्रास क्षकार, नमो मकार, दाहवह्नि रेफ, स्वमीकारो बिन्दुश्च । ४३. सप्त विद्या —तार, तारिका, अनुतारिका, वाग्भव, कामबीज, सारस्वतबीज, महालक्ष्मीबीज चेति ।

इति षड्विंशोऽध्यायः

---

[1] ह्यात्मसाम्यसतोऽपि च A , ह्यात्मसाम्यसमेऽपि च B C , समासव्यासतोऽपि च D F , ह्यन्या सा व्यासतोऽपि च I
[2] हल स्वरादि A D
[3] अस्या भागान् C
[4] लोभान् F
[5] श्रीपञ्चरात्र A , श्रीपाञ्चराने B F

# सप्तत्रिंशोऽध्यायः

शक्र —

नमस्तुभ्यं जगन्नाथे पुण्डरीकाक्षवल्लभे ।
अशेषजगदीशाने सर्वज्ञे सर्वभाविनि ॥ १ ॥

श्रुतमेतन्मया सम्यग्विज्ञाना[1] तत्त्वमुत्तमम् ।
भूयश्च तारिकाया मे विधिं व्याख्यातुमर्हसि ॥२॥

श्री [2]—

आत्मैकं परं ब्रह्म सर्वज्ञं सच्चिदात्मकम् ।
[3]स्वशक्तिचरितं दिव्यं लक्ष्मीनारायणं महः ॥ ३ ॥

[4]अहं सा परमा शक्तिरहंताख्या सनातनी ।
तद्धर्मधर्मिणी नित्या प्रभा भानोरिवामला ॥ ४ ॥

तदीयानि विधीयन्ते पञ्च कृत्यानि सर्वदा ।
तदुन्मेषस्वरूपिण्या मयैवादितिनन्दन ॥ ५ ॥

मम दिव्या परा शक्तिर्नित्य[5] मद्धर्मधर्मिणी ।
हृल्लेखा परमा विद्या [6]मत्स्वरूपा पुरंदर ॥ ६ ॥

अस्या व्याख्यामिमां शृण्वन् सावधानेन चेतसा ।
श्रद्दधानः प्रपन्नस्त्वमुपसन्नो गृहाण मे ॥ ७ ॥

आमनन्ति यमात्मानं जगतस्तस्थुषः परम् ।
[7]प्रसवस्थितिसंहारकारणं सूर्यसंज्ञितम्[8] ॥ ८ ॥

नित्य[9] प्रेरयितारं च प्राणसंज्ञं सनातनम् ।
तं विद्धि प्रथमं वर्णं हकारं पुरुषोत्तमम् ॥ ९ ॥

यस्तस्य प्रथमोन्मेषः क्रोडीकृतजगत्त्रय[10] ।
अशेषभुवनाधारो ज्वलद्रूपोऽमितोऽन्यतः ॥ १० ॥

रेफं तत्परमं विद्धि तेजोरूपं सनातनम् ।
उन्मेष एव सम्यक् स[11] व्याप्नुवन् सकलां गतिम् ॥

व्यापारान् पञ्च बिभ्रच्च विन्दून् सृष्ट्यादिलक्षणान् ।
आश्चर्यज्ञानरूपश्च निमेषोन्मेषसंतते ॥ १२ ॥

इच्छाज्ञानक्रियारूपं बिभ्रच्च [12]विततिक्रमम् ।
ईईरूपस्य युग्मस्य स्थितिरेषा सनातनी ॥ १३ ॥

तदेव[13] परमोन्मेषरूपाहं विततोदया ।
इच्छाज्ञानक्रियारूपा पञ्चकृत्यकरी विभो ॥ १४ ॥

नानाविधाश्चर्यमयी चिद्घना सुखरूपिणी ।
विज्ञेया परमात्मस्था व्यापिनी विष्णुवल्लभा ॥

विधाय कृत्यमखिलं त्रैलोक्यैश्वर्यदायिनी ।
तस्मिन्नेव पुनर्देवे व्योमेशे परमात्मनि ॥ १६ ॥

६. हृल्लेखा पञ्चविंशाध्याये निर्दिष्टतारिकापरनामा ह्रींमन्त्रः । अत्राप्यनुपदमेव

[1] विज्ञान B F
[2] श्रीरुवाच I
[3] स्वशक्त्या छुरितं I
[4] साहंता I
[5] नित्या B F I
[6] मत्स्वरूपम् A D I
[7] प्रभव F
[8] सञ्ज्ञकम् B C F
[9] नित्यं B D
[10] जगत्क्रिय G
[11] सं B D
[12] विदितक्रम B विततिं क्रमात् I
[13] तदेव C

आदाय सर्वसभार प्रतितिष्ठामि निष्कला ।
अस्या रूपाणि पञ्चेह तत्त्वज्ञा सम्प्रचक्षते ॥१७॥

तानि रूपाणि देवेश गदन्त्या मे निशामय ।
व्योमेशान्तमिद रूपमेक यत्तत्प्रकीर्तितम् ॥ १८ ॥

व्योमेशात् परत केचिद्वाञ्छन्ति परमेश्वरम् ।
व्योमेशमपहायान्ये प्रधान विनियोज्य तु ॥ १९ ॥

विन्दुनादौ च वाञ्छन्ति तदन्ते प्रणवोपमम् ।
अन्ते प्रधानमेवैक केचिद्धीरा प्रचक्षते ॥ २० ॥

सृष्टिकर्तारमन्तेऽन्ये वैदिका समधीयते ।
एव पञ्च स्वरूपाणि तारिकाया विदुर्बुधा ॥२१॥

शान्तस्थाया सुरेशान रूपाण्येवविधान्यपि ।
प्रधानान्ते विसृष्ट्यन्ते व्योमेशान्ते तथैव च ॥२२॥

व्योमेशोर्ध्वविसृष्ट्यन्त इति रूपचतुष्टये ।
ऐहिकी परमा सिद्धिस्तत्त्वामुत्रिकी[1] परा ॥ २३ ॥

प्रधानविन्दुनादान्ते मोक्षश्रीरेव केवला ।
इत्येवमनुसधाय तारिकाया परा स्थितिम् ॥२४॥

शिष्याय साधुशीलाय गुरुब्रह्महितैषिणे ।
आचार्य आदिशेद्विद्या परब्रह्मस्वरूपिणीम् ॥२५॥

हस्तदेहाङ्गविन्यास विधायात्मनि वै पुरा ।
विन्यस्य शिष्यदेहे च ततश्चोपदिशेन्मनुम् ॥२६॥

स्थापयेद्धृदि शिष्यस्य भावपूर्व मनु परम् ।
पुनश्च स्थापयेत् स्वस्य[2] हृदये मन्त्रमुत्तमम् ॥२७॥

दीक्षाभिषेकपूर्वं च सर्वमेतत् समाचरेत् ।
आचार्यादथ सम्प्राप्य विद्या शिष्यो विचक्षण ॥

आत्मानमात्मनश्चैव वित्त दत्त्वा तु दक्षिणाम् ।
सकल त्वर्धमश वा येन वा तोष्यते गुरु ॥२९॥

वैदिके च समाचारे[3] लौकिके च व्यवस्थिते ।
अप्रमाद्यन् सदाचार्य[4] गुरुषु ब्राह्मणेषु च ॥३०॥

अद्रोह शीलयन् शश्वद्भूतग्रामे चतुर्विधे ।
नित्यमात्मगुणोपेतो धर्मलक्षणसेवक ॥ ३१ ॥

सस्कारै सस्कृत शुभ्रैर्देवपित्रतिथिक्रिय ।
दिव्यशास्त्राण्यधीयानो निगमांश्चैव वैदिकान् ॥३२॥

अलोलुपेन चित्तेन सिद्धान्ताननुसचरन् ।
यावदर्थं तु विज्ञानमाददानस्ततस्तत ॥ ३३ ॥

अदूषयश्च शास्त्राणि प्रमाणैरनुसचरन् ।
आह्निक विधिवत् कुर्वन् शास्त्रार्थं कर्मणा क्रमै ॥

अहरादि त्वहोरात्र पुना रात्र्यवसानकम् ।
अवन्ध्य[5] सतत कुर्वंश्चोदितै कर्मणा क्रमै ॥

पञ्चकालरतो[6] नित्यं पञ्चयज्ञपरायण ।
भूषितो दमदानाभ्या सत्येनाहिसनेन च ॥ ३६ ॥

चोदितेन क्रमेणेमा विद्या ससाध्य यत्नत ।
[7]प्रसन्नया धिया युक्तो नित्य स्वार्थपरार्थयो ॥

भूतिमेव परामिच्छन् [8]विभूति परिवर्जयेत् ।
पावन सर्वभूताना मनसा चक्षुषा गिरा ॥ ३८ ॥

मन्त्रस्वरूप निर्दिश्यते । १८. व्योमेशान्तमिति । निन्द्वन्तमित्यर्थ । १९. परमेश्वर विसर्ग । प्रधानो मकार । २१. सृष्टिकर्ता विसर्ग । २२. मन्त्राणामेषा फलतारतम्यमाह—

[1] तत्र चामुष्मिकी D, तत्र चामुत्रिकी I
[2] स्वस्मिन् B F I
[3] समयाचारे B F I
[4] सदाचार D
[5] अवद्य B F
[6] परो D E
[7] प्रपन्नया B
[8] अभूतिं I

चित्तप्रसादनीर्देवीश्चतस्रः परिशीलयन् ।
मैत्र्याद्याः शान्तिमन्विच्छन् जपयज्ञपरायणः ॥

अप्रमाद्यन् स्वकर्मस्थः प्रमादे सति दैवतः ।
प्रायश्चित्तं चरन् सम्यग्यस्मिन्यस्मिंस्तु[1] यादृशम् ॥

कर्मणा मनसा वाचा देवदेवं जनार्दनम् ।
प्रपन्नः शरणं शश्वन्मां च तद्धर्मधर्मिणीम् ॥ ४१ ॥

उत्तमं पुरुषं स्त्रीं च संदृष्ट्वा मामनुस्मरन् ।
दंपती [2]पूजयन्नित्यं दांपत्यं चाप्यलोपयन् ॥ ४२ ॥

शब्दस्थमर्थगं वापि पुंभावं विविधात्मकम् ।
स्त्रीभावं विद्धि तद्रूपं लक्ष्मीनारायणं स्मरन्[3] ॥४३॥

उत्तमां गुणसंपन्नां रूपयौवनशालिनीम् ।
अलोलुपेन चित्तेन दृष्ट्वा मामेव चिन्तयन् ॥४४॥

स्त्रीषु क्षान्तमना नित्यमवदन्नप्रियं सदा ।
[4]अतिक्रमं परिहरन् संजातं चाप्यतर्कयन्[5] ॥४५॥

क्षालयन् पावनैः स्त्रीणां जायमानं व्यतिक्रमम् ।
कुब्जां वा विकलां वापि सर्वावस्थां गतां स्त्रियम् ॥

अविनिन्दंश्चरंस्त्रीणां प्रियं शास्त्रानुकूलतः ।
एवंवृत्तः सदाचारो नरो विगतकल्मषः ॥ ४७ ॥

[6]मद्भक्तो मत्प्रियकरो मद्याजी मत्परायणः ।
प्राप्नोति परमं धाम तद्विष्णोः परमं पदम् ॥ ४८ ॥

इति ते कथिता शक्र तारिकायाः परा स्थितिः ।
विधानामपि चान्यासां किं भूयः श्रोतुमिच्छसि ॥

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे सदाचारप्रकाशो नाम
सप्तविंशोऽध्यायः

प्रधानान्ते इत्यादिना । ४४. अलोलुपेनेति । अत्यासक्तिरहितेनेत्यर्थः । ४५. अतिक्रमः प्रमादः । ४६. पावनैरिति । शुद्धिकर्मभिरित्यर्थः । व्यतिक्रमः प्रमादः । ४९. तारिकाया इति । हृल्लेखापरनाम्न्या इत्यर्थः ।

## इति सप्तविंशोऽध्यायः

---

[1] यस्मिंश्च B.  [2] पूजयेत् A. B. C. I.  [3] स्मरेत् B.
[4] अतिकाम A. B. D.  [5] अकीर्तयन् A. B.  [6] F. *omits three lines from here.*
[7] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B. D.

# अष्टात्रिंशोऽध्यायः

शक —

नमस्ते कमलावासे नमस्त्रय्यन्तवासिनि ।
त्वत्प्रसादेन विधिवच्छ्रुतो मन्त्र समाधिना ॥१॥

प्रतिपत्तिश्च सकला स्वरूप च यथास्थितम् ।
आहोरात्रिकमाचारमिदानीं वक्तुमर्हसि ॥ २ ॥

श्री —

एको नारायण श्रीमाननादि पुष्करेक्षण ।
ज्ञानैश्वर्यमहाशक्तिवीर्यतेजोमहोदधि ॥ ३ ॥

आत्मा स सर्वभूताना हसो नारायणो [1]वशी ।
तस्य सामर्थ्यरूपाहमेका तद्धर्मधर्मिणी ॥ ४ ॥

साह सृष्ट्यादिकान् भावान् विदधाना पुन पुन ।
आराधिता सती सर्वांस्तारयामि भवार्णवात् ॥

ददामि विविधान् भोगान् धर्मण परितोषिता ।
सद्धर्मपरसस्थाना[2] मम सत्त्वादिका तनु ॥ ६ ॥

आचाररूपो धर्मोऽसावाचारस्तस्य [3]लक्षणम ।
तमाचार प्रवक्ष्यामि य सद्भिरनुपाल्यते ॥ ७ ॥

हित्वा योगमयीं निद्रामुत्थायापररात्रत ।
प्रपद्येत हृषीकेश शरण्य श्रीपतिं हरिम् ॥ ८ ॥

प्रपत्तेश्च स्वरूप ते पूर्वमुक्त सुरेश्वर ।
भूयश्च शृणु वक्ष्यामि सा यथा स्यात् स्थिरा [4]त्वयि॥

आचम्य प्रयतो भूत्वा स्मृत्वास्त्र ज्वलनाकृति ।
तत् प्रविश्य विनिष्क्रान्त पूतो भूत्वास्त्रतजसा ॥

प्रपत्तिं ता प्रयुञ्जीत स्वाङ्गै पञ्चभिरन्विताम् ।
प्रातिकूल्य परित्यक्तमानुकूल्य च सश्रितम् ॥

मया सर्वेषु भूतेषु यथाशक्ति यथामति ।
अलसस्याल्पशक्तेश्च यथावच्चाविजानत ॥ १२ ॥

उपाया क्रियमाणास्ते नैव स्युस्तारका मम ।
अतोऽह कृपणो दीनो निर्लेपश्चाप्यकिचन ॥ १३ ॥

लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षक [5]सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥

यन्मेऽस्ति दुस्त्यज किंचित् पुत्रदारक्रियादिकम् ।
[6]समस्तमात्मना न्यस्त श्रीपते तव पादयो ॥ १५ ॥

६. विविधानिति । अपवर्गप्रदाप्यानुषङ्गिकानैहिकानामुत्रिकांश्च भोगान् ददामीत्यर्थ । सद्धर्मपरेषु सस्थान यस्या इति बहुव्रीहि । ८ योगमयीमिति । अभिगमनादिषु धर्मेषु योगाख्य पञ्चमो धर्म पूर्वदिनरात्रिमारभ्य परदिनब्राह्ममुहूर्तावधिक्कालानुष्ठेय । १४ महाविश्वासोऽत्र विवक्षित । सर्वसिद्धान्ते, सर्वेषु दिव्यशास्त्रेषु । वेदान्ते, उपनिषत्सु । १५. आत्मात्मीयनिक्षेपमाह—यन्मेऽस्तीत्यादिना । आत्मना, आत्मना सहेत्यर्थ ।

[1] हरि. C
[4] श्रुति B
[2] परमस्तस्या D, परमस्थाना I
[5] सनभूताना B G
[3] लक्षणम् C
[6] समन्तात् A B C G

शरण भव देवेश नाथ लक्ष्मीपते मम ।
सकृदेव प्रपन्नस्य कृत्य नैवान्यदिष्यते ॥ १६ ॥

उपायापायमुक्तस्य वर्तमानस्य मध्यत ।
नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते ॥ १७ ॥

अत पर सदाचार प्रोच्यमान निबोध मे ।
आशमान समुत्तिष्ठेन् सर्वभूतसुखोदयम् ॥ १८ ॥

भव तु सर्वभूतानि सात्त्विके विमले पथि ।
भजन्तो श्रीपतिं शश्वद्विशन्तु परम पदम् ॥ १९ ॥

इत्याशास्य प्रिय सम्यग्भूतेभ्यो मनसा गिरा ।
शरीरशोधन कृत्वा धर्मशास्त्रविधानत[1] ॥ २० ॥

शौच च विधिवत् कृत्वा भक्षयेद्दन्तधावनम् ।
अथाचम्य विधानेन पवित्रे शास्त्रचोदिते[2] ॥

प्रावयित्वाभ्युपासीत सध्या त्रैलोक्यपावनीम् ।
मन्त्रमयी त्रिविधा शक्ति सूर्यसोमाग्निरूपिणी ॥

शुद्धये सर्वभूतानां सध्या देवी प्रवर्तते ।
उपस्थाय विवस्वन्तमन्त स्थ पुरुषोत्तमम्[3] ॥२३॥

कुर्यादग्निविधिं सम्यगुपादानमथाचरेत्[4] ।
सति वित्ते न कुर्वीतोपादान तु विचक्षण ॥२४॥

सप्त वित्तागमा धर्म्या दायो लाभ क्रयो जय ।
प्रयोग कर्मयोगश्च सत्प्रतिग्रह एव च ॥ २५ ॥

स्नान कृत्वा विधानेन त्रिविध शास्त्रचोदितम् ।
भूतशुद्धिं विधायाथ यागमान्तरमाचरेत ॥ २६ ॥

स्वयमुत्पादितै [5]स्फीतैर्लब्धै [6]शिष्यादितस्तथा ।
भोगैर्यजेत मा विष्णुमुभौ वा शास्त्रपूर्वकम् ॥

अष्टाङ्गेन विधानेन ह्यनुयागावसानके ।
स्वाध्यायमाचरेत् सम्यगपराह्णे विचक्षण ॥ २८ ॥

दिव्यशास्त्राण्यधीयीत निगमांश्चैव वैदिकान् ।
सर्वाननुचरेत् सम्यक् सिद्धान्तानात्मसिद्धये ॥

१६. गोप्तृत्ववरणमाह—शरणमित्यादिना । १७ मध्यतो वर्तमानस्य नैवान्यत् कृत्यमिति पूर्वेणान्वय । बुद्धिदौर्बल्यादिति । स्वाधिकारमनालोच्य दुष्करे कर्मणि प्रवृत्तिर्हि बुद्धिदौर्बल्यप्रयुक्तेति भाव । उपायान्तरमत्र भक्तियोग । अनेन भक्तियोगस्य निन्दा क्रियत इति वा मुमुक्षोर्भक्तियोग स्वरूपविरुद्ध इति वा न मन्तव्यम् । "नरस्य बुद्धिदौर्बल्यादिन्दुबिम्बमहे स्पृहा" इत्युक्ते वचनमिदमिन्दुबिम्ब निन्दतीति न कश्चिदपि प्रेक्षावान् ब्रूयात् । किंच "भक्त्या परमया वापि प्रपत्त्या वा महामते" इति भक्तेर्वैकल्पिकसाधनत्वोक्तिर्विरुध्येत । अशक्तस्य मुमुक्षो स्वरूपविरुद्ध इति चेत्, नात्र कस्यापि विप्रतिपत्ति । २३. विवस्वन्त विशिष्टदीप्तिमन्तमिति, पुरुषोत्तमविशेषणम् । अन्त स्थम्, सूर्यमण्डलान्तर्वर्तिनम् । "सूर्यमण्डलमध्यस्थ सूर्यकोटिसमप्रभम्" इत्यादिध्यानमत्राभिप्रेतम् । २४. उपादान नाम भगवदाराधनोपयुक्तद्रव्यार्जनम् । तच्च निस्वस्य पञ्चयज्ञपरायणभागवतोत्तमाद्याचितेन तण्डुलादिस्वीकाररूपम् । आढ्यस्य तु तदुपयुक्तपुष्पतुलस्यादिसङ्ग्रहरूपम् । २८. अष्टाङ्गयजन यथा जयाख्ये—अन्तर्याग, भोगयाग, मन्त्रादियाग, अग्नियाग, सम्प्रदानम्, वह्निसन्तर्पणम्, पितृयाग, अनुयागश्चेति (२२ अ ७५–८०) । २९. सिद्धान्तानिति । तन्त्रागम दि-

[1] विधानत F [2] चोदितौ B D [3] अन्त स्थ B I
[4] चार्थसञ्चयेत् B D [5] स्फीतै A, अन्यै B C. [6] शिष्यदत्तैस्तथा B F.

अलोलुपेन चित्तेन रागद्वेषविवर्जितः ।
न निन्देन्मनसा वाचा शास्त्राण्युच्चावचान्यपि ॥

तावन्मात्रार्थमादद्याद् यावता ह्यर्थ आत्मनः ।
भूतानां श्रेयसे सर्वं सर्वशास्त्राणि तन्वते ॥ ३१ ॥

तां तामवस्थां सम्प्राप्य तानि श्रेयो वितन्वते ।
आदौ मध्ये च सर्वेषां शास्त्राणामन्तिमे तथा ॥

[1]श्रीमान्नारायणः प्रोक्तो विधयैव तया तया ।
अहं नारायणस्यापि सर्वज्ञा सर्वदर्शिनी ॥ ३३ ॥

निदानज्ञा भिषक्कल्पा तत्तद्दुर्वादिरूपिणी ।
प्रवर्तयामि शास्त्राणि तानि तानि तथा तथा ॥

अधिकारानुरूपेण प्रमाणानि तथा तथा ।
अत्यन्तहेयं न क्वापि शास्त्रं किंचन विद्यते ॥३५॥

सर्वत्र सुलभं श्रेयः स्वल्पं वा यदि वा बहु ।
ततः कार्यो न विद्वेषो यावदर्थमुपाश्रयेत् ॥ ३६ ॥

समयं न विशेत्तत्र नैव दीक्षां कदाचन ।
ततः सध्यामुपासीत पश्चिमां सार्धभास्कराम् ॥३७॥

विधायाग्न्यर्थकार्यं तु योगं युञ्जीत वै ततः ।
सुविविक्ते शुचौ देशे निःशलाके मनोरमे ॥३८॥

मृद्वास्तरणसंकीर्णे चेलाजिनकुशोत्तरे ।
अन्तर्बहिश्च संशुद्धे यमादिपरिशोधितः ॥ ३९ ॥

आसनं चक्रमास्थाय पद्मं स्वस्तिकमेव वा ।
यत्र वा रमते बुद्धिर्नाडीमार्गान् निपीडयन्[2] ॥४०॥

विजित्य पवनग्रामं प्रत्याहारजितेन्द्रियः ।
धारणासु श्रमं कृत्वा मां ध्यायेत् सुसमाहितः ॥४१॥

अनौपम्यामनिर्देश्यामविकल्पां निरञ्जनाम् ।
सर्वत्र सुलभां लक्ष्मीं सर्वप्रत्ययतां[3] गताम् ॥४२॥

साकारामथवा योगी वराभयकरां पराम् ।
पद्मगर्भोपमां पद्मां पद्महस्तां सुलक्षणाम् ॥ ४३ ॥

यद्वा नारायणाङ्कस्थां सामरस्यमुपागताम् ।
चिदानन्दमयीं देवीं तादृशं च श्रियः पतिम् ॥४४॥

बहुधा योगमार्गास्ते वेदितव्याः सुरेश्वर ।
तेष्वेकं धर्ममास्थाय भक्तिः श्रद्धा च यत्र ते ॥४५॥

सम्यङ् निध्यानमुत्पाद्य समाधिं समुपाश्रयेत् ।
ध्याता ध्यानं तथा ध्येयं त्रयं यत्र विलीयते ॥४६॥

एकैवाहं तदा भासे पूर्णाहंता सनातनी ।
[4]ऐकध्यमनुसम्प्राप्ते मयि संविन्महोदधौ ॥ ४७ ॥

नान्यत् प्रकाशते किंचिदहमेव तदा परा ।
योगाच्छ्रान्तो जपं कुर्याज्जपाच्छ्रान्तो योगमाचरेत् ॥

तस्य क्षिप्रं प्रसीदामि जपयोगाभियोगिनः ।
नीत्वैव प्रथमं यामं जपयोगादिना सुधीः ॥ ४९ ॥

योगस्थ एव तद्धीरस्ततो यामद्वयं स्वपेत् ।
उत्थायापररात्रे तु पूर्वोक्तमनुसंचरेत् ॥ ५० ॥

इति व्यामिश्रकृत्यं तत् प्रोक्तं ते बलसूदन ।
अच्छिद्रान् पञ्चकालांस्तु भगवत्कर्मणा नयेत् ॥

सिद्धान्तभेदानित्यर्थः । ३३ सर्वशास्त्राणां भूतहितत्वं परतत्त्वप्रकाशनेन तदाराधनप्रतिपादनेन चेत्यभिसधायाह—श्रीमानिति। ४६ *योगस्य परा काष्ठोच्यते—ध्यातेत्यादिना।* यत्रेति । यस्यां समाधिदशायामित्यर्थः । ४७ ऐकध्यमेकभावं योगिनि सम्प्राप्ते सति नान्यत् किंचित् प्रकाशते । किंतु अहमेव भासे इत्युत्तरेणान्वयः । ४९ योगनिद्रा निर्दिश्यते—नीत्वेमिति । ५०. योगो नाम परमात्मन्यात्मनिक्षेपपुरःसरं परमात्मगुणगणानुसंधानम् । तत्कुर्वाण एव स्वापमनुभवेदित्यर्थः । ५१ व्यामिश्रेति । बहुविधकर्मकलापमहितं भगवदाराधनमि-

[1] श्रीमन्नारायण A B C G [2] अपीडयन् I [3] प्रत्ययतां B D [4] ऐकाग्र्ये A B C

दीक्षित पञ्चकालज्ञो लक्ष्मीमन्त्रपरायण ।
अन्तर नानयो किंचिन्निष्टाया बलसूदन ॥ ५२ ॥

उभावेतौ मतौ भक्तौ विशतो मा तनुक्षये ।
चक्रपद्मधरो नित्य भवेल्लक्ष्मीपरायण ॥ ५३ ॥

स्वदारनिरतश्च स्याद् ब्रह्मचारी सदा भवेत् ।
मन्मन्त्रमभ्यसेन्नित्य मच्चित्तो मत्परायण ॥ ५४ ॥

सर्वानुष्ठानचाव्छन्यासद्भावेन विभावयेत् ।
अग्नीषोमविभागज्ञ क्रियाभूतिविभागवित् ॥५५॥

स्थूलसूक्ष्मपरत्वाना वेदिता च यथार्थत ।
अङ्गोपाङ्गादितन्त्रज्ञो मुद्राभेदविधानवित् ॥ ५६ ॥

अन्तर्यागबहिर्यागजपहोमविचक्षण ।
पुरश्चरणभेदज्ञ [1]सिद्धिसाधनतत्त्ववित् ॥ ५७ ॥

[2]सञ्ज्ञामूर्तिविधानज्ञस्तत्साधनविधानवित् ।
शारीराधारतत्त्वज्ञो योगतत्त्वविचक्षण ॥ ५८ ॥

एवप्रकार शास्त्रार्थवेदी धीरो विचक्षण ।
अहिंस्रो दमदानस्थो मा भजेत श्रिय नर ॥५९॥

इति [3]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे सदाचारप्रकाशो
नामाष्टाविंशोऽध्याय

त्यर्थ । अच्छिद्रानिति । "यन्मुहूर्तं क्षण वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्म-
हच्छिद्र सा भ्रान्ति सा च विक्रिया ॥" (ग पु पृ २२२-२२) इत्युक्तच्छिद्ररहितानित्यर्थ ।

इत्यष्टाविंशोऽध्यायः

---

[1] सिद्ध B C. D [2] सन्मूर्ति A , B omits this line [3] श्रीपञ्चरात्र A श्रीपञ्चरात्रे B

# एकोनत्रिंशोऽध्यायः

शक्र —

शुद्धाशुद्धषडध्वाख्यचित्रनिर्माणभित्तये ।
नमः श्रीवत्सभामिन्यै भवसंतापशान्तये ॥ १ ॥

अग्नीषोमविभागं मे क्रियाभूतिविधामपि ।
ब्रूहि मे तत्त्वतः पद्मे विद्यायास्तारिकाकृते ॥२॥

श्री —

व्यापकं यत् परं ब्रह्म शक्तिर्नारायणी हि या ।
सा ह्यहं परिणामेन भवामि प्रणवाकृतिः ॥ ३ ॥

अग्नीषोमविभागं मे तारिकाया निशामय ।
क्रियाभूतिविधानं च यथावत् सुरनन्दन ॥ ४ ॥

उन्मेषः परमो विष्णोराद्यः षाड्गुण्यचिन्मयः ।
साहं संभृतसंभारा शक्तिस्ते कथिता पुरा ॥ ५ ॥

सृष्टवत्या जगत् कृत्स्नं तस्या मे रक्षणोद्यमे ।
द्विधा प्रवर्तते रूपं [1]मुखेनैश्वर्यतेजसोः ॥ ६ ॥

[2]षाड्गुण्यमेव मे रूपं किंचित्तेजोमुखं मतम् ।
षाड्गुण्यमेव मे रूपं परमैश्वर्यसंमुखम् ॥ ७ ॥

तेजोमुखं तु यद्रूपं सा क्रियाशक्तिरुच्यते ।
सैवाग्निरुच्यते शक्तिः सर्वोपप्लवदाहनात्[3] ॥ ८ ॥

ऐश्वर्यसमुखं रूपं भूतिर्लक्ष्मीरितीरिता ।
शक्तिरैश्वर्यभूयिष्ठा सा मे सोममयी तनुः ॥ ९ ॥

[4]शोषणात् सर्वदोषाणामग्निशक्तिः क्रियामयी ।
जगदाप्याययन्त्यन्या भूतिः सोम इहोच्यते ॥ १० ॥

इच्छाज्ञानक्रियामय्यास्ते इमे व्यूहजे मम ।
षाड्गुण्यविग्रहा साहं व्यूहिनी परमेश्वरी ॥ ११ ॥

या सा शक्तिः [5]क्रियाख्या मे षाड्गुण्यं तेजसोज्ज्वलम् ।
तस्या आसंस्त्रयो व्यूहाः सूर्यसोमाग्निशक्तयः ॥

[6]तासामाद्या परा दिव्या सूर्याख्या शक्तिरुज्ज्वला ।
निर्वहन्ती जगत्कृत्यमनिशं[7] परिवर्तते ॥ १३ ॥

अध्यात्ममधिदैवं च तथा चैवाधिभौतिकम् ।
तस्या रूपत्रयं विद्धि सूर्याख्यायाः सुरेश्वर ॥ १४ ॥

अध्यात्मस्था तु सूर्याख्या पिङ्गलामार्गगामिनी ।
आलोकेनाधिभूतस्था सूर्यशक्तिः प्रवर्तते ॥ १५ ॥

सूर्यमण्डलसंस्थाना शक्तिः सान्याधिदैविकी ।
सूर्यमण्डलसंस्थाना अर्चिषो याः प्रकीर्तिताः ॥१६॥

ऋचस्ता विद्धि देवेश तपन्तीस्तपनात्मिकाः ।
दीप्तयो यास्तदन्तःस्थास्तानि सामानि विद्धि मे ॥

६. मुखेनेति । प्राधान्येनेत्यर्थः । १६. सूर्यमण्डलान्तर्वर्तिनो देवस्य त्रयीरूपत्वं वक्तुं प्रथमतस्तस्य ऋग्रूपत्वमुच्यते उत्तरार्धे—सूर्येत्यादिना । १७. तस्य यजुःस्वरूपत्वमाह—अन्तःस्थेति । अनेन "आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलम्"

[1] किंचित्तेजोमुखं मतम् A G B omits four quarters from here
[2] A omits this line
[3] दाहतः C.
[4] शोषणात् C I
[5] क्रियान्या A C. G, क्रियाख्याख्या I
[6] तासां मं परमा B C F
[7] ईदृशं A B F

अन्त स्था या परा शक्ति पौरुषी तनुमास्थिता ।
[1]ता विद्धि पुरुष दिव्य रमणीय यजुर्मयम् ॥१८॥

शङ्खचक्रधर श्रीशं पीनोदारचतुर्भुजम् ।
प्रसन्नवदन पद्मविष्टर पुष्करेक्षणम ॥ १९ ॥

मूर्धान्त पुरुषस्यास्य दशहोता निगद्यते ।
पादपाणि चतुर्होता देवस्यास्य सुरेश्वर ॥ २० ॥

लोममासास्थिमज्जामृक् पञ्चहोता सुरेश्वर ।
स्तनावण्डौ च पुस्त्व च षड्ढोतापान एव च ॥

शीर्षण्या सप्त ये प्राणा सप्तहोता निगद्यते ।
शोभास्तु दक्षिणास्तस्य सभारा सधय स्मृता ॥

[2]नाड्यो देवपत्न्योऽस्य होतॄणा हृदय मन ।
चेतन पौरुष सूक्तं शक्ति श्रीसूक्तमुच्यते ॥२३॥

ओंकार प्रणवस्तारो गुह्य नाम सनातनम् ।
यजूपि रुद्रशुक्राणि [3]स्थूलनामानि तस्य तु ॥२४॥

यजुर्मयमनु दिव्यमभ्यस्यन् पुरुष नर ।
अनुव्याहृत्यभीचारपापेभ्योऽपि प्रमुच्यते ॥ २५ ॥

तपत्येव परा शक्तिस्त्रयी सूर्यात्मयाम्बरे ।
त्रिविधैषा परा शक्ति प्रख्याता सूर्यसञ्ज्ञया ॥२६॥

सावित्री नाम वेदाना जननी परिवर्तते ।
[4]त्रिवर्णप्रणवाधारा भूर्भुव स्वस्त्रिनाडिका ॥ २७ ॥

तदादिवर्णपरना शिर कल्पितशेखरा ।
क्षित्यादिपुरुषान्तार्णा प्रकाशानन्दविग्रहा ॥ २८ ॥

उदिता ब्रह्मणो भूयो ब्रह्मणि प्रतितिष्ठति ।
वेदाना जननी सैषा वर्णाना जननी परा ॥ २९ ॥

इति तैत्तिरीयश्रुतिरुपबृंहिता भवति । विष्णुपुराणे चोक्तम् (२-११-११) । २० अन्त स्थस्यास्य पुरुषस्य दशहोता मूर्धा भवति । दशहोत्रादिपदैस्तत्तन्नामानो मन्त्रा विवक्षिता । "चित्ति स्रुक्" इत्यारभ्य तैत्तिरीयारण्यके तृतीयप्रपाठके प्रथमानुवाकमन्त्रो दशहोता । तत्रैव "पृथिवी होता" इत्यारभ्य द्वितीयानुवाकपठितश्चतुर्होता । पादपाणीत्येकवद्भाव । २१ "अग्निर्होता" इत्यारभ्य तृतीयानुवाकपठित पञ्चहोता । "सूर्यं ते चक्षु" इत्यारभ्य तुरीयानुवाकपठित षड्ढोता । २२ "महाहविर्होता" इत्यारभ्य पञ्चमानुवाकपठित सप्तहोता । "देवस्य त्वा" इत्यारभ्य दशमानुवाकपठिता दक्षिणा । "अग्निर्यजुर्भि" इत्यारभ्याष्टमानुवाकपठिता सभारा । २३. "सेनेन्द्रस्य" इत्यारभ्य नवमानुवाकपठिता देवपत्न्य । "सुवर्णं घर्मम्" इत्यारभ्यैकादशानुवाकपठितो होतृहृदयम् । पुरुषसूक्तश्रीसूक्तमन्त्रा प्रसिद्धा । २४. "नमस्ते रुद्र मन्यवे" इत्यारभ्य पठिता रुद्रिया । एव शुक्रिया अपि मन्त्रविशेषा । अत्र अहिर्बुध्न्यसहिताया ५८, ५९ अध्यायावनुसन्धेयौ । २५ यजुर्मयेति सावित्री । अनुव्याहृति, व्याहृतिभ्य पश्चात् । अन्य 'अभ्यस्यन्' इति पूर्वेणान्वय । २६ त्रयीति । "वेदैरशून्यस्त्रिभिरेति सूर्य" इति श्रुतिरनुसन्धेया । २८ तदादीति । तत् इत्यादयो

[1] ता B C.
[2] C omits three lines from here
[3] तस्य एव्हमि A.
[4] त्रिवर्णं A

अनुलोमविलोमाभ्या सौम्याग्नेयी निगद्यते ।
सैषा सूर्यवपुर्दिव्या सावित्री मन्मयी कला ॥३०॥

गायत्री नाम गायन्त त्रायते महतो भयात् ।
आदाय जीवन गोभिर्भूसरित्प्राणिसभवम् ॥

पुनर्मुञ्चति मेघेषु [1]नवमासधृत करै ।
उक्ता सूर्यमयी शक्ति शृणु वह्निमयीं पराम् ॥

एषापि त्रिविधा शक्र शक्तिर्वह्निमयी मम ।
दिव्येकाविन्धना ह्यन्या क्षितौ क्षितिमयेन्धना ॥

तथा भुक्तेन्धना कोष्ठे शक्तिर्वह्निमयी त्रिधा ।
सर्वदेवमयी सैषा देवाना मुखमुच्यते ॥ ३४ ॥

त्रिवर्गार्थं स्तुता सैषा त्रिष्टुबित्युच्यते बुधै ।
दुर्गाणि तारयन्त्यात्मपारायणपर नरम् ॥ ३५ ॥

शक्ति सोममयी त्वन्या सापि त्रेधा निगद्यते ।
दिवि बिम्बात्मना त्वेका तथान्यौषधिरूपिणी ॥

चरति प्राणिनामन्तरिडयैवामृतात्मिका ।
अनुष्टुभि स्तूयमाना सैषानुष्टुबुदीरिता ॥ ३७ ॥

मृत्युजय इति प्रोक्ता सा विद्या मृत्युनाशिनी ।
सूर्यसोमाग्निरूपाणा तासामासा पुरदर ॥ ३८ ॥

हविष्कृदुदिता सूर्यात् सोमरूपा हविर्मयी ।
हविरत्ति तथाग्न्याख्या वह्निविभ्रमुखात्मना ॥३९॥

तिसृभिर्वर्तते कृत्स्न लोकतन्त्रमहर्निशम् ।
इति व्यूहत्रयोपेता व्यूहिनी सा क्रियात्मिका ॥

शक्ति परमगम्भीरा मम तेजोमुखोद्गता ।
सूर्येन्दुवह्निकोट्योघनियुतार्बुदभास्वरा[2] ॥ ४१ ॥

चक्र सुदर्शन नाम [3]सा भवत्यरिदारणम् ।
अस्त्र परमतेजिष्ठमाग्नेय नाम वैष्णवम् ॥ ४२ ॥

परोद्यमस्वरूप तत्[4] प्राणादिप्राणन परम् ।
उद्यन्ति सर्वाण्यस्त्राणि तस्मात् सर्वाश्च शक्तय ॥

करण साधकतम पञ्चकृत्यविधौ हरे ।
न तत् कृत्य विना तेन यत् स्याद् विष्णोर्महात्मन ॥

सकल्पादिस्वरूपेय सृष्टौ विष्णो प्रवर्तते ।
रक्षणे सहृतौ चैव धत्ते चक्रमयीं तनुम् ॥ ४५ ॥

ममाज्ञा पराग्नेयी[5] क्रियाशक्तिर्हि वैष्णवी ।
आब्रह्मस्तम्बपर्यन्त षोढा विष्टभ्य तिष्ठति ॥४६॥

तत्र वर्णमय चक्र प्रथम शृणु वासव ।
तारिकातारकद्वन्द्वमक्षग[6] पारमेश्वरम् ॥ ४७ ॥

नाभौ सूर्यन्दुभारूप श्रित स्वार द्विरष्टकम् ।
कादिभान्त त्रिरष्टार[8] मादिहान्त तु नेमिगम् ॥

प्रधि पर्यन्तवह्न्यात्मा [9]वर्गान्त पिण्डसनिभ ।
वर्णचक्रमिद दिव्य वर्तते वर्णवर्त्मना ॥ ४९ ॥

वर्णा इत्यर्थ । शिर गायत्रीशिरोमन्त्र । क्षित्यादीति । कादिमान्तवर्णा । ३१ आदायेति । अत्र "याभिरादित्यस्तपति ताभि पर्जन्यो वर्षति" इति श्रुतिरनुसन्धेया । ३३ अविन्धना विद्युत् दिव्या । काष्ठादीन्धना भौमी । जठरस्था कौष्ठेति ज्ञेयम् । ३६ सोममय्यपि त्रिधा —आकाशे बिम्बात्मना, भूमावोषध्यात्मना, प्राणिशरीरे इडात्मनेति । ४६ षोढेति । कलातत्त्ववर्णपदमन्त्रभुवनाख्यचक्रैरित्यर्थ । ४७ तारिका ह्रींमन्त्र । तारक प्रणव । ४८ स्वारम्,

[1] नवमासहृत A B C omits eight quarters from here
[2] मासुरा I
[3] सानिभ्यायरि A B C G
[4] स्वरूपत्वात् I
[5] श्रया A D
[6] अक्षरं I
[7] त्रियास्तारं A B C श्रितद्वार I
[8] द्विरष्टार A B C D I
[9] षणान्तं पिण्डसंनिभम् C

कलाचक्रमिद शक्र ज्ञानाक्ष शक्तिनाभिकम् ।
ऐश्वर्यार वलाद्येन नेम्याद्य त्रिगुणेन तु ॥ ५० ॥

तत्त्व तु वासुदेवाक्ष नाभि सकर्पणोज्ज्वल ।
प्रद्युम्नार तथा शक्र प्रधिरूपानिरुद्धकम् ॥ ५१ ॥

अक्षनाभ्यरनेमिस्थैस्तुर्याद्यै पदचक्रकम् ।
मन्त्रमक्षादिके र्बीजपिण्डसज्ञापदात्मभि ॥ ५२ ॥

कालाक्ष नाभिगाव्यक्त महदाद्यरपञ्जरम् ।
मन श्रोत्रतदर्थादिविकारपरिमण्डलम् ॥ ५३ ॥

लोकलौकिकपर्यन्त भुवन चक्रमन्तिमम् ।
षट्चक्र दधती हस्तै पौरुषीं तनुमास्थिता ॥५४॥

सुदर्शन क्रियाशक्तिर्वैष्णवी चक्रमध्यगा ।
बीज पिण्ड पद सज्ञा अस्या शृणु चतुष्टयम् ॥५५॥

सोम प्रथममादाय प्राणमन्ते नियोजयेत् ।
ततोऽमृतमुपादाय योजयेत् कालपावकम् ॥ ५६ ॥

तत्सरथमनल कुर्यान्माया व्यापिनमन्तत ।
एतत् सौदर्शन बीज मत्क्रियाशक्तिजृम्भितम् ॥५७॥

सप्तवर्णात्मक दिव्यमिद बीज [1]महर्द्धिदम ।
एतदेव महत् पिण्ड मायाव्यापिसमुज्झितम्[2] ॥

कालाग्न्यर्कायुताकारमेतद्भ्रान्त्वाम्बुदध्वनि ।
पञ्चवर्णं महापिण्ड दुर्धर देवदानवै ॥ ५९ ॥

शुचिना तु सकृत् स्मर्यमजितेन्द्रियदु सरम् ।
स्मृत्वा तु शान्तये स्मर्ये बीजे मे तारिकादिके ॥

योऽसौ पिण्डोर्ध्वभागस्थो वर्ण कालानलाभिध ।
दह्यन्ते तेन दैत्येन्द्रा लोकाश्चैव युगक्षये ॥ ६१ ॥

द्वितीयशक्तिसस्थेन त्वग्निनाग्नि समिध्यते ।
शक्ति प्राणयति प्राण पूरितोऽमृततेजसा ॥ ६२ ॥

इति पिण्डस्वरूप ते कथित सुरपुगव ।
व्यापकै पञ्चभि पिण्ड [3]कल्पित स्त्वन्तरान्तरा ॥

नमोन्तान्त ध्रुवाद्य च सज्ञामन्त्रत्वमृच्छति ।
व्यापकौ योजयेदन्ते पिण्डाद्यो सोमसूर्ययो ॥

अन्ते सोमाग्निरूद्स्य ह्येक व्यापकमानयेत् ।
आद्यन्तयोस्तथान्त्यस्य वर्णस्य व्यापकौ स्मृतौ ॥

वर्म प्राणोर्जयोर्व्योम दुष्टोपद्रवमर्दनम् ।
य सकर्षणस्तु सहार कल्पान्तेऽखिलगोचर ॥

स फट्कारस्तदन्ते चाप्याह्लाद शान्तिकारक ।
[4]इति पिण्डविकल्पात्मा सौम्याग्नेयो मनु स्मृत ॥

स्वरसमूह । द्विरष्टकम्, षोडशकम् । त्रिरष्टारम्, चतुर्विंशत्यररूपम् । ५६, ५७ सोम सकार । प्राणो हकार । अमृत सकार । कालपावक राकार । अनल रकार । माया व्यापी च ईकार । सहस्रार ई इति बीजमन्त्र । ५८ सप्तवर्णात्मकमिति । सोमप्राणामृत-कालपावकानलमायाव्यापिरूपसप्तवर्णघटितमित्यर्थ । मायाव्यापिसमुज्झितम्, ईकाररहितम् । सहस्रार इति पिण्डमन्त्र । ६०. स्मर्ये, स्मरणीये इत्यर्थ । ६४. पूर्वोक्तमेव विशदयति— व्यापकाविति । ६६ वर्म कवचम् । प्राणोर्जयोर्व्योम, हुमन्त्र । ६७. विकल्प अनुस्मृति ।

[1] महद्धितम् A महर्द्धिमत् I [2] समन्वितम् I [3] वान्ति A

[4] A C D F add here lines 2 to 14 (तस्या व्याप्ति to वासर) from ch 30 and omit them there

स्ववर्णैरङ्गवानेष बली सौदर्शनो मनुः ।
दिव्यान्तरिक्षभौमानां भोगानामाप्तिसाधनम् ॥
कल्पद्रुमो मनुः सोऽयमाश्रितानां पुरंदर ।
नारायणात् समुत्पत्त्या मम नित्यं जगद्धिते ॥६९॥

अग्नीषोमविभागस्ते कथितो वृत्रसूदन ।
क्रियाभूतिविभेदश्च क्रियाशक्तिभिदापि च ॥७०॥
क्रियाशक्तिप्रभावश्च बीजपिण्डादिभेदतः ।
भूयः शक्र क्रियाशक्ते ऋद्धिमेतावतीं शृणु ॥७१॥

इति [1]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे अग्नीषोमविभागप्रकाशो[2]
नामैकोनत्रिंशोऽध्यायः

६८. स्ववर्णैरिति । पूर्वोक्तस्य षडक्षरमन्त्रस्य ये षट् वर्णाः, तैः हृदयादिषडङ्गकल्पनं कार्यमित्यर्थः । मन्त्रमहिमानमाह—दिव्येत्यादिना । ६९. जगद्धिते इति निमित्ते सप्तमी । जगद्धितनिमित्तमित्यर्थः ।

इत्येकोनत्रिंशोऽध्यायः

---

[1] श्रीमयपत्र A.; श्रीमयपत्रे B

[2] L omits प्रकाशः

# त्रिंशोऽध्यायः

श्री —

एषा ते कथिता शक्र मया शक्तिः क्रियात्मिका ।
[1]तस्या व्याप्तिमवोच ते सूर्यसोमाग्निगोदिताम् ॥ १ ॥

व्यूहिनीमप्यवोच ते बीजपिण्डाभिधानत ।
पदमन्त्रस्वरूप च तस्या शक्र निबोध मे ॥ २ ॥

अजितानलसर्गाणा सयोग पिण्ड आदिम ।
कमलानलसर्गाणा योग पिण्डो द्वितीयक ॥ ३ ॥

श्वेताद्याह्लादिसयोगस्तृतीय पिण्ड उच्यते ।
सूर्योर्जिव्यापिना पिण्डश्चतुर्थस्तेन मध्यत ॥ ४ ॥

त्रीण्यस्त्राणि तत कालचक्राय हुतभुक्प्रिया ।
तारेणान्वितश्चादौ चक्रोऽय पदमन्त्रराट् ॥ ५ ॥

नैव किंचिदसाध्य हि मन्त्रेणानेन वासव ।
[2]अभियुक्तमना अस्मिन्न गच्छति पराभवम् ॥ ६ ॥

यस्तु ते कथित पूर्वं त्रियुगार्णो मनूत्तम ।
प्रभावमखिल तस्य भूयो व्याख्यामि वासव ॥

अनामरूपरचक्र पाड्गुण्यमहिमोज्ज्वलम् ।
ध्यायन् सबीजमावर्त्य मन्त्र बन्धात् प्रमुच्यते ॥

क्रियाशक्तेर्मदीयायास्तनु साक्षान्महामनु ।
षडर्णोऽथर्ववेदान्तसस्थितश्चक्रबृंहित ॥ ९ ॥

षडध्वमयमोजस्वि चक्र सौदर्शन परम् ।
भावयेदक्षनाभ्यादिविभक्तावयवोज्ज्वलम् ॥ १० ॥

अमृतादीन् मनोर्वर्णानक्षाद्यङ्गेषु चिन्तयेत् ।
अक्षे नाभौ तथारेषु नेमौ प्रधितदन्तयो ॥ ११ ॥

प्रकृत्यादिविशेषान्तैस्तत्त्वै समर्पित [3] प्रधि ।
माया प्रसूतिस्त्रैगुण्यमपि नेमि सुदर्शने ॥ १२ ॥

पदाध्वरचितारान्ता मन्त्रा अरसहस्रकम् ।
अरान्तो व्यूहमार्गस्थो नाभिस्तत्र कलामयी ॥ १३ ॥

वर्णाध्वा ह्यक्षपर्यन्तो मध्ये शक्तिरह परा ।
मदन्त परम ब्रह्म ग्राह्यग्राहकतोज्झितम् ॥ १४ ॥

३. अजितो जकार । अनलो रेफ । सर्गो विसर्ग । ज्र । कमल ककार । क्र । ४. श्वेत फकार । आह्लादी टकार । फट् । सूर्यो हकार । ऊर्जे उकार । व्यापी बिन्दु । हु । ५. मध्ये त्रय फट्मन्त्रा । तत स्वाहा । ओं ज्र क्र फट् हु फट् ३ कालचक्राय स्वाहा । ७. त्रियुगार्ण षडक्षरमन्त्र । सहस्रार हु फट् इति । ९. अथर्वेति । अत्राहिर्बुध्न्यसहिताया विंशाध्याये २१–२४ वचनान्यनुसधेयानि । ११. अमृत सकार । प्रकृत्यादीत्यादिना भुवनाध्वा निर्दिश्यते । १३. मन्त्राध्वानमाह——मन्त्रा इति ।

[1] In A C D F 13 lines from here are omitted but given in ch 29 *Vide* note on p 101

[2] अभियुक्ता मनायस्मिन् I

[3] संस्कृत C

मध्ये तु चिन्तयेन् तार तारिका तद्बहि स्मरेत् ।
तद्बहिश्च क्रियाबीज तद्बहिश्चादिमाक्षरम् ॥ १५ ॥

इत्यक्षवृद्धे ज्ञेय क्रमाद्बीजचतुष्टयम् ।
नाभ्यरादौ तु सूर्यादीनिति पूर्वोक्त्या दिशा ॥ १६ ॥

ह्रस्वाकारस्वरूपो य स सहस्रविधान्वयी ।
सूर्यनालानलद्वन्द्वैरप्रमेयाग्निभेदिते ॥ १७ ॥

अमृतानलयुग्मैश्च तारद्विस्ताद्दशैरपि ।
सहस्र भेदयेन् कान्तैरग्नीषोममयै स्वरै ॥ १८ ॥

सूर्यसोमानिलान् हित्वा त्रिगत चैकमेव च ।
अष्टन्यूनसहस्र तदक्षराणि स्युरञ्जसा ॥ १९ ॥

बीजाष्टक तु तारादि ह्रस्वयुक्त भवेदथ ।
ईशानुप्रदेशस्थ [1]वह्नेर्वायुपदावधि[2] ॥ २० ॥

दत्त्वा [3]सूत्रयुग चारीं चतुर्वा विभजेद्ध्रुवम् ।
पञ्च पञ्चाशत कुर्यादराणा प्रतिभूमिकम् ॥ २१ ॥

सहस्र तान्यराणि स्युस्तेषु वर्णसहस्रकम् ।
न्यसेन् प्रागादि सोमान्त कोणसूत्रेषु वै तत ॥२२॥

न्यसेन्मन्त्राष्य वर्तिन्यश्चतस्रोऽग्निगुणा क्रमात् ।
जया च विजया चैव अजिता चापराजिता ॥२३॥

अग्न्यादीशानपर्यन्तसूत्रस्था मन्त्रदेवता ।
अराणि पूरयन्ती सा नेमि मौञ्जीनी स्थिता ॥

अरनेम्यन्तरस्थानि सर्वास्त्राणि च वासव ।
प्रवर्तकानि पुरत सर्वास्त्राणि पुरदर ॥ २५ ॥

निवर्तकानि पुरत शिरोभि शस्त्रचिह्नितै ।
कृताञ्जलीनि हस्तानि ध्यायेदुभयत समम् ॥

नेमिक्षेत्रे महालक्ष्मी पूर्वस्या दिशि सस्थिता ।
दक्षिणस्या महामाया पश्चिमाया सरस्वती ॥२७॥

सौम्याया दिशि विज्ञेया महिषासुरनाशनी ।
तद्बहि परितो देवा ब्रह्माद्यास्तु त्रिमूर्तय ॥ २८ ॥

तुर्यादिशक्तिसयुक्ता अवतारास्तत परम् ।
प्रकृत्यादिविशेषान्त चतुर्विंशतिसमितम् ॥ २९ ॥

प्रधिपूर्वे स्थित भागे तत्त्वजातमनुक्रमात् ।
भवोपकरणा देवा मध्यमे परिनिष्ठिता ॥ ३० ॥

पृथक् चरमभागस्था भौवना भुवनै सह ।
ब्रह्माण्डोदरसरूढा[4] भूर्भुव सुवरादिका[5] ॥ ३१ ॥

मेर्वाद्योऽखिला शैला गङ्गाद्या सरितस्तथा ।
क्षीराब्ध्याद्या समुद्राश्च द्वीपा जम्ब्वादिसज्ञिता ॥

वैमानिकगणा सर्व ग्रहा सूर्यादयस्तथा ।
नक्षत्रतारकाताराभूतप्रेतादयस्तथा ॥ ३३ ॥

त्रिस्त्रिंशच्च या कोट्यस्त्रिदशाना पुरदर ।
समाश्रिता प्रधि तास्तु सरघा इव सारघम् ॥

१७. सूर्येत्यादि । ह ह्रा इत्यादिभिरित्यर्थ । १८. अमृतेत्यादि । स्र स्रा इत्यादिभिरित्यर्थ । १९. सूर्येत्यादि । हकार सकार यकार च वर्जयित्वेत्यर्थ । अष्टन्यूनेति । ३१×१६×२= ९९२ अक्षराणि ज्ञेयानि । २०. पूर्वोक्त ९९२ अक्षरै सह बीजाष्टकयोगे सहस्राक्षराणि । अहिर्बुध्न्ये तु प्रकारान्तरेण सहस्राक्षरत्वमुक्तम् (२३ अ ८२, ८३) २१. चारी तिर्यग्गति । पञ्चभिर्गुणिता पञ्चाशत् २५० । २३ वर्तिन्य , वर्तिनीरित्यर्थ । मन्त्रदेवता इत्युत्तरेणान्वय । २९. तुर्यादीति । जाग्रत्स्वप्नसुषुप्तितुर्याख्येत्यर्थ । अवतारा व्यूहा । ३४. त्रिस इत्यादि । त्रयस्त्रिंशदित्यर्थ । सरघा मधुमक्षिका । सारघ मधु ।

[1] वह्निना मन्दिरस्थो A C. D [2] In A C D verses 43 to 49 and then 34b to 42 follow on here
[3] अग्रयुग चारीं च A [4] संरूढ A [5] आदिकम् A

अयुते द्वे सुरेशान ह्युभयोः प्रधिपार्श्वयोः ।
[1]अग्नयः परिवर्तन्ते प्रवर्तकनिवर्तकाः ॥ ३५ ॥

कालानलसहस्राभाः स्फूर्जज्ज्वालाकुलाकुलाः ।
प्रवर्तकानलास्तत्र दैत्यदानवदाहिनः ॥ ३६ ॥

धीराः प्रशान्तगम्भीराः प्रसन्नास्तिग्मतेजसः ।
निवर्तका ममेच्छातः शमयन्ति प्रवर्तकान् ॥३७॥

सुदर्शनमनोरन्ते यत्तत् संकर्षणोद्भवम् ।
लाङ्गलास्त्रं महाघोरं सर्वसंहारकारकम् ॥ ३८ ॥

तिर्यक् स्थितस्य नेम्यन्ते तस्य पूर्वार्धसंभवाः ।
प्रवर्तकास्तदूर्ध्वांशसंभवास्तु निवर्तकाः ॥ ३९ ॥

अग्नीषोममया एते प्रवर्तकनिवर्तकाः ।
अग्नीषोममयास्त्रोत्था तदुत्था चास्त्रसंततिः ॥४०॥

द्वेऽयुते शृणु मूर्तीस्त्वं वह्नीनां विविधात्मनाम् ।
याः स्मृत्वा पुरुषो घोरमापदर्णवमुत्तरेत् ॥ ४१ ॥

अशेषभुवनाधारश्चतुर्गत्यूर्जबिन्दुमान् ।
पिण्डोऽयं तारकः पूर्ववह्नीनां वपुरुच्यते[2] ॥ ४२ ॥

अमृताधारवह्न्यूर्जबिन्दुमांस्तारपूर्वकः ।
पिण्डो निवर्तकादीनां दिव्या तनुरुदीर्यते ॥४३॥

प्रधिं कालपुमव्यक्तव्यक्तसप्तकरूपतः ।
विभज्य दशधा तत्तद्रूपवर्णपुरोगमैः ॥ ४४ ॥

प्राग्भागादिक्रमेणैव स्वरपूर्वैः स्वरान्तिमैः ।
सूर्यानलयुगैः काद्यैरष्टाभिर्बीजनायकैः ॥ ४५ ॥

युक्तास्तारनमोऽन्तास्ताः प्रवर्तकतनूर्लिखेत् ।
अमृताग्नियुगैरेव निवर्तकतनूस्तथा ॥ ४६ ॥

एकैकाग्नेः शिखाः सप्त घोराः शान्ताश्च संस्मरेत् ।
आदितः सप्त युग्माद्याः स्वरसंभेदिताः क्रमात् ॥

सूर्याग्नियुगसंभूता अमृताग्नियुगोत्थिताः ।
वर्गान्तश्च प्रधानश्च सिद्धिदो वामनस्तथा ॥४८॥

श्वेतश्च तत्त्वधारश्च झषः शाश्वत एव च ।
छान्दःपतिस्तथा चक्री कालाद्यर्णाः सबिन्दुकाः ॥

नाभ्यरान्तस्थसूत्रस्थरूपाश्चत्वार ऐश्वराः ।
अरेषु परितो देवाः केशवाद्या व्यवस्थिताः ॥५०॥

स्वैः स्वैश्चिह्नैः सरोजाद्यैर्ध्येया दामोदरान्तिमाः ।
अरनेम्यन्तसूत्रस्थाः पद्मनाभादयोऽखिलाः ॥५१॥

सर्वे समन्विता देवाः स्वाभिः स्वाभिश्च शक्तिभिः ।
प्राग्भागे कमला देवी दक्षिणे कीर्तिरुज्ज्वला ॥५२॥

जया तु पश्चिमे भागे माया भागे तथोत्तरे ।
प्रत्येकं कोटिसंख्याभिः शक्तिभिः परिवारिताः ॥

अधितिष्ठन्ति तेऽभीक्ष्णं सहस्रारं सुदर्शनम् ।
कालचक्रमनाद्यन्तमस्य तेजः प्रकीर्तितम् ॥ ५४ ॥

३८. लाङ्गलास्त्रम् ; फट् मन्त्रः । ४१. द्वे अयुते इति छेदः । सन्धिरार्षः । ४२. अशेषभुवनाधारः रेफः । चतुर्गतिः यकारः । ऊर्जः ऊकारः । ४३. अमृताधारः वकारः । ४८. सूर्याग्नियुगं ह्व इति । अमृताग्नियुगं स्व इति । वर्गान्तः हकारः । प्रधानः मकारः । सिद्धिदः भकारः । वामनः बकारः । ४९. श्वेतः फकारः । तत्त्वधारः ञकारः । झषः झकारः । शाश्वतः जकारः । छन्दःपतिः छकारः । चक्री चकारः । कालः मकारः । ५२. शक्तयो

[1] In A. C. D. verses 35b to 49 are in a different order. *Vide* note on page 104.

[2] वह्न्येर्वपुदावधि A.

सवत्सरर्तुमासार्धमासाहोरात्रसञ्ज्ञितै ।
अक्षनाभ्यरनेम्यन्तै क्लृप्तपञ्चविभक्तिकम् ॥५५॥

[1]म्रियन्ते कालचक्रेण पुमाद्या पञ्च पञ्च च ।
सहस्रारेण चक्रेण नेम्यरप्रधिशोभिना ॥ ५६ ॥

[2]म्रियन्ते च षडध्वानो वर्णतत्त्वकलादय ।
सर्वतत्त्वमय देह वैष्णव पुरुषोत्तमम् ॥ ५७ ॥

धार्यते भ्राम्यते चैव यन्त्रारूढमिद परम् ।
नाभिकन्दस्थितेनैव सहस्रारेण नेमिना ॥ ५८ ॥

चक्रेणानेन हन्यन्ते रक्षोदैतेयदानवा ।
नानामन्त्रात्मना तेन सदन्त सुस्थितेन च ॥ ५९ ॥

विध्वसयति शत्रूश्च स्मृतमात्रमनन्तरम् ।
अभ्यस्यमानमनिश सहस्रारमिद नरै ॥ ६० ॥

क्लेशकर्माशयान् दोषानशेषान् क्षपयेत् क्षणात् ।
बीज पिण्ड च सज्ञा च मूर्ति चेति चतुष्टयम् ॥

पुष्यत्येतत् सहस्रार चक्रमाद्यन्तवर्जितम् ।
[3]सूर्येन्दुवह्निभिर्व्याप्य विश्वमेतच्चराचरम् ॥ ६२ ॥

आग्नेयी प्रथमा मूर्ति शक्तिर्दिव्या क्रियाह्वया ।
सहस्रारस्वरूपेण सृजत्यवति हन्ति च ॥ ६३ ॥

सूर्येन्दुवह्निभिर्व्यूहैर्व्यूह्येय हि क्रियाभिधा ।
उदिता ते सुरेशान भूयश्चैना निबोध मे ॥ ६४ ॥

इत्येवं कथितो व्यूह सूर्यसोमाग्निरूपक ।
व्यूहिनीं तामिमामद्य क्रियाशक्तिं निबोध मे ॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे क्रियाशक्तिप्रकाशो नाम
त्रिंशोऽध्याय

लक्ष्मीकीर्त्यादय अत्रैव विंशाध्याये उक्ता । ५५. विभक्तिर्विभाग । ५६. पञ्च पञ्च, पञ्चविंशति । पुमासमारभ्य पृथिवीपर्यन्ता मादिकान्तवर्णदेवता ।

इति त्रिंशोऽध्यायः

---

[1] भ्रम्यन्ते A
[2] भ्रियन्ते A
[3] D omits three lines from here
[4] श्रीपाञ्चरात्र A , श्रीपाञ्चरात्रे B

# एकत्रिंशोऽध्यायः

श्रीः—

या सा षाड्गुण्यतेजःस्था क्रियाशक्तिः प्रकाशिता।
आग्नेयं रूपमाश्रित्य सा धत्ते पौरुषं वपुः ॥ १ ॥

सर्वास्त्रशस्त्रसंस्यूतं[1] सूर्यसोमाग्निमूलकम्।
महत् सुदर्शनं नाम [2]नानारूपोपशोभितम् ॥ २ ॥

तस्य मध्ये [3]स्थिता शक्तिः पौरुषीं तनुमास्थिता[4]।
[5]सौम्याग्नेयस्वरूपेण तत्तत्कालव्यवस्थया ॥ ३ ॥

पुरस्ताद्दर्शितस्तस्या[6] वाचकस्ते चतुर्विधः।
तत्र संज्ञामयो मन्त्रो भूयसा बलवत्तरः ॥ ४ ॥

तस्य व्याख्यामिमां शक्र गदन्त्या मे निशामय।
या सा सोमात्मिका शक्तिरुन्मेषः प्रथमो हरेः ॥

मूलशक्तिरहं श्रीः सा प्रथमाक्षरसंस्थिता।
अमृता तृप्तिरूपा च सोमात्मा चाखिलेश्वरी ॥६॥

अमृतीकरणं कुर्यात् सर्गस्येन्दुकलास्थिता[7]।
शिरःपद्मादयो मन्त्राः परमेश्वरयुक्तया ॥ ७ ॥

अनया [8]स्तुतया कुर्यात्तृप्तिं संसिद्धिमेव च।
सृष्टिकृत्संयुता सेयं जीवशक्तिः सनातनी ॥ ८ ॥

त्रैलोक्यैश्वर्यदोपेता वायुबेद्माक्षरस्थिता।
ताराकारा रिपोर्मूर्ध्नि [9]चिन्त्योच्छेदनसिद्धये ॥९॥

अप्रमेयोपगूढाया अग्नीषोममयीजुषः।
अस्याः शक्तेः समुद्भूतं सूक्तं पौरुषमुज्ज्वलम् ॥१०॥

एतदादीनि सूक्तानि सहस्रमृषयो विदुः।
नित्यमाप्यायते मन्त्रः सोऽयमग्निजुषा मया ॥

तत्तत्कार्यजुषा तत्तद्वर्णशक्तित्रयीजुषा।
अनया यन्न साध्येत न तदस्ति जगत्त्रये ॥ १२ ॥

१. षाड्गुण्ये तत्रापि तेजसि भगवन्तयावस्थितेत्यर्थः। २. सुदर्शनस्य सर्वशस्त्रास्त्रनिबिडत्वमहिर्बुध्न्यसंहितायां विंशाध्याये उक्तम्। सहस्रारेत्यक्षरस्वरूपमभिप्रेत्य सूर्यसोमाग्निमूलकत्वोक्तिः। ३. भक्तपरिपालनदुष्टशिक्षणरूपकार्यमनुरुध्य सौम्याग्नेयस्वरूपत्वोक्तिः। ४. पौरुषमन्त्रसंज्ञामन्त्ररूपेण चातुर्विध्यम्। ६. प्रथमाक्षरः सकारः। तस्याष्टार्थादिरूपत्वमाह—अमृतेत्यादिना। तृप्तिसोमावपि सकारपरौ। १०. अस्या इति। प्रथमाक्षररूपाया इत्यर्थः। सकारात् पौरुषं सूक्तमुद्भूतमित्यर्थः। तथा चाहिर्बुध्न्यसंहिता—"अक्षरादादिमादस्याः सूक्तं पौरुषमुद्धृतम्। द्वितीयाक्षरसंभूतं श्रीसूक्तं नाम यज्जुने ॥" (१८. ३३) इति।

[1] शेसं तं A. B. C. G [2] नानाव्यूहो A. B. C. [3] क्रिया B.
[4] आश्रिता B. [5] स्वसौम्याग्नेयरूपेण A. B. C. G. [6] तस्य B. C.
[7] कलास्था A. B. C. [8] स्तुत्या B. [9] चिन्त्ये A. B.

सूते सा सकला शक्तीरनुजानाति ता पुन ।
संहरन्ती पुनश्चैता[1] इति च स्मर्यते तत ॥ १३ ॥

स्वमुन्मेषमधिष्ठाय परमात्मा स शक्तिराट् ।
उदितो जगतोऽर्थाय हेतिदेव सनातन ॥ १४ ॥

सूर्यश्च भोक्तृता प्राप्य प्राणयन् प्राण इष्यते ।
[2]आत्मान दर्शयत्येष त्रैलोक्यैश्वर्यदान्वित ॥ १५ ॥

हृत्पुण्डरीकमध्यस्थ य विचिन्वन्ति योगिन ।
यथावद् ध्यायतो वेध्य मुक्तेपोवगवत्तया ॥ १६ ॥

प्रकर्पेणोन्नयन् प्राणान् प्राण इत्येष[3] शब्द्यते ।
इन्दुमण्डलसवीतो व्यापिमानप्रमेयवान् ॥ १७ ॥

जिह्वामूलस्थितो ध्यातो वाक्प्रवृत्तिं नियच्छति ।
अमण्डले स्थितो ध्यात स एव हि सुधा[4] स्रवन् ॥

[5]निर्विपीकरण ध्यात करोति जगतामपि ।
रामोपगूढादस्माद्धि[6] श्रिय सूक्तं समुद्गतम् ॥ १९ ॥

एतदादीनि सूक्तानि सहस्रमृपयो विदु ।
तत्तत्कालजुषा तत्तद्वर्णशक्तित्रयीजुषा ॥ २० ॥

अनेन यन्न साध्येत न तदस्ति जगत्त्रये ।
हन्यते सकल लोक गमयत्यमल पदम् ॥ २१ ॥

त्याजयत्यखिल क्लेश गम्यते योगचिन्तकै ।
हेत्येव कथ्यते सद्भिरेव निर्वचनस्थितै ॥ २२ ॥

अशेषभुवनाधारा सङ्कल्पप्रबलीकृता ।
प्रत्यभिज्ञायते सैव शक्तिर्या परमात्मन ॥ २३ ॥

सरत्यस्याश्चल सर्वं स्रियते सकलै सदा ।
पृथिवी सस्थिता सेय स्तम्भे सृत्या नियुज्यते ॥

सहो नाम बल तत्र रमते तत् सहस्रधा ।
सहस्रति सहस्रा स्यादग्नीपोमात्मनो मम ॥ २५ ॥

अग्नीपोममयी सा मे शक्ति सर्वक्रियाकरी ।
सुसङ्कल्पसमिद्धा सा तेजसा राशिरूर्जिता ॥२६॥

सम्प्राप्यैवानल भाव कालपावकता गता ।
रेत्येव केवली भूत्वा ज्वलत्यविरतोदया ॥ २७ ॥

परमेश्वरभूता सा परमाश्चर्यकारिणी ।
र इत्येव महाशक्तिर्मदीयाद्या क्रियाह्वया ॥ २८ ॥

१३. शक्तित्रयी सूर्यसोमाग्निशक्तय । १४. हेतिदेव सुदर्शन । १५. सूर्यो हकर । प्राणोऽपि स एव । १६. मुक्तस्येत्यादि । अतिवेगेनेत्यर्थ । १७. व्यापी अनुस्वार । १८. जिह्वामूलेति कण्ठस्थानम् । अमण्डलमनुस्वार । १९. रामोपगूढादिति । इकारसहितादित्यर्थ । २१. हन्यत इत्यादिना हकारनिर्वचन क्रियते । "हन हिसागत्यो " इति धात्वथमभिप्रेत्याह—गमयतीति । २३. अशेषभुवनाधारो रेफ । २४. सा इत्यस्य निर्वचनमाह—सरतीति । सरति, गच्छतीत्यर्थ । स्रियते, गम्यते प्राप्यत इत्यर्थ । सृत्या गमनात् स्तम्भे स्तम्भने निश्चलत्व इति यावत् । गमनात् निवर्त्य स्तम्भनया नियम्यत इत्यथ । २५. सहस्रा इति समुदायस्य प्रकारान्तरेण निर्वचनमर्थं चाह—सह इत्यादि । सहस्शब्दात् वर्गाथकादुपरि रमतेर्निष्पन्नस्य र इत्यस्य सयोजने सहस्रेति रूपम् । २६. र इत्यस्य निर्वचनमाह—

[1] एना B D
[2] B omits four lines from here
[3] एप A C.
[4] सुधा C
[5] D breaks abruptly here
[6] दस्मादि B

संख्यानन्त्यं सहस्रं स्यादरानन्त्यं तदुच्यते ।
वर्मास्त्रयोः स्वरूपं च दर्शितं ते पुरंदर ॥ २९ ॥

ध्रुवश्च प्रणवोऽस्यादिः पूर्वमेव निरूपितः ।
एवमेव महामन्त्रः शब्दब्रह्मोद्गतो रसः ॥ ३० ॥

आथर्वणी महाशक्तिः क्रियाशक्तेः [1]प्रिया तनुः ।
त्रयीसारो ह्यथर्वाख्या पञ्चपर्वा महाश्रुतिः ॥ ३१ ॥

मन्त्रेण सूयतेऽनेन सारेणेव वनस्पतिः ।
अस्य त्वङ्गविधानज्ञाः षडङ्गानि प्रचक्षते ॥ ३२ ॥

गायत्रीमपि चक्राख्यां प्राकारं चाग्निसंज्ञितम्[2] ।
गोपनाद्वरुणोत्सेधात् सोदयादमृतात्तथा ॥ ३३ ॥

ऊर्ध्वं चक्राय च स्वाहा हृदादिस्तु शिखावधि ।
सूर्यज्वालपदाद्योर्ध्वं महायुक्तात् सुदर्शनात् ॥३४॥

ऊर्ध्वं चक्राय च स्वाहा वर्माद्योऽस्त्रान्तको विधिः ।
नमश्चक्राय तस्यान्ते विग्रहेऽसौ चतुर्युगः ॥३५॥

ज्वालाय च सहस्रान्ते धीमहीति नवार्णकः ।
[3]तन्नः प्रचोदयान्मध्ये चक्र इत्यष्टवर्णकः ॥ ३६ ॥

मुष्टिं वितर्जनीं कृत्वा तर्जनीं तर्जसंस्थिताम् ।
परितो भ्रामयेद्वह्निं ध्यायन् प्राकारसंस्थितम् ॥

अन्योन्यसंमुखे पाणितले वै दक्षिणोत्तरे ।
कनिष्ठाङ्गुष्ठयोरग्रे श्लिष्टे दीर्घास्तथापराः ॥ ३८ ॥

परितो भ्रामयेदेवं चक्रमुद्रेयमीरिता ।
अङ्गमुद्रास्तु वक्ष्यन्ते शक्तिमासमतुं शृणु ॥ ३९ ॥

पवित्रमनलारूढं सव्यापि प्रणवात् परम् ।
महासुदर्शनेत्येवं चक्रराजं महाध्वगम् ॥ ४० ॥

ततोऽस्तगततेत्यस्मात् सर्वदुष्टभयंकर ।
छिन्धि छिन्धीत्यत. पश्चाद्भिन्धि भिन्धि प्रकीर्तयेत् ॥

विदारयद्वयं पश्चात् परमन्त्रान् ग्रस ग्रस ।
द्विर्भक्षयेति भूतानि त्रासयेति द्विरुच्चरेत् ॥ ४२ ॥

वर्मास्त्रवह्निजायाः स्युः शक्तिग्रसनकृन्मनुः ।
स्वयं सुदर्शनो भूत्वा मन्त्रमुच्चारयन्निमम् ॥ ४३ ॥

शक्तिं मुखहृदादिभ्यः परस्याचूषयेद्धिया ।
षडक्षरस्य मन्त्रस्य शृणु ध्यानं पुरंदर ॥ ४४ ॥

अग्नीत्यादिना । काल्पावक्तां रेफरूपताम् । केवलीति शक्तिविशेषणम् । २९. निर्वचनान्तरमाह—सङ्ख्येत्यादिना । सहस्राण्यनन्तानि अराणि यस्येति समासः । ३०. ध्रुवः प्रणवः । ३१. पञ्चपर्वेति । नक्षत्रविधानविधिविधानसंहिताशान्तिरूपपञ्चकल्पेत्यर्थः । ३२. भूसारेण वृक्ष इवाभिवृद्धेत्यर्थः । षडङ्गानि हृदयादिषडङ्गानि । ३३. गोपन आकारः । वरुणो वकारः । उदय उकारः । अमृतः सकारः । वां सुं इति मन्त्रः । ३४. हृदादिः हृदयशिरःशिखारूपः । महायुक्तेति । महासुदर्शनायेति विवक्षितम् । ३५. वर्माद्य इति । कवचनेत्रास्त्राणि । चतुर्युगः ; अष्टाक्षरः । 'नमश्चक्राय विद्महे' इति । ३६. 'सहस्रज्वालाय धीमहि । तन्नश्चक्रः प्रचोदयात्' इति मन्त्रः । ४०–४३. पवित्रमित्यादि । 'ओं प्रं महासुदर्शन चक्रराज महाध्वग अस्तगत सर्वदुष्टभयंकर छिन्धि छिन्धि भिन्धि भिन्धि विदारय विदारय, परमन्त्रान् ग्रस ग्रस भक्षय भक्षय भूतानि त्रासय त्रासय' इत्यस्यानन्तरं कवचमन्त्रमस्त्रमन्त्रं च संयोज्यान्ते

[1] मद्रा C.   [2] संज्ञकम् C.   [3] A. B. C. omit this line.

एव ध्यात्वा पुनर्ध्यायेच्चतुर्बाहु सुदर्शनम् ।
अन्यथा नैव शान्ति स्यादस्ति तेजस्तथा हरे ॥

[1]घोरशान्तविभेदेन पौरुष ध्यानमीरितम् ।
इति ते सुरशार्दूल ध्यानमन्यच्च मे शृणु ॥ ६३ ॥

प्रकारा पौरुषा ये ये ध्यानेऽस्मिन् परिवर्णिता ।
[2]तान् सर्वान् मन्मयानेव सस्मरेच्छीघ्रसिद्धये ॥

अत्यद्भुतमिद शक्र रहस्य ते प्रकीर्तितम् ।
भूयो रहस्यमन्यच्च शृणु मे सुरपुगव ॥ ६४ ॥

आग्नेयी या मदीया ते पुरा शक्ति प्रकीर्तिता ।
सूर्यकोट्यर्बुदाभासा वह्निकोट्यर्बुदोपमा ॥ ६५ ॥

इदुकोट्यर्बुदाभासा मम स्पन्दमयी तनु ।
अमृत परमात्मानमशेषभुवनाधृतिम् ॥ ६६ ॥

आस्थाय पञ्चबिन्द्वात्मा स्फुरन्ती व्यापिन परम् ।
हिताय सर्वभूतानामुदेति परमेश्वरात् ॥ ६७ ॥

तामक्ष कल्पयेच्छक्ति तत्प्रभा नाभिमण्डलम् ।
[3]अराणि षण्मनोरर्णान् सूर्योद्दामौ सबिन्दुकौ ॥

सुस्थितौ नेमिगौ ध्यायेच्छेष तु प्रधिमण्डलम् ।
आत्मान मध्यतो ध्यायेत् स्व मायापरमात्मनो ॥

सूर्यानलान्तरस्थ च निरस्यन् सस्मरेज्जनम् ।
ध्यायन्ननिशमेव हि योगी ध्यानपरायण ॥ ७० ॥

विधूय निखिल दोष सासारिकमशेषत ।
मयि भक्ति परा प्राप्य मामेवान्ते समश्नुते ॥७१॥

अन्तरा परमात्मानममृत च स्थितो जपन् ।
मनीषी मनसा नित्य पीयूषाप्यायन स्मरेत् ॥७२॥

सुधयाप्लाव्यमानो हि [4]सतता शक्तिकोटरात् ।
प्राणेन प्राण्यमानश्च दग्धदोषोऽनलत्विषा ॥ ७३ ॥

पञ्चबिन्दुक्रियालाभादैश्वर्यं परमास्थित ।
सतताभ्यासयोगेन वशी युक्तो जितेन्द्रिय ॥७४॥

विहाय सकल क्लेश वैषमास्थाय मामकम् ।
दग्धो जातनलो योगी क्रियया सर्वतो वशी ॥७५॥

ईश्वर परमो भूत्वा सर्वव्याप्तिमय स्थित ।
मामेव मामक धाम मत्प्रसादादुपाश्नुते ॥ ७६ ॥

या क्रिया सा चिदाख्याता या चित्ति सा परा क्रिया ।
एते सपरमानन्दास्त्रयस्ते परिकीर्तिता ॥ ७७ ॥

अखण्डैका परा शक्तिश्चित्क्रियानन्दरूपिणी ।
वैष्णवी सा पराहता साह सर्वार्थपूरणी ॥ ७८ ॥

स्वरूपकथनमेतत् । अत एवास्या भूतमालेत्यपि व्यवहार । अक्षपट्क वर्णाध्वादि । ६१. एतस्य ध्यानेन सर्वारिष्टशान्तिरहिर्बुध्न्यसहिताया सप्तचत्वारिंशाध्याये वर्णिता द्रष्टव्या । ६६. स्पन्दमयी क्रियामयी । अमृत सकार । परमात्मा हकार । अशेषभुवनाधृति रेफ । ६७ पञ्चबिन्दु ईकार । व्यापी अनुस्वार । ६८. अराणि षडिति षडरचक्र विवक्षितम् । सूर्योद्दामौ दु इति । ६९ शेषमिति । षडित्येतदित्यर्थ । ७३. प्राणेन हकारेण । अनले रेफ । ७७. स्वस्वरूपस्य क्रियाचिदानन्दरूपतामाह—

[1] घोरशान्तादि B
[2] तन्मात्रम A G
[3] B omits two lines from here
[4] सुधया B C.

स्वाच्छन्द्यान्मम [1]संकल्पो द्विधैवं प्रविजृम्भते।
एका शक्तिः क्रियाह्वाना महाभूतिरथापरा॥ ७९॥

सामान्यतोऽनयोः शक्र स्थिताहं परमेश्वरी।
एषा ते सकला शक्तिः क्रियारूपा प्रदर्शिता॥८०॥

स्थूलसूक्ष्मपरत्वेन तारिकाया निशामय।
निमीलितक्रियाकारा स्पष्टैश्वर्यस्वरूपिणी॥ ८१॥

तनुः षाड्गुण्यरूपा मे भूतिः सा तारिकाह्वया।
तस्याः स्थूलादिरूपाणि यथावन्मे निशामय॥
उच्यमानानि देवेश सावधानेन चेतसा॥ ८२॥

इति [2]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे सुदर्शनप्रकाशो
नामैकत्रिंशोऽध्यायः

येति। ७९. द्विधेति। क्रियाविभूतिभेदेनेत्यर्थः। ८१. अनन्तराध्यायविषयभूतभूतिशक्तिवर्णनमवतारयति—निमीलितेति। भूतिशक्तिरूपे क्रियाशक्तिः निमीलितास्त इत्यर्थः। स्पष्टेति। ऐश्वर्यं विस्पष्टं भवतीत्यर्थः।

इत्येकत्रिंशोऽध्यायः

---

[1] [illegible] F. G.

[2] [illegible] A.; [illegible] B.

# द्वात्रिंशोऽध्यायः

श्री —

या ह्येषा परमा विद्या तारिका भवतारिणी ।
स्थूल सूक्ष्म पर चेति तस्या रूपत्रय शृणु ॥ १ ॥

पञ्चवर्णं चतुर्वर्णमिति स्थूलात्मक वपु ।
त्रिवर्णा सूक्ष्मसज्ञा मे परा विष्णुमयी स्थिता ॥२॥

इमास्तिस्रो ह्यवस्था मे प्रत्येक तु त्रिधा त्रिधा ।
स्थूले तु या परावस्था परमात्माश्रया तु सा ॥ ३ ॥

अशेषभुवनाधारविष्णुव्यापिसमाश्रया ।
भोक्तृभोग्यात्मिका चेय तस्या रूप निबोध मे ॥४॥

अशेषभुवनाधारनिलयव्यापिजन्मना ।
परमात्मादिकेनैव ललाटतटमेयुषा ॥ ५ ॥

आक्रम्य वैष्णव रूप स्वे पुन' प्रतितिष्ठति ।
तारकारणनादेन शोभमाना हरिप्रिया ॥ ६ ॥

भोक्तृभोग्यादिकं सर्वं भुवन बिभ्रती धिया ।
व्यापिन सर्वतो देवी परमात्मानमाश्रिता ॥ ७ ॥

तावत्तया स्थिता विष्णुरूपा स्थूला गति' परा ।
पञ्चकृत्यकरी शक्तिस्त्रिविधैश्वर्यबृंहिता ॥ ८ ॥

[1]प्राणयन्ती श्रिया देव जृम्भमाणोदधिभ्रमम् ।
आश्रित्य ह्यानल भावमिय सूक्ष्मा गतिर्मता[2] ॥९॥

सृष्ट्यादिक विधायाथ व्योमस्थ परमास्थिता ।
सर्वाश्चर्यकरी देवी सृष्टिस्थित्यन्तकारणम् ॥ १० ॥

सूर्यं समाश्रिता विष्णु कलयन्ती[3] जगत्स्थितिम् ।
कालपावकतेजोमि स्थूला स्थूलमयाद्भुता ॥ ११ ॥

कथिता गतयस्तिस्र स्थूलाया मम वासव ।
सूक्ष्मायास्तु गतीस्तिस्र शृणु वृत्रनिषूदन ॥ १२ ॥

१ विद्या चिद्रूपेत्यर्थ । भवतारिणीत्यनेन तारिकाया अन्वर्थत्वमाह । २. ह्रीं इति बिन्दोरुपरि घण्टानादवत् श्रूयमाण नाद सयोज्य पञ्चवर्णत्व, त विहाय चतुर्वर्णत्वमुपपादनीयम् । त्रिवर्णेति । ईरूपेत्यर्थ । पररूपमाह—विष्णुमयीति । केवलेकाररूपेत्यर्थ । ३. प्रत्येक त्रिधेति । स्थूलरूपे स्थूलसूक्ष्मपररूपेण, सूक्ष्मरूपे स्थूलसूक्ष्मपररूपेण, पररूपेऽपि स्थूलसूक्ष्मपररूपेणेति त्रैविध्यमिति भाव । स्थूले पररूपमाह—स्थूले त्विति। परमात्मा हकार । ४. अशेषभुवनाधारो रेफ । विष्णु ईकार । व्यापी अनुस्वार । आहत्य ह्रीं भवति । ५. ललाटतटमेयुषेत्यस्य रूपेणेति शेष । ६. आक्रम्येति वैष्णवरूपस्यानभिव्यक्तिरुच्यते । ८. तावत्तयेति । भोक्तृभोग्यरूपेणेत्यर्थ । अथ स्थूले सूक्ष्ममाह—पञ्चकृत्येत्यादि । सर्गादीनि पञ्च कृत्यानि । १०. स्थूले स्थूलरूपमाह—सृष्ट्यादिकमिति । सर्वाश्चर्येत्यादि । पूर्वं सूक्ष्मे जगत सृष्टिसकल्प उक्त । अत्र तु तस्य सृष्टिरुच्यत इति ध्येयम् ।

[1] प्राणयन्तं A B   [2] मम C   [3] कल्पयन्त A B G

अकालकलना सेयं सूक्ष्मा तु परमेश्वरी[1] ।
व्यापिनं परमात्मानं श्रयन्ती वर्तते ध्रुवा ॥ १३ ॥

शुद्धो वर्गस्तथाशुद्धो द्विविधं सृज्यमुच्यते ।
शुद्धेतरे स्थिता स्थूला शुद्धे सूक्ष्मा प्रतिष्ठिता ॥१४॥

तिस्रोऽप्यासां गतीः सम्यक् स्थूलाया इव लक्षयेत् ।
परा या मे तनुः शक्र तस्या रूपं निशामय ॥१५॥

सर्वव्याप्तिमती दिव्या निष्कला सा निरञ्जना ।
सा परा मन्मयी शक्तिः कथिता विष्णुसंज्ञया ॥१६॥

एषा सा वैष्णवी सत्ता सैषाहंता हरेर्मता ।
एषा सा योगिनां निष्ठा सैषा सांख्यात्मनां गतिः ॥

इयं सा परमा मूर्तिरियं सा परमा गतिः ।
शक्तिः कुण्डलिनी चाद्या भ्रमरी योगदायिका ॥

अनाहता ह्यघोषा च निर्मर्यादा नदोद्गता ।
शब्दब्रह्म तथा शक्तिर्मातृकायोनिरुत्तमा ॥ १९ ॥

गायत्री च कला गौरी शची देवी सरस्वती ।
वृषाकपायी सत्या च प्राणपत्नी यशस्विनी ॥२०॥

इन्द्रपत्नी महाधेनुरदितिर्देवनन्दिनी ।
रुद्राणां जननी देवी वसूनां तु हिता तथा ॥२१॥

आदित्यानां स्वसा नाभिरमृतस्य धृतिः परा ।
इडा रतिः प्रियाकारा गुरुधात्री महीयसी ॥२२॥

मही च विश्रुतिश्चैव त्रयी गौः प्राणवत्सला ।
शक्तिश्च प्रकृतिश्चैव महाराज्ञी पयस्विनी ॥ २३ ॥

तारा [1]सीता तथा श्रीश्च कामवत्सा प्रियव्रता ।
तरुणी च वरारोहा नीरूपा रूपशालिनी ॥ २४ ॥

अम्बिका सुन्दरी ज्येष्ठा वामा घोरा मनोमयी ।
सिद्धा सिद्धान्तिका योगा योगिनी योगभाविनी ॥

एवमादीनि नामानि शास्त्रे शास्त्रे मनीषिभिः ।
कथितानि रहस्यानि शक्तेः सिद्धान्तपारगैः ॥२६

सैषा शक्तिः परा दिव्या त्रिधा रूपैरवस्थिता ।
स्थूलसूक्ष्मपरत्वेन त्रैधमेतत् प्रदर्श्यते[2] ॥ २७ ॥

[3]अस्याः स्वरूपमी प्रोक्ता सा च त्रेधावतिष्ठते ।
अप्रमेयादिरूपेण तस्या व्याख्यामिमां शृणु ॥२८॥

षाड्गुण्यं यत् परं ब्रह्म वासुदेवाख्यमव्ययम् ।
सङ्गताखिलभेदं तदेकमेव यदा तदा ॥ २९ ॥

अप्रमेयाख्यया देवस्तदा योगिभिरीर्यते ।
व्याप्यव्यापकभेदो वा सृज्यसृष्टिविधापि वा ॥३०॥

१३. सूक्ष्मरूपस्य साधारण स्वभावमाह—अकालेति । अनेन पूर्वोक्तस्थूलरूपस्य कालकाल्यत्वमभिमन्यते । १४. विशेषान्तरमाह—शुद्ध इति । १५. प्रस्तुते त्रिविधे सूक्ष्मरूपे पूर्वोक्तस्थूलगतीरतिदिशति—तिस्र इति । परमियान् भेद —पूर्वोक्तस्थूलगतिरशुद्ध-विषया; इय तु शुद्धविषयेति । १६. अथ परायाः साधारण रूपमाह—सर्वव्याप्तिमतीत्यादि । १७. साख्यात्मनाम्; प्रकृतिपुरुषविवेकादिज्ञानरतामित्यर्थ । १८. तस्या नामभेदानाह—शक्तिरित्यादिना । १९. नदः; नाद । २८. ई, ईकार इत्यर्थ । २९. परायाः पररूपमाह—षाड्गुण्यमिति । सङ्गतेति । भेद ; भिन्न प्रपञ्च । प्रतिसचरे सकलस्यापि प्रपञ्चस्य ब्रह्मणि लयात् तथोक्ति । एकमेवेति । सूक्ष्मावस्थचिदचिद्विशिष्ट ब्रह्मैकमेव तत्त्वमभवदित्यर्थ ।

[1] हिता F

[2] प्रदृश्यते B C

[3] अव्याप्तित्वे अमी B F.

[1]न तदान्यप्रमेयत्व न किंचित्तस्य विद्यते ।
तदा शून्यमिवाकारै प्रसुप्तमिव सर्वत ॥ ३१ ॥

षाड्गुण्य ब्रह्म तत्रेयं सस्थिता विष्णुसज्ञया ।
अतरङ्गार्णवाकारा शक्तिशक्तिमतोर्गति ॥ ३२ ॥

तदा यदा पुनर्ब्रह्म वासुदेवाख्यमव्रणम ।
उन्मिषत्यात्मसकल्पात्तदा प्रथम उच्यते ॥ ३३ ॥

प्रथते हि यदा ब्रह्म शुद्धाशुद्धाख्यवर्त्मना ।
माया नाम तदा त्वेषा ब्रह्मसकल्परूपिणी ॥३४॥

सकर्षणादिक्षित्यन्तस्तस्या [2]गर्भमवस्थित ।
यदा पुन पर ब्रह्म स्वेच्छासपादित पृथक् ॥३५॥

व्याप्यव्यापकभेदेन सद्वितीयमवस्थितम् ।
पञ्चबिन्दुस्तदा देवी पञ्चकृत्यविधायिनी ॥ ३६ ॥

पराया इति ते प्रोक्ता मम तन्वा गतिस्त्रयी ।
रूप रूप विभज्यैषा तत्तत्तत्त्वार्णभेदिनी ॥ ३७ ॥

तत्तद्वाचकता [3]नीता स्वकामाज्जगतीतनु ।
तेषु तेषु हि तत्त्वेषु स्वात्मभूतावतिष्ठते ॥ ३८ ॥

मध्श सूक्ष्मरूपो यो गढोऽग्निरिव दारुषु ।
तत्तद्रूपमनुप्राप्ता[4] सेवनी नाम शाश्वती ॥ ३९ ॥

तत्तद्वर्णोपरागेण तत्तद्वयक्तिवपु स्वयम् ।
अधिदैवतभावेन तत्र योंऽश परात्मक ॥ ४० ॥

वैष्णव शक्तिरूपो मे नियच्छन्नवतिष्ठते ।
तत्तद्वाचकता याति देवी सेयमनश्वरी ॥ ४१ ॥

अशेषभुवनाधारा योगिनी परमेश्वरी ।
केवलस्तत्त्ववर्णस्तु त्रैलोक्यैश्वर्यदा गत ॥ ४२ ॥

तत्तत् स्थूलमय तत्त्व मदीय [5]वक्ति शाश्वतम् ।
तत्तद्वाचाभिधानेन तन्नियन्तृत्वदर्शने ॥ ४३ ॥

इयमेवेश्वरा देवी द्विधा सक्तावतिष्ठते ।
क्षादि शान्त पुरा यत्ते दर्शित ब्रह्मपञ्चकम् ॥ ४४ ॥

[6]क्ष इत्यादिस्वरूपण त्रैलोक्यैश्वर्यदा गता ।
स्वरूपे नियमे चैव द्वेधा सेयमवस्थिता ॥ ४५ ॥

धारणाना चतुष्क यद्वादि यान्तमुदीरितम् ।
तत्र सूक्ष्मपरे भावे स्थितेय पूर्ववद् द्विधा ॥ ४६ ॥

३१. प्रमेयत्व प्रमाविषयत्वम् । शून्यमिवेति । सर्वव्यापारोपरमात् असत्कल्पमित्यर्थ । बाह्याभिमतशून्याख्यतत्त्वनिरासायैवशब्द । ३२. अथ पराया सूक्ष्मरूपमाह—शक्तीति । यदेत्युत्तरवाक्यस्थमत्रादौ ज्ञेयम् । यदा शक्ते शक्तिमतश्च व्यक्ता गतिरवगति, तदेत्युत्तरत्रान्वय । ३३. प्रथम इति । सकल्प इति शेष । ३४. एषा, परा शक्तिरित्यर्थ । ३५. पराया स्थूलरूपमाह—सकर्षणेति । ३६ पञ्चबिन्दु, ईकार । ३७ त्रयी, स्थूलसूक्ष्मपररूपेण त्रिविधेत्यर्थ । ३९. सेवनीति जिह्वादिस्थानेषु वर्णोच्चारणाद्युपयोग्यवयवसघटनाविशेष उच्यते । ४०. योंऽश इति । अस्य सेयमित्यनन्तरश्लोकस्थेनान्वय । ४३. सर्वमपि स्थूलतत्त्व मदीयशक्त्या शाश्वत भवति । अनेन क्षणभङ्गवादनिरासोऽभिप्रेत । ४४. सक्तेति । आसङ्गयुक्तेत्यर्थ । तदेवाह—क्षादीति । ४५. द्वेधेति । सर्वेषा स्वरूप नियमन च प्रदर्शयन्ती द्वेधावतिष्ठत इत्यर्थ । ४६. वादियान्तचतुष्क धारणाचतुष्कमित्युक्तमित्यर्थ ।

[1] B omits four lines from here [2] गर्भ इव C, G [3] नीत्वा A
[4] प्राप्य C [5] शक्ति B [6] दियत्यादि A कृत्यादि F

[1]त्रैयनस्थो मकारोऽय[2] प्रोक्तश्चैतन्यवाचक ।
तत्रापि सूक्ष्मपरयोर्द्वेधेय दशयोर्द्वयो ॥ ४७ ॥

मायाप्रसूतिस्त्रैगुण्यरूपो यो भार्ण उच्यते ।
ई नाम पूर्ववद्देवी तत्रापि दशयोर्द्वयो ॥ ४८ ॥

बुद्ध्यहकारमनसा यद्रूप वादिक त्रयम् ।
तत्रापि पूर्ववद् द्वेधा देवीय दशयोर्द्वयो ॥ ४९ ॥

नादिके णादिके चैव तथेन्द्रियगणद्वये ।
दशयो सूक्ष्मपरयोरियं द्वेधावतिष्ठते ॥ ५० ॥

चादिके कादिके चैव स्थूलसूक्ष्मस्वरूपके ।
विभूतिपञ्चके देवी दशयो पूर्ववत् स्थिता ॥५१॥

सप्तत्या वितता भेदै शुद्धाशुद्धमयाध्वनि ।
नटीव स्वयमी शक्तिर्बिभर्ति बहुधा वपु ॥ ५२ ॥

[3]इयद्विस्तृतिमापन्नामीमिमा परमेश्वरीम् ।
विचिन्त्य परम याति पद विष्णो सनातनम् ॥५३॥

यत्र यत्र गता सेय शुद्धाशुद्धे तथाध्वनि ।
तत्र तत्र त्वजहती विष्णो सबन्धमी स्थिता ॥५४॥

एकद्वित्र्यादियोगेन स्वरव्यञ्जनरूपिता ।
शुद्धाशुद्धाध्ववर्गस्था नानाभेदोपपादिता ॥ ५५ ॥

जटोपरागहीनाया अस्या एव पुनस्त्रिधा ।
ज्ञेय स्थूलादिरूपेण विभेदस्तत्त्वचिन्तकै ॥५६॥

सृष्टिकृत्सयुता स्थूला सूक्ष्मा व्योमेशसयुता ।
निरञ्जना परा सेयमी इत्येवानुरागिणी ॥ ५७ ॥

निष्कम्पा दीपलेखेव पत्नी विष्णोरिय परा ।
सर्वेष्वाधारपद्मेषु निश्चलैवावतिष्ठते ॥ ५८ ॥

आबस्तिदेशादामूर्धब्रह्मयानमनुव्रता ।
एकेयमुज्ज्वला दीप्ता पावना च यशस्विनी ॥५९॥

ब्रह्मरन्ध्राद्विनिष्क्रान्ता महापद्ममुपेयुषी ।
ओतप्रोतात्मिका सेय परमानन्दवर्त्मनि ॥ ६० ॥

विलाप्य मार्त्यव रूपममृत स्रावयेन्नरम् ।
मन्त्राणा मन्मयाना हि मन्त्रैर्विष्णुमयै सह ॥६१॥

सा मे नूनमनूतश्रीरिति सख्या परा हि या ।
ते च साख्याद्वया मन्त्रा जपाद्भोगापवर्गदा ॥६२॥

४७. त्र्यवस्थ एव त्रैयवस्थ । ४९ बादिक बफमा । ५०. नादिक तवर्ग । णादिक टवर्ग । ५१. चवर्गपञ्चक कवर्गपञ्चक च तन्मात्रस्थूलभूतरूपतयोक्तमित्यर्थ । ५२ सप्तत्येति । शुद्धाशुद्धाध्वनो प्रत्येक पञ्चत्रिंशदिति आहत्य सप्ततिर्भेदा । ई शक्ति , ईकाररूपा शक्तिरित्यर्थ । ५६. जटेति । जकारटकारादीत्यर्थ । उपलक्षणमेतत् वर्णान्तरोपरागस्यापि । ५७ ईरूपस्य स्थूलादिभेदमाह—सृष्टीत्यादि । सृष्टिकृत् विसर्ग । व्योमेश अनुस्वार । ५९. बस्ति नाभेरधोभाग । ६०. ओतप्रोतेति । सर्वानुस्यूतेत्यर्थ । ६१. मृत्योरिद मार्त्यवम् , मरणधर्मेत्यर्थ । ६२. अनूनश्री , ५०० । साख्याद्वया ,

[1] त्रेधागम्यो A B    [2] य B. C.    [3] इयं B C F

अस्या एव परायास्तु[1] विप्रुषः परिकीर्तिताः ।
यथा हि किरणव्रातं तेजस्त्वं व्याप्य तिष्ठति ॥ ६३ ॥

यथा हि पार्थिवान् भावान् व्याप्य स्थैर्यं [2]व्यवस्थितम् ।
नानाविभवसंस्थानं नानारचनसंस्थितम् ॥ ६४ ॥

बाह्यमाभ्यन्तरं चैव भावं शब्दमयं समम् ।
व्याप्यैवमी स्थिता[3] देवी विष्णुपत्नी यशस्विनी ॥

स्थूलसूक्ष्मादिभेदोऽयं यथावच्छक्र दर्शितः ।
तारिकाया इदानीं त्वमङ्गादीनि शृणुष्व मे ॥६६॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे स्थूलादिप्रकाशो नाम
द्वात्रिंशोऽध्यायः

चिद्रूपिण इत्यर्थः । ६३. तेजस्त्वं भास्वरत्वम् । ६५. ईरूपिणी देवी स्थितेत्यन्वयः ।

इति द्वात्रिंशोऽध्यायः

---

[1] धनायास्तु B.
[2] अव B.
[3] ईस्थिता B. F.
[4] श्रीपञ्चरात्र A. ; श्रीपाञ्चरात्रे B.

# त्रयस्त्रिंशोऽध्याय

श्री [1]—

शृणु वत्स सुरेशान विद्यायास्तारिकाकृते ।
अङ्गोपाङ्गानि मन्त्राणि नानामन्त्रमयानि मे ॥ १ ॥

गोपन पञ्चबिन्दु च हूर्जमैरावण तथा ।
और्वं च पञ्चक चैते प्रत्येक व्यापिनान्वितम् ॥

प्राणानलोपरिस्थ तु कृत्वैतत् पिण्डपञ्चकम् ।
हृदादिनेत्रपर्यन्तमङ्गबीजमिद स्मरेत् ॥ ३ ॥

[2]हृद्बीजात् परतो योज्य ज्ञानायेति पद तत ।
हृदयाय नमश्चैव मन्त्रोऽय धारणप्रद ॥ ४ ॥

प्रणवादिनमोऽन्तोऽय मन्त्र एकादशाक्षर ।
पर प्रणवबीजाभ्यामैश्वर्याय पद न्यसेत् ॥ ५ ॥

शिरसे च [3]तथा स्वाहा ह्येष[4] एकादशाक्षर ।
पर प्रणवबीजाभ्या शक्तये च पद न्यसेत् ॥ ६ ॥

शिखायै वौषडित्येव शैखोऽय तु दशाक्षर ।
पर प्रणवबीजाभ्या बलायेति पद न्यसेत् ॥ ७ ॥

कवचाय हुमित्येव मन्त्रोऽय च दशाक्षर ।
पर प्रणवबीजाभ्या तेजसे च पद न्यसेत् ॥ ८ ॥

नेत्राभ्या वौषडित्येव नेत्रमन्त्रो दशाक्षर ।
प्राणानलोपरिस्थ तु विन्यसेत् परमेश्वरम् ॥ ९ ॥

तस्मात् प्रणवपूर्वात्तु पद वीर्याय विन्यसेत् ।
अस्त्राय च फडित्येव मन्त्रोऽय च दशाक्षर ॥

अङ्गषट्कमिद प्रोक्तमुपाङ्गत्रियुग शृणु ।
तारिका ते क्रमाद्दद्यात् पूर्ववत् षड्गुण पदम् ॥११॥

ज्ञानादितेज पर्यन्त तदन्ते च क्रमान्न्यसेत् ।
उदराय च पृष्ठाय बाहुभ्यामिति वै पदम् ॥ १२ ॥

२. गोपन आकार । पञ्चबिन्दु ईकार । ऊर्ज ऊकार । ऐरावण ऐकार । और्व औकार । व्यापी अनुस्वार । ३. प्राण हकार । अनल रेफ । पिण्डपञ्चकम्, ह्रा, ह्री, ह्रू, ह्रैं, ह्रौं इति मन्त्रपञ्चकम् । हृदादीति । हृदयशिर शिखाकवचनेत्राणीत्यर्थ । ४. मन्त्र निर्दिशति—हृदित्यादि । ओं ह्रा ज्ञानाय हृदयाय नम । ५–१०. ओं ह्रा ऐश्वर्याय शिरसे स्वाहा । आ ह्रू शक्तये शिखायै वौषट् । ओं ह्रैं बलाय कवचाय हु । ओं ह्रौं तेजसे नेत्राभ्या वौषट् । ओं ह्र वीर्याय अस्त्राय च फट् । ११, १२ ओं ह्रा ज्ञानाय उदराय नम । ओं ह्रीं शक्तये पृष्ठाय नम । ओं ह्रीं बलाय बाहुभ्या नम ।

[1] श्रीरुवाच C

[2] In the place of this and the next two l nes B reads the follow ng
पर प्रणवबीजाभ्या ज्ञानाय च पद न्यसेत् ।
हृदयाय नमश्चैव मनुरेकादशाक्षर ॥

[3] तत A B

[4] सैन B

ऊरुभ्यामथ[1] जानुभ्यां चरणाभ्यामिति क्रमात् ।
नमश्च परतो योज्यमुपाङ्गानामयं विधिः ॥ १३ ॥

इत्येवमङ्गोपाङ्गानां मन्त्रा द्वादश कीर्तिताः ।
अलंकारात्ममन्त्रांस्तु ब्रुवत्या मे निशामय ॥१४॥

कौस्तुभो व्योमसंभिन्नः परमात्मा ततः परम् ।
ऊर्ध्वाधोऽनलसंभिन्न ऊर्जेनापि समन्वितः ॥ १५ ॥

मृष्टिकृत्संयुतो मूर्ध्नि कौस्तुभो व्यापिसंयुतः ।
नमस्कृतिस्ततः पश्चात्ततः पश्चात् प्रभात्मने ॥१६॥

कौस्तुभाय ततः स्वाहा प्रणवाद्यस्तु कौस्तुभः ।
मन्त्रः षोडशवर्णोऽयं सर्वकर्मप्रसाधकः ॥ १७ ॥

उद्धरेत् प्रथमं तारं [2]धरेशं तत उद्धरेत् ।
तदधस्तृप्तिसंज्ञं[3] च वराहं तदधो न्यसेत् ॥ १८ ॥

मायया भूषयेत् पश्चाद्व्यापिना चाङ्कयेत्ततः ।
पञ्चात्मा वर्णपिण्डोऽयं नमस्कारं ततः परम् ॥

ततः स्थलजलोद्भूतभूषितेपदमुद्धरेत् ।
वनमाले ततः स्वाहा मन्त्रः सर्वार्थसाधकः ॥२०॥

एकोनविंशत्वर्णोऽयं वनमालामयो महान् ।
तारपस्यावसाने तु वामनार्णं समुद्धरेत् ॥ २१ ॥

तदधस्तृप्तिमायोज्य भूषयेदुदयेन तु ।
व्यापिना चाङ्कितः पिण्डश्चतुर्वर्णो महाद्भुतः ॥२२॥

नमस्कारस्ततः पश्चाच्छ्रीनिवासपदं ततः ।
पद्माय वह्निजाया च पाञ्चोऽयं [4]त्रिदशाक्षरः ॥२३॥

आदायादौ तु वैकुण्ठं रेफं तदुपरि न्यसेत् ।
आनन्देनान्वितं पश्चाद्व्यापिना चाङ्कयेत्ततः ॥

[5]कम्पकम्पपदं दद्यान्नेमिद्वन्द्वमतः[6] परम् ।
वरपाशाय वै स्वाहा प्रणवाद्यस्तु पाशराट् ॥ २५ ॥

मन्त्रः पञ्चदशार्णोऽयं कामिनां क्षिप्रसिद्धिकृत् ।
प्रणवान्ते विराट्संज्ञं व्यापिना मूर्ध्नि संयुतम् ॥

द्वयं पिण्डतया योज्यं रेफं कमलमङ्कुशम् ।
व्यापिना संयुतं मूर्ध्नि तृतीयमिदमक्षरम् ॥ २७ ॥

पदं निशितघोणाय चाङ्कुशाय शिखिप्रिया ।
इति पञ्चदशार्णोऽयमङ्कुशः शीघ्रसिद्धिदः ॥ २८ ॥

अलंकारात्ममन्त्राणामेतत् पञ्चकमीरितम् ।
आधारासनमन्त्राणां शृणु रूपं पुरंदर ॥ २९ ॥

यद्विना तारिकायास्तु पूरणं नैव जायते ।
अनलद्वयमध्यस्थः प्राणो मायी स बिन्दुमान् ॥

तत आधारशक्त्यै च प्रणवादिर्नमोऽन्तिमः ।
आधारशक्तिमन्त्रोऽयं विज्ञेयस्तु नवाक्षरः ॥३१॥

अनलद्वयमध्यस्थो बिन्द्वन्तोऽप्यूर्जसंयुतः ।
ततः पञ्चाग्निमूर्ताय नमोऽन्तः प्रणवादिकः ॥३२॥

१३. ओं ह्रीं ऐश्वर्याय ऊरुभ्यां नमः । ओं ह्रीं वीर्याय जानुभ्यां नमः । ओं ह्रीं तेजसे चरणाभ्यां नमः । १५–१७. ओं ठं ह्रूंः ठं नमः प्रभात्मने कौस्तुभाय स्वाहा । १८–२०. ओं ल्व्रीं नमः स्थलजलोद्भूतभूषिते वनमाले स्वाहा । २१–२३. ओं व्रुं नमः श्रीनिवासपद्माय स्वाहा । क्वचित् दशाक्षरः पठ्यते इति चतुर्भिः । २४, २५. ओं पाँ कम्प कम्प ठठ वरपाशाय स्वाहा । २६–२८. ओं द्रं क्रैं निशितघोणाय अङ्कुशाय स्वाहा । ३०–३१. ओं ह्रीं आधारशक्त्यै नमः । ३२. अनलद्वयमध्य इति । मन्त्र इत्युपरमते । ओं

[1] [illegible] B
[2] धरेशं F.
[3] शेष B.
[4] [illegible] A. B. C.
[5] कम्पकम्प B, C.
[6] मेदिन्द्रमतः B C.

मन्त्र कालाग्निकूर्मस्य विज्ञेयोऽय दशाक्षर ।
गोपनेनाङ्कित प्राण मूर्ध्नि च व्यापिना युतम ॥३३॥

प्रणवान्ते समुद्धृत्य ह्यनन्ताय नमस्तत ।
अष्टाक्षरो ह्यय मन्त्रो नागराजस्य कीर्तित ॥३४॥

कमल चाग्निरूपं च प्रधान पुरुषेश्वरम् ।
पिण्डीकृत्य चतुष्क तु गोपनव्यापिसयुतम ॥

वसुधायै नम पश्चात् प्रणवादिर्मनुस्त्वयम् ।
विश्वभराया विज्ञेय आधार परिकल्प्यते ॥३६॥

अमृत चरण चार्णद्वय पिण्डीकृत सह ।
गोपनव्यापिसयुक्त प्रणवान्ते समुद्धरेत् ॥ ३७ ॥

क्षीरार्णवाय च नम सोऽय मन्त्रो नवाक्षर ।
पवित्र सोदयव्यापिसयुत प्रणवान्तगम ॥ ३८ ॥

आधारपद्माय नम पद्मस्याय दशाक्षर ।
इत्थमाधारषटकस्य मन्त्रषट्कं प्रकीर्तितम ॥ ३९ ॥

आधारेशाख्यमन्त्राणा विधिं शृणु पुरदर ।
धर्ताजितोऽमृताधारो विबुधाख्यश्च वासव ॥

एताश्चतुर उद्धृत्य वर्णानेषामथोपरि ।
विन्यसेच्चतुरो वर्णान् सत्यादीन् साधकोत्तम ॥

त्रैलोक्यैश्वर्यदं दद्याच्चत्वार्येतानि वासव ।
बीजानि प्रणवादीनि धर्मादे षोडशात्मन ॥४२॥

धर्मादिकमधर्माद्यमृगाद्य च कृतादिकम् ।
चतुष्टयानि चत्वारि यानि [1]सिद्धानि लोकत ॥

चतुश्चतुर्विभागेन सज्ञा षोडश विन्यसेत् ।
बीजोपरि नमश्चान्ते मन्त्रा षोडश ते स्मृता ॥

सोदय सामृतं ह्रस्व प्रणवोपरि विन्यसेत् ।
अव्यक्तपद्माय नम स मन्त्रोऽव्यक्तपद्मक ॥४५॥

सूर्येन्द्वग्निपदेभ्यस्तु प्रत्येक मण्डलाय च ।
नमोऽन्ते प्रणवश्चादौ ते मन्त्रा मण्डलत्रये ॥४६॥

हूँ कालाग्निकूर्माय नम । ३३, ३४ ओं हा अनन्ताय नम । ३५, ३६. ओं क्ष्म्ला वसुधायै नम । ३७ ओं स्वा क्षीरार्णवाय नम । ३८. ओं पु आधारपद्माय नम । ४०–४३. धर्ता धकार । अजितो जकार । अमृताधारो वकार । विबुधो लकार । सत्य ऋकार । ओं धृ, ओं धॄ, ओं ध्ऌ, ओं ध्ॡ इति क्रमेण धर्मज्ञानवैराग्यैश्वर्याख्याधारेशबीजमन्त्रा । ओं जृ, ओं जॄ, ओ ज्ऌ, ओं ज्ॡ इति क्रमेण अधर्माज्ञानावैराग्यानैश्वर्याख्याधारेशबीजमन्त्रा । ओं वृ, ओं वॄ, ओ व्ऌ, ओं व्ॡ इति ऋग्यजु सामाथर्वाख्याधारेशबीजमन्त्रा । ओं ऌृ, ओं ऌॄ, ओं ऌ्ऌ, ओ ऌ्ॡ इति कृतत्रेताद्वापरकल्याख्याधारेशबीजमन्त्रा । ४४. अथ धर्मादीना षोडशाना सज्ञामन्त्रा उच्यन्ते—चतुरित्यादिना । ओं धृ धर्माय नम । ओं धॄ ज्ञानाय नम । इत्यादिक्रमेण ज्ञेया । ४५. ह्रस्व बकार । ओं ब्सु अव्यक्तपद्माय नम । ४६ ओं सूर्यमण्डलाय नम । ओं इन्दुमण्डलाय नम । ओं अग्निमण्डलाय नम । इति

[1] रूढानि B

गरुड तारकस्यान्ते तदन्ते तारिका स्मरेत् ।
रेफशङ्खादिदेवाढ्य [1]सोम व्यापिसमन्वितम् ॥
चतुर्थं सस्मरेद्बीज तदिद वल्सूदन ।
वैराजानलशङ्खाढ्य गोपन व्यापिसयुतम् ॥ ६६ ॥
सोमवर्णं स्मरेच्छक्र पञ्चम परमाद्भुतम् ।
अप्रमेयादिदेवादि यावद्गरुडवर्णकम् ॥ ६७ ॥
यथापठ समुच्चार्य वागीश्वर्यै ततो नम ।
[2]एकपञ्चवर्णको मन्त्रो वागीश्वर्या अय स्मृत ॥६८॥
कुर्याच्चतुर्थबीजेन गोपनादिविभेदिना ।
अन्तर्जातियुता सम्यगङ्गक्लृप्तिं विचक्षण ॥ ६९ ॥
गोपनादिविभिन्नस्य बीजस्याद्यन्तयोर्न्यसेत् ।
प्रणव च नमश्चैव ततो जातिं प्रकल्पयेत् ॥ ७० ॥
प्रणवत्रितय व्यापिसयुत सोदयश्च ग ।
गुरवेऽथ नम सोऽय प्रथितो गुरुपूजने ॥ ७१ ॥
प्रणवत्रितयस्यान्ते पवित्रो व्यापिसयुत ।
परमगुरवे नम प्रथितस्तु गुरोर्गुरु ॥ ७२ ॥
प्रणवत्रितयस्यान्ते व्याप्यानन्दयुतस्तु प ।
परमेष्ठिनेऽथ च नमो मन्त्रो गुरुगुरोर्गुरु ॥७३॥
तारपञ्चकमाह्लाद व्योम प्राणोपरि न्यसेत् ।
कालानलौ तु तदध सर्वलोकेश्वरोपरि ॥ ७४ ॥
यथाक्रमोदितैर्वर्णै पिण्ड कृत्वा तत स्वधा ।
पितृभ्योऽथ नम सोऽय पितृसघस्य मन्त्रराट्॥७५॥
पद् तारा आदिदेवोऽथ व्योमवान् केवलोऽथ स ।
रामवान् दमनश्चाथ सिद्धेभ्योऽथ ततो नम ॥
मन्त्रोऽयमादिसिद्धाना भगवद्भावितात्मनाम् ।
क्षेत्रेशाद्यादिसिद्धान्तान् विघ्ननिर्मथनक्षमान् ॥७७॥
[3]प्रागेव पूजयेन्मन्त्री[4] समाराधनकालत ।
अथ लोकेशमन्त्राणा लक्षण शृणु वासव ॥ ७८ ॥
प्राण धरेशमानन्द पिण्डीकृत्य क्रमस्थितान् ।
मूर्ध्नि व्योमयुत कृत्वा तत इन्द्राय वै नम ॥७९॥
ऐन्द्रोऽयमीरितो मन्त्र पावकादीन्निबोध मे ।
कुर्यात् प्राणानलानन्दैर्व्यापिनापि च पिण्डकम् ॥८०॥
प्राणकालादिदेवैश्च व्यापिनापि च पिण्डकम् ।
अग्नये नम इत्येव यमाय नम इत्यपि ॥ ८१ ॥
नर स भगवान् व्यापी पिण्डो निर्ऋतये नम ।
यातुधानेशमन्त्रोऽय जलेशस्यावधारय ॥ ८२ ॥
प्राण वरुणमानन्द व्यापिन पिण्डयेद् बुध ।
वरुणाय नम पश्चाद्वारुणोऽय मनूत्तम ॥ ८३ ॥
प्राण सूक्ष्मं तथानन्द व्यापिन पिण्डयेद् बुध ।
वायवे नम इत्येव वायवीयो मनूत्तम ॥ ८४ ॥

६९. ओं म्र्यां हृदयाय नम इत्यादयोऽङ्गमन्त्रा । जातिरित्यङ्गमुच्यते। ७१–७३. ओं ओं ओं गुं गुरवे नम । ओं ओं ओं प परमगुरवे नम । ओं ओं ओं पा परमेष्ठिने नम । ७४,७५. ओं ओं ओं ओं ओं हृह्म्रूं स्वधा पितृभ्यो नम । ७६, ७७. ओं ओं ओं ओं ओं ओं आ आदिसिद्धेभ्यो नम । ७९. ओं ह्ला इन्द्राय नम । ८०,८१. ओं ह्वा अग्नये नम । ओं ह्मा यमाय नम । ८२. ओं म्लं निर्ऋतये नम । ८३. ओं ह्वा वरुणाय नम । ८४. आ ह्या

[1] सोम B C.
[2] पञ्चवर्णको महामन्त्र A
[3] F omits three lines from here.
[4] मन्त्र B

घर्मांशुवरुणानन्दान् व्यापिना सह पिण्डयेत् ।
सोमाय नम इत्येवं सौम्यो मनुरुदाहृतः ॥ ८५ ॥

सूर्यमूर्जं तथा व्योम चक्रिणं पिण्डयेत् क्रमात् ।
ईशानाय नमः पश्चादीशानस्य मनूत्तमः ॥ ८६ ॥

प्राणं वैकुण्ठमानन्दं व्यापिना पिण्डयेत् क्रमात् ।
अनन्ताय नमः पश्चान्नागराजमनुस्त्वयम् ॥ ८७ ॥

प्राणं खर्वं तथानन्दं व्यापिना पिण्डयेत् क्रमात् ।
ब्रह्मणे नम इत्येवं ब्रह्मणो मनुरुत्तमः ॥ ८८ ॥

सर्वेषां प्रणवः पूर्वमायुधानामथो शृणु ।
अनलं जन्महन्तारं प्रधानमनलोर्जकौ ॥ ८९ ॥

सर्गेण पिण्डयेत् संज्ञां नमः कुलिशमन्त्रराट् ।
ऊर्जं विहाय तत्स्थाने मायया परिभूषितम् ॥९०॥

तदेव पिण्डं संज्ञा च नमः शक्तिमनुस्त्वयम् ।
अखण्डविक्रमं कालं लोकेशं परमेश्वरम् ॥ ९१ ॥

पिण्डीकृत्य [1]ततः संज्ञा नमो दण्डमनुस्त्वयम् ।
विश्वाप्यायकरं कालं लोकेशं परमेश्वरम् ॥ ९२ ॥

पिण्डीकृत्य [2]ततः संज्ञा नमः खड्गमनुस्त्वयम् ।
चन्द्री शान्तादिदेवौ च सृष्टिकृत् पिण्डिता इमे ॥९३॥

पाशाय नम इत्येवं पाशमन्त्रोऽयमद्भुतः ।
अजितो वरुणानन्दौ सृष्टिकृत् पिण्डिता इमे ॥ ९४ ॥

ध्वजाय नम इत्येवं ध्वजमन्त्र उदीरितः ।
परमात्मानलोद्दामान् पिण्डयेत् सृष्टिकृद्युतान् ॥९५॥

मुसलाय नमः पश्चान्मौसलोऽयं मनूत्तमः ।
अनलं जन्महन्तारमुदयं सृष्टिकृद्युतम् ॥ ९६ ॥

पिण्डीकृत्य ततः संज्ञा नमः शूलमनुस्त्वयम् ।
करालमनलारूढमोदनं सृष्टिकृद्युतम् ॥ ९७ ॥

पिण्डीकृत्य ततः संज्ञा नमः सीरमनुस्त्वयम् ।
[3]वरुणं च नरं चैव गोपनं सृष्टिकृद्युतम् ॥ ९८ ॥

[4]पिण्डीकृत्य ततः संज्ञा नमः पद्ममनुस्त्वयम् ।
सर्वेषां प्रणवः पूर्वो विष्वक्सेनमनुं शृणु ॥ ९९ ॥

अनलप्राणलोकेशान् व्यापिना पिण्डयेत् क्रमात् ।
वरुणं भूधरं चैव व्यापिना पिण्डयेत् क्रमात् ॥१००॥

पिण्डोऽयं ज्ञानदः पश्चाद्विष्वक्सेनस्य मन्त्रराट् ।
प्रणवादिस्त्वयं मन्त्रः सर्वार्थकृदुदीरितः ॥ १०१ ॥

ऊर्जहीनं तु यत् पूर्वं तेनानन्दादियोगिना ।
अङ्कस्त्वस्मिरमुष्य स्याजातिमुद्रासमन्विता ॥१०२॥

वायवे नमः । ८५. ओं घ्वां सोमाय नमः । ८६. ओं ह्चूं ईशानाय नमः । ८७. ओं ह्वां अनन्ताय नमः । ८८. ओं ह्रवां ब्रह्मणे नमः । ८९. ओं ज्म्रूः कुलिशाय नमः । ९०. ओं ज्म्रीः शक्तये नमः । ९१. ओं ड्मूः दण्डाय नमः । ९२. ओं ट्म्रूः खड्गाय नमः । ९३. ओं ट्शाः पाशाय नमः । ९४. ओं ज्वाः ध्वजाय नमः । ९५. ओं ह्रूः मुसलाय नमः । ९६. ओं जुंः शूलाय नमः । ९७. ओं क्रोः सीराय नमः । ९८. ओं व्राः पद्माय नमः । १००. ओं ह्रूं वौं ज्ञानदाय नमः । १०२. ओं ह्वीं

[1] मनुं B. C. F.
[2] मनुः F.
[3] F. omits two lines from here.
[4] C. omits five lines from here.

सोग वरणमीकार व्यापिना पिण्डयेत् क्रमात् ।
सुरभ्यै नम इत्येव तारपूर्वो मनुस्त्वयम् ॥ १०३ ॥

सुरभ्या कथित सर्वभोगसपूरणार्थक ।
प्रणवद्वितयस्यान्ते तारिकाद्वयमुद्धरेत् ॥ १०४ ॥

तत परमधामा चावस्थिते मदनुग्रहा ।
अभियोगोचते चेह तथैवावतरेति च ॥ १०५ ॥

इहाभिमतशब्द च सिद्धिदे इति च त्रयम् ।
ततो मन्त्रशरीरे च तारस्तारा नमो नम ॥ १०६ ॥

पञ्चचत्वारिंशद्वर्णो मन्त्र आवाहनार्थक ।
प्रणवस्तारिका प्राणास्त्रय सव्यापिनस्तत ॥ १०७ ॥

तिस्रश्च तारिका पश्चादिद शब्द त्रिरुच्चरेत् ।
गृहाण वह्निजाया च भोगदानमनुस्त्वयम् ॥ १०८ ॥

ओंकारमुद्धरेत् पूर्व विष्णु व्योमान्वित तत ।
तारिकामुद्धरेत् पश्चाद्भूयो विष्णु तथाविधम् ॥

ततो व्योमान्वित प्राण सोमनामसमन्वितम् ।
परे च परमेशे च प्रसीद प्रणव तत ॥ ११० ॥

तारिका च नमश्चान्ते प्रसादनमनुस्त्वयम् ।
प्रणवस्तारिका चैव ततो भगवतीति च ॥ १११ ॥

मन्त्रमूर्तेऽथ स्वपद समासादय तद्द्वयम् ।
क्षमस्वेति द्विरुच्चार्य तारस्तारा नमो नम ॥ ११२ ॥

वैसर्जनमनु सोऽयमित्येते मन्त्रनायका ।
कथिता सुरशार्दूल सर्वपापमलापहा ॥ ११३ ॥

अभक्ताना च ये नैव प्रदेया क्रूरकर्मणाम् ।
नास्तिकानामसाधूना धूर्ताना वञ्चनाजुपाम् ॥

भक्तानामास्तिकाना च श्रद्धासयमसेविनाम् ।
[1]मदीयक्रमसक्ताना सस्कृताना विशेपत ॥ ११५ ॥

वरवतश्चोपसन्नाना दृढश्रद्धावलम्बिनाम् ।
वैष्णवानामिद वाच्यमवाच्यमितरेपु तु[2] ॥ ११६ ॥

अन्यथा वक्ति यो मोहाल्लोभात् कामादथापि वा ।
अज्ञानाद्वालभावाद्वा[3] स याति नरकान् बहून्[4] ॥

तस्मादालक्ष्य वै सर्व गुणजात यथोदितम् ।
प्रब्रूयादुपसन्नाय धर्मेण न्यायतस्तथा ॥ ११८ ॥

हृदयाय नम इत्यादि । १०३. ओ म्ली सुरभ्यै नम । १०४–१०६. ओं ओं ह्रीं ह्रीं परमधामावस्थिते मदनुग्रहाभियोगोद्यते इहावतरेहाभिमतसिद्धिदे मन्त्रशरीरे ओ ह्रीं नमो नम । इत्यावाहनमन्त्र । १०७, १०८. ओ ह्रीं ह ह ह ह्रीं ह्रीं ह्रीं इदमिदमिदमर्घ्यं गृहाण स्वाहा इत्यादि । १०९, ११०. ओ ईं ह्रीं ईं हसपरे परमेशे प्रसीद ओं ह्रीं नम । इति प्रसादनमन्त्र । १११, ११२. ओ ह्रीं भगवति मन्त्रमूर्ते स्वपद समासादय समासादय क्षमस्व क्षमस्व

[1] मदीयक्रम I
[2] मरप C.
[3] तत् C.
[4] क्रमात् A.

प्रब्रूयाद्यो ह्यधर्मेण यो वाधर्मेण पृच्छति ।
तावुभौ नरकं घोरमृच्छतः कालमक्षयम् ॥ ११९ ॥

पृथिवीं रत्नसंपूर्णां दद्याद्यद्यपि वासव ।
नैव देयं ह्यभक्ताय नापरीक्षितशीलिने ॥ १२० ॥

इति ते भवतो भक्तिर्मयि शक्र महीयसी ।
तत्त्वतश्चोपसन्नस्य मयेह प्रीयमाणया ॥ १२१ ॥

अङ्गोपाङ्गादिमन्त्राणां मन्त्रकोशः प्रकाशितः ।
मुद्राकोशमिदानीं त्वं गदन्त्या मे निशामय ॥

इति [1]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे अङ्गोपाङ्गादिमन्त्रप्रकाशो नाम त्रयस्त्रिंशोऽध्यायः

ओं ह्रीं नमो नमः । इति विसर्जनमन्त्रः । ११९. अत्र "अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥" (२. १११) इति मनुवचनमवधेयम् ।

इति त्रयस्त्रिंशोऽध्यायः

---

[1] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B.

# चतुस्त्रिंशोऽध्यायः

श्री —

मुद्राकोशं प्रवक्ष्यामि मन्त्रकोशस्य वासव ।
येन विज्ञातमात्रेण मन्त्रसिद्धिर्महीयसी ॥ १ ॥

मुद्रा वै बन्धयेन्मन्त्री स्नानकाले जलान्तरे ।
आत्मनो न्यासकाले च पूजान्ते मण्डलानिधौ[1] ॥

अर्चाया मन्त्रविन्यासे ह्यर्घ्यपात्रेषु भोजने ।
पूर्णाहुत्यवसाने च मन्त्रे [2]ह्यभ्यन्तरस्थिते ॥ ३ ॥

हिंसकाना विघाताय सर्वविघ्नोपशान्तये ।
समुखौ तु करौ कृत्वा सुश्लिष्टौ सुप्रसारितौ ॥४॥

समुख मध्यमायुग्मनिक्षिप्ताङ्गुल्य परा ।
अन्योन्याभिमुखाश्चैव भुजङ्गन्दन कल्पिता ॥५॥

महाश्रीरिति विख्याता सर्वसौभाग्यदायिका ।
मोचनी सर्वदोषाणा शीघ्रसिद्धिप्रदायिनी ॥ ६ ॥

जडभूतस्य वै [3]जन्तोर्बोधनाभ्युदयात्मिका ।
प्रसार्य [4]वाममुत्तानमङ्गुल्यो [5]विरला स्थिता ॥

कार्यास्त्वाकुञ्चितप्रान्ता अङ्गुष्ठ सेतुवद्भवेत् ।
समुख तासु सलग्न करशाखासु मध्यमाम् ॥ ८ ॥

[6]हस्तसमुख तु बध्नीयाच्छक्तिमुद्रा सुखप्रदाम् ।
इमे मुद्रे महाभाग योगिवृन्दोपवन्दिते ॥ ९ ॥

परमूलपदस्थे तु मम प्रीतिप्रदायिके ।
मम स्थूलपदस्थाया योनिमुद्रा निशामय ॥ १० ॥

समुखौ तु करौ कृत्वा [7]सुश्लिष्टौ सुप्रसारितौ ।
मध्यतो मूलत पृष्ठे विपर्यस्ते ह्यनामिके ॥ ११ ॥

तर्जनीमूलयोर्न्यस्य ताभ्यामग्रे निगूहयेत् ।
मध्ययो शेषयोरग्रे कनिष्ठायुगल पुर ॥ १२ ॥

अन्योन्य पृष्ठतो लग्न तलमध्योन्नत भवेत् ।
अङ्गुष्ठाग्रद्वय कुर्यान्मध्ययोरग्रपर्वगम् ॥ १३ ॥

महायोनिरिति ख्याता मुद्रा सर्ववशकरी ।
त्रिविधा त्रिविधाया मे मुद्रैषा सप्रदर्शिता ॥ १४ ॥

सूक्ष्माख्या[8] शक्तिमुद्रा या विकारस्तत्र[9] वर्ण्यते ।
प्रदेशिन्यादितोऽङ्गुष्ठमेकैकद्वयेन सेतुवत् ॥ १५॥

[10]विन्यस्याङ्गुलिषु ज्ञेयाश्चतस्रो मुद्रिका इमा ।
शक्तीना तु मदीयाना लक्ष्म्यादीना पुरदर ॥ १६॥

लक्ष्मी कीर्तिर्जया माया देव्यो मच्छक्तयो हि ता ।
दक्षिणेन तु हस्तेन मुष्टिबन्ध प्रकल्पयेत् ॥ १७ ॥

अन्त स्थमुन्नत कृत्वा वामाङ्गुष्ठ सुरोत्तम ।
समुख हृदि हार्दैषा मुद्रा बुद्धिविवर्धनी ॥ १८ ॥

[11]प्रसृता अङ्गुली सर्वा अङ्गुष्ठेन तु सस्पृशेत् ।
शैरस्येषा भवन्मुद्रा मन्त्रसनिधिकारिणी ॥ १९ ॥

मुष्टि वितर्जनीं कृत्वा तर्जनी ह्यूर्ध्वसस्थिता ।
शिखामुद्रेति विख्याता सर्वदुष्टभयंकरी ॥ २० ॥

[1] म[illegible]नधौ A B
[2] या B
[3] जन्तोर्वेदना B
[4] वाममुत्ताना B
[5] विरलांशिता B G
[6] अर्थमुखां B C F
[7] सश्लिष्टौ C
[8] सूक्ष्माद्या B C
[9] तस्य B
[10] विन्यस्य स्य B
[11] प्रसृत द्रव्य B

दोषविघ्नविनाशाय सदा ह्येतां प्रदर्शयेत् ।
आदौ तस्मात् प्रयत्नेन यागवेश्मनि दर्शयेत् ॥२१॥

उत्सादं सर्वविघ्नानां कुरुते मन्त्रसंयुता[1] ।
उभयोरग्रतः शाखाः [2]संस्थास्तु करयोर्द्वयोः ॥

ताभ्यां मध्यमसंलग्नं करबन्धादितो भवेत् ।
वार्मण्येषा भवेन्मुद्रा द्वावंसावनया स्पृशेत् ॥२३॥

अभेद्या दुष्टसंघेन भूतवेतालयोगिभिः ।
कर्मकाले निबध्यैषा मन्त्रिणा च प्रयत्नतः ॥२४॥

करयोर्ग्रथिताङ्गुल्यः संवृताः पाणिपृष्ठगाः ।
तर्जन्यौ प्रान्तसंलग्ने सुषिरे चोच्छ्रिते तयोः ॥

अङ्गुष्ठौ मूलसंलग्नौ विपर्यस्तौ परस्परम् ।
चाक्षुष्येषा भवेन्मुद्रा निबध्या चक्षुरन्तिके ॥२६॥

तर्जनीं स्फोटयेद्दिक्षु दशस्वङ्गुष्ठकेन तु ।
द्रुतं करद्वयेनैव चक्षुर्भ्यां संनिरीक्षयेत् ॥ २७ ॥

अस्त्रमुद्रेति विख्याता त्रासनी देवविद्विषाम् ।
अङ्गानामियमुद्दिष्टा षण्मुद्री सर्वसाधनी ॥ २८ ॥

उपाङ्गत्रियुगस्याथ मुद्रा एता निशामय ।
अङ्गुलीः श्लेषयेत् सर्वाश्चतस्रो दक्षिणस्थिताः ॥

तासां मूले तथाङ्गुष्ठं तिर्यञ्चं विनिवेशयेत् ।
उपाङ्गानामियं मुद्रा तया तत्तत् स्पृशेत् पदम् ॥३०॥

अलंकारास्त्रमन्त्राणां [3]मुद्रा अथ निशामय ।
कनिष्ठानामिकामध्या मुष्टिवत् पाणिमध्यगाः ॥३१॥

उभयोर्हस्तयोः पश्चात्तौ मुष्टी श्लेषयेन्मिथः[4] ।
प्रसार्य तर्जनीद्वन्द्वं श्लेषयेदग्रतस्ततः[5] ॥ ३२ ॥

अङ्गुष्ठाग्रे विपर्यस्य तर्जन्योर्मध्यतो न्यसेत् ।
मुद्रैषा कौस्तुभी नाम मालमुद्रामिमां शृणु ॥३३॥

कण्ठादापादतः स्वांसौ[6] तर्जनीभ्यां परिभ्रमन् ।
[7]कुर्याद्युगपदेवैषा वनमालामयी शुभा ॥ ३४ ॥

न्यङ्गुष्ठा अङ्गुलीरष्टौ ग्रथयेदग्रतो मिथः ।
लम्बं बाहुद्वयं कुर्यादेषा वा वनमालिका ॥ ३५ ॥

अङ्गुष्ठौ पार्श्वतो लग्नावङ्गुल्यो विरलाः स्थिताः[8] ।
एषा पाङ्केरुही मुद्रा पुष्टिसौभाग्यवर्धिनी[9] ॥ ३६ ॥

उत्ताने दक्षिणे पाणावग्रेऽङ्गुष्ठकनिष्ठयोः ।
मेलयेत् सेतुवच्छिष्टं सुसंश्लिष्टं लतात्रयम् ॥ ३७ ॥

आकुञ्चितफणाकारा मुद्रा पाशा भवेदियम् ।
मुष्टिं पृष्ठस्थिताङ्गुष्ठं पाण्योर्मुष्टिद्वयं पुरा ॥ ३८ ॥

कुर्यादधोमुखं वामं तत्पृष्ठे दक्षिणं तथा ।
अथाधारादिशक्तेः स्यान्मुद्रोक्ता कूर्मवद्द्विजा ॥

अधोमुखस्य वामस्य ह्यनामातर्जनीद्वयम् ।
[10]आकुञ्च्य मध्यमापृष्ठे विन्यसेत्तु सुसंस्थितम् ॥

ऋजूमधोमुखीं कुर्यान्मध्यमामङ्गुलीं तथा ।
ततः कनिष्ठिकाङ्गुष्ठौ वलयत्तु प्रसारयेत् ॥४१॥

अनन्तासनमुद्रेयमनन्तोऽयं यथोत्थितः ।
इयमासनमुद्राणां प्रधाना परिकीर्तिता ॥ ४२ ॥

अविभागा परा शक्तिराधाराधारसञ्ज्ञिता ।
कूर्ममुद्रा तदुन्मेषा [11]नादात्मानन्तमुद्रिका ॥४३॥

भावनीयमिदं शश्वदित्यमासनकर्मणि ।
करद्वयेन बध्नीयाल्लग्नमुष्टिद्वयं पुरः ॥ ४४ ॥

[1] संयुतम् F.
[2] संस्था तु B.
[3] मुद्राम् B. C.
[4] बुधः A. G.
[5] तया B.
[6] स्वांसात् B. F.
[7] कुर्याच्च्युतपदे सैषा B.
[8] कृताः B.
[9] वर्धनी B.
[10] आमुच्य A. G.
[11] नामितानन्त C.

अङ्गुलीत्रितयेनैव अङ्गुष्ठौ तर्जनीद्वयम् ।
भ्रान्तलग्न तु तत् कुर्यात्तद्युग मेलयेत् पुन ॥४५॥

एषा सा पार्थिवी मुद्रा सर्वभूतविधारिणी ।
मणिबन्धौ तु सलग्नौ नखाग्राणि करद्वये ॥४६॥

कार्याणि साङ्गुलीकानि परस्परमुखानि तु ।
अङ्गुष्ठाग्रे निराधारे तन्मध्ये चालयेद् द्रुतम् ॥

मध्ये कुर्याच्च करयोरगाध[1] सुषिरोपमम् ।
क्षीरार्णवस्य मुद्रैषा पाद्मी पूर्वं प्रदर्शिता ॥ ४८ ॥

करद्वयमसलग्न कृत्वा तदनु योजयेत् ।
मुखे मुख तु तर्जन्योरेव मध्यमयो क्रमात् ॥४९॥

अनामयोस्तत पश्चाद्वक्त्रे वक्त्रं कनिष्ठयो ।
अङ्गुष्ठयुगल तत्तदङ्गुलीमुखयोर्न्यसेत् ॥ ५० ॥

एत मुद्राचतुष्क तु धर्मादौ तु चतुष्टये ।
अधर्मादिचतुष्काणा तद्वन्मुद्राचतुष्टयम् ॥ ५१ ॥

तदूर्ध्वस्थस्य पद्मस्य मुद्रा [2]पाद्मी पुरोदिता ।
दक्षिणस्य तु हस्तस्य तर्जन्यङ्गुष्ठमेलनम् ॥ ५२ ॥

कृत्वा तदनु तद्बन्ध विकास्य च शनै शनै ।
समुत्तान पुन कुर्याच्छाखासघ पृथक् पृथक् ॥

धामत्रयस्य मुद्रैषा चिद्वासनगता शृणु ।
ऋज्वौ प्रसारितौ हस्तौ कुर्यादञ्जलिरूपकौ ॥ ५४ ॥

चिद्वासनस्य मुद्रैषा शुद्धसत्त्वमयी परा ।
द्वात्रिंशदिति मुद्राणा सर्वपापविनाशिनी ॥ ५५ ॥

भूषणास्त्रासनार्थाना तत्र तत्र प्रदर्शिता ।
क्षेत्रेश्वरादिमुद्राणामिदानीं दशक शृणु ॥ ५६ ॥

मन्नमङ्गुलिभिघातं कृत्वा पाणिद्वयेन तु ।
यग संपीडयेत् कुर्यादङ्गुष्ठद्वयमुद्धृतम् ॥ ५७ ॥

मुद्रेयं क्षेत्रपालस्य सर्वदुष्टनिबर्हणी ।
उत्तानौ तु करौ कृत्वा निकटस्थौ पुरदर ॥ ५८ ॥

अङ्गुलीना गण सर्वं कुञ्चित मध्यसस्थितम् ।
अङ्गुष्ठौ पतितौ कृत्वा क्रमश [3]स्फुटता नयेत् ॥

श्रीबीजस्य तु मुद्रैषा प्रथम कथिता तव ।
समुत्थाप्य कराद्वामात्तर्जनीं चण्डबीजजाम् ॥

तामेव दक्षिणाद्धस्तात् प्रचण्डस्य निदर्शयेत् ।
मध्यमा वामहस्ताद्वै समुत्थाप्य जयस्य सा ॥६१॥

दक्षिणाद् विजयाख्यस्य बीजस्य परिकीर्तिता ।
वामाच्चानामिका प्राग्वत्कृत्वा गाङ्गस्य विद्धि ताम् ॥

दक्षिणाद्यामुनस्योक्ता मुद्रा बीजस्य वासव ।
मुद्रा शङ्खनिधे प्रोक्ता वामहस्तात् कनिष्ठिका ॥६३॥

तथा पद्मनिधेर्हस्ताद् दक्षिणात् सा कनिष्ठिका ।
दक्षिणेन तु हस्तेन साङ्गुष्ठेन तु मुष्टिना ॥ ६४ ॥

प्रदेशिनीमनामा च वामहस्तस्य पीडयेत् ।
प्रयत्नीकृतशाखाना पृष्ठे योज्याथ मध्यमा ॥ ६५ ॥

लम्बमानकराकारा यथा सदृश्यते च सा ।
मुष्टेर्नातिसमीपस्था वामहस्तात् कनिष्ठिकाम् ॥६६॥

दक्षिणाङ्गुष्ठपार्श्वेन[4] दण्डवत् परिभावयेत् ।
ईषत्तिर्यग्गतिस्पष्टौ वामोऽङ्गुष्ठस्तथा पर ॥६७॥

यथा तौ परिदृश्येते गजकर्णोपमौ शुभौ ।
गणेश्वरस्य मुद्रैषा सर्वविघ्नक्षयकरी ॥ ६८ ॥

सश्लिष्टौ मणिबन्धौ तु कृत्वा पाणिद्वये पुरा ।
सलग्नमध्यदेशात्तु प्रोन्नतं मध्यमायुगम् ॥ ६९ ॥

प्रदेशिनीयुग तद्वत्तथैवानामिकाद्वयम् ।
अङ्गुष्ठ द्विगुणीकृत्य नमयेत्तदधोमुखम् ॥ ७० ॥

[1] अगम्यं A B G
[3] स्फुटां A. B C.
[2] पाद्मा F
[4] भावेन A

शनैः शनैः स्पृशेद्यावत् स्व स्व [1]पाणिद्वयीवलम् ।
स्फुट [2]सुविरल कुर्यादङ्गुष्ठद्वितय तथा ॥ ७१ ॥

कनिष्ठिकाद्वय चैन समेन धरणेन तु ।
इय वागीश्वरी मुद्रा वाणीविभवदायिनी ॥ ७२ ॥

समुखौ सपुटीकृत्य द्वौ हस्तौ सप्रसारितौ ।
विनियोज्यौ ललाटाग्रे शिरसावनतेन तु ॥ ७३ ॥

गुर्वादित्रितयस्यैषा मुद्रा चेतःप्रसादिनी ।
प्रोत्तान दक्षिण पाणि कृत्वाङ्गुलिगण तत ॥

सलग्न कुञ्चयेत् किंचिदङ्गुष्ठ सप्रसार्य च ।
तिर्यक् शनैः शनैः किंचित् कुर्याच्चाधोमुख तत ॥

मुद्रा पितृगणस्यैषा नित्यतृप्तिकरी स्मृता ।
इय श्राद्धसहस्रेभ्य पितृप्रीतिकरी सदा ॥ ७६ ॥

दर्शनीया प्रयत्नेन पितृणा पूजने सदा ।
करद्वय समुत्तान नाभिदेशे नियोजयेत् ॥

वामस्य दक्षिण पृष्ठे मुद्रैषा सिद्धससद ।
सुपृष्ठ दक्षिण हस्तमात्मनस्तु पराङ्मुखम् ॥ ७८ ॥

पराङ्मुख लम्बमान वामपाणि प्रकल्पयेत् ।
वराभयदमुद्रे द्वे लोकेशानामिमे स्मृते ॥ ७९ ॥

एकैकेन तु मन्त्रेण वज्राद्येव क्रमात्तुतम् ।
अस्त्राख्या शक्तिसयुक्ता प्रागुक्ता सप्रदर्शयेत् ॥

लोकपालायुधाना तु पूजिताना क्रमादिह ।
वामहस्तकनिष्ठाद्यास्तिस्र स्वतलमध्यगा ॥ ८१ ॥

तासामङ्गुष्ठत पृष्ठे तर्जनी प्रोन्नता भवेत् ।
न सार्वशप्रदेशस्था ततो दक्षिणपाणिना ॥ ८२ ॥

अङ्गुलीत्रितयेनैव मुष्टिं बद्धा तु पूर्ववत् ।
तर्जनीं द्विगुणीकृत्य त्वङ्गुष्ठाग्रे नियोजयेत् ॥ ८३ ॥

प्रोद्यतो दक्षिणो बाहुश्चक्रक्षेपे यथोद्यत ।
विष्वक्सेनस्य मुद्रेयं विश्वबन्धनकृन्तनी[3] ॥ ८४ ॥

किंचिदाकुञ्चयेद्धस्त दक्षिण हृदयोपगम् ।
अङ्गुष्ठौ विरलौ स्पष्टौ मुद्रा ह्यावाहने स्मृता ॥

खड्गधारासमाकारौ विरलाङ्गुलिकावुभौ ।
अङ्गुष्ठौ दण्डवत् कृत्वा मुष्टिबन्ध शनैः शनैः ॥

कुर्यात् कनिष्ठिकादिभ्यो मुद्रैषा स्याद्विसर्जने ।
प्रसृतौ द्वौ करौ कृत्वा सुश्लिष्टौ चाप्यधोमुखौ ॥

कनीयस्यौ तथाङ्गुष्ठौ सुश्लिष्टौ च नियोज्य च ।
मध्यमाङ्गुलियुग्म चाप्यन्योन्यकरपृष्ठगम् ॥

प्रक्षिप्यानामिकायुग्म तर्जनीयुगल तथा ।
मुद्रैषा कामधेन्वाख्या सर्वेच्छापरिपूरणी ॥ ८९ ॥

द्विप्रकार तु मुद्राणा प्रयोग विद्धि वासव ।
अध्यात्म सविदाकार बाह्य वाक्कर्मचित्तजम् ॥ ९० ॥

अनेन विधिना मुद्रा यो बध्नाति विधानवित् ।
तेनेद मुद्रितं सर्वमपुनर्भवसिद्धये ॥ ९१ ॥

इति मुद्रागण सर्वस्तवोद्दिष्ट पुरदर ।
आराधनाधिकारार्थं शृणु स्नानविधिं परम् ॥ ९२ ॥

अन्तर्बहिर्मलोपेतमलक्ष्मी प्रतिपद्यते ।
तस्या निवारणार्थाय स्नान सर्वत्र शिष्यते[4] ॥ ९३ ॥

तत् पुनस्त्रिविधं स्नान जलमन्त्रस्मृतिक्रमात् ।
त्रिविध पुरुहूतैतत् स्मृतं शतगुणोत्तरम् ॥ ९४ ॥

पुष्करादिषु तीर्थेषु यत् स्नान जलजं [5]स्मृतम् ।
तत शतगुण स्नान भगवच्छास्त्रचोदितम् ॥ ९५ ॥

तस्माच्छतगुण मान्त्रं मन्त्राङ्गन्याससभवम् ।
तस्माच्छतगुणं ध्यान शुद्धसविन्मयं परम् ॥ ९६ ॥

[1] पाण्योर्द्वयोस्तथा B. C., पाणिद्वयोस्तलम् F
[2] स्वाभिमुख C
[3] कर्तनी B C.
[4] चेष्यते A C.
[5] मतम् B

आदौ सामान्यविधिना जलस्नानं समाचरेत् ।
विशेषविधिना पश्चाद्विशेषस्य विधिस्त्वयम् ॥९७॥

पूर्वं स्नात्वा मृदाम्भोभिः पश्चाद्गन्धादिलेपनम् ।
स्नानं स्यात्तन्मलध्वंसि प्राणायामं समाचरेत् ॥९८॥

द्वादशावृत्तया कुर्यात् पूरणं तारया पुरा ।
धारयेत् षोडशावृत्त्या द्विषट्केन पुनस्त्यजेत् ॥९९॥

सव्यदक्षिणपर्यायै रेचनान्तमरुत्क्रमैः ।
मलान् क्षपयति प्राणेन दोषान् पूर्वसंचितान् ॥

ततस्तत्तन्मयो भूत्वा मलिनं भूतपिण्डकम् ।
षाट्कौशिकमसारं च शोधयेद्धारणावशात्[1] ॥

पृथिव्यादीनि [2]सर्वाणि तत्त्वानि स्वस्वकारणे ।
धारणाभिर्नयेदस्तमव्यक्तान्तानि वै क्रमात् ॥१०२॥

क्षीरे क्षीरमिवात्मानं मयि संमिश्रयेत्ततः ।
भूत्वा लक्ष्मीमयः पश्चाद्भवेन्नारायणात्मकः ॥१०३॥

धारणाबन्धमासाद्य शुद्धसत्त्वेन चेतसा ।
परमात्मात्मकत्त्वं यत् सा शक्तिः परमा मता ॥१०४॥

तस्य एव स्वकं पिण्डं सदहेद्धारणाग्निना ।
चिदाशुशुक्षणेस्तेजःपुञ्जमचिन्त्यवर्णालयम् ॥ १०५ ॥

पततः संस्मरेन्मूर्ध्नि पिण्डं प्रज्वलितं ततः ।
शान्तमन्तःस्वसत्तत्त्वं भस्मीभूतरजस्तमम् ॥१०६॥

रजस्तमोमयं भस्म त्वपोह्योद्बोधवायुना ।
चिदानन्दमहाम्भोधेरतरङ्गगुणाकरात् ॥ १०७ ॥

प्रसृतं सृष्टिमार्गेण संस्मरेदमृतोदकम् ।
तेनाप्यायितमन्तःस्थं तत्सत्त्वं देहतां नयेत् ॥१०८॥

शुद्धं तत्सृष्टिमार्गेण संश्रयेद्भौतिकं वपुः ।
अन्तःशुद्धिरियं प्रोक्ता बाह्यशुद्धिमथो शृणु ॥ १०९ ॥

वक्ष्यमाणक्रमैरङ्गैर्मन्त्रन्यासं समाचरेत् ।
[3]बहिः शुद्धिर्भवेदेव तदा स्नानं समाचरेत् ॥

पवित्रपाणिरादाय मृत्स्नां मन्त्रमन्त्रिताम् ।
तां त्रिधा वामहस्ताग्रे मूलमध्याग्रतो न्यसेत् ॥१११॥

बोधशक्त्यात्मना पूर्वं तीर्थशुद्धिं समाचरेत् ।
तीर्थं तत् त्रिविधं प्रोक्तं स्थूलसूक्ष्मपरात्मना ॥११२॥

सर्पयत्यखिलं स्थूलं स्थूलरूपेण तज्जगत् ।
सत्त्वात्मना तु सूक्ष्मेण ससुरास्तर्पयेत्पितॄन् ॥११३॥

परेणानन्दरूपेण नयेन्मत्कर्मयोग्यताम् ।
तस्माच्छुद्धिः पुरा कार्या तीर्थे शास्त्रदृशा स्वयम् ॥

ज्ञानधारणयाकृष्य तीर्थसत्तां तु वैष्णवीम्[4] ।
[5]मयि शक्तौ लयं नीत्वा चिदानन्दमहास्पदे ॥

स्थूलं ज्ञानाग्निना दग्ध्वा ब्रह्मानन्देन पूरयेत् ।
ज्ञानशक्त्यावरोप्याथ तीर्थं सत्त्वं तु वैष्णवम् ॥

प्रथमे मध्यमेऽथान्ते मृद्भागे क्रमशः सुधीः ।
अस्त्रं च मूलमन्त्रं चाप्यङ्गमन्त्रं च संस्मरेत् ॥११७॥

दश दिक्षु क्षिपेदस्त्रं सर्वविघ्नोपशान्तये ।
मूलमन्त्रान्वितं भागं तीर्थमध्ये विनिक्षिपेत् ॥

[6]संनिधानं भवेत्तेन मन्त्रमूर्तेर्मम क्षणात् ।
मृद्भागमाङ्गमन्त्रं यत्तेनाङ्गानि विलेपयेत् ॥ ११९ ॥

जलमध्यं समाविश्य निमज्ज्योन्मज्ज्य वै पुनः ।
कराभ्यामस्त्रजप्तं म्भः पूर्वं मूर्ध्नि विनिक्षिपेत् ॥

द्वितीयं मूलमन्त्रेण तृतीयं चाङ्गमन्त्रकैः ।
ततस्तीरं समासाद्य सम्यगाचम्य वै ततः ॥१२१॥

स्नानं समाचरेन्मन्त्रैर्यथावन्न्यासकर्मणा ।
ध्यानस्नानं ततः कुर्यात् सावधानेन चेतसा ॥१२२॥ ✓

[1] स्नात् C
[2] तत्त्वानि कारणानि स्वकारणे B F
[3] B F omit this line
[4] ह व तु वैष्णवम् B C
[5] F omits three lines from here
[6] B omits four lines from here

स्वस्थितं पुण्डरीकाक्षं स्मृत्वा लक्ष्मीधरं परम् ।
तत्पादोदकजां धारां संस्मरेच्छिरसि च्युताम् ॥

तया संप्लावयेदन्तर्बहिश्च सकलं वपुः ।
एकैकशो द्विशो वापि त्रिशो वापि समाहितः ॥

यथाशक्ति यथाकालं त्रिविधं स्नानमाचरेत् ।
प्रणवाद्यैर्नमोऽन्तैश्च नामभिर्मन्मयान् सुरान् ॥

ऋषींश्च तर्पयित्वाथ स्वधान्ते तर्पयेत् पितॄन् ।
एवं स्नानं विधायाथ तीर्थस्थं मन्त्रनायकम् ॥१२६॥

आकृष्य पूरकेणाथ संस्मरेद्धृदयान्तरे ।
आकृष्य मनसास्त्रं च दिग्विदिक्स्थापितं पुरा ॥

यागाङ्गानि समादाय प्रयायाद्यागमन्दिरम् ।
स्वयं सिद्धमथार्षं वा सिद्धैर्वा परिकल्पितम् ॥१२८॥

मनुष्यैः कल्पितं वाथ मन्मयैर्भावितान्तरैः ।
सर्वलक्षणसंपूर्णं विमानं पाञ्चरात्रिकम् ॥ १२९ ॥

शुभं कमलिनीतीरं विजनं वा मनोहरम् ।
यद्वा विविक्तमुद्यानं पुण्यवृक्षोपशोभितम् ॥ १३० ॥

पुलिनं रमणीयं वा सिकतोपरि विस्तृतम् ।
अवातमजनस्पर्शमसमीपस्थदोषवत् ॥ १३१ ॥

यत्र वा रोचते चित्तं तत्र यायान्मनोवशात् ।
हृन्मध्यस्थे परे मन्त्रे प्रबुद्धानन्दविग्रहे ॥ १३२ ॥

दिगन्तरमपश्यन् वै मौनी संरोधितानिलः ।
प्राप्य स्थानं शुभं तत्र नासाग्रेण विरेचयेत् ॥१३३॥

मन्मन्त्रं परमात्मानं प्रदीप्तानलविग्रहम् ।
बहिरस्त्रं च विन्यस्य चरणेनाहनेत् क्षितिम् ॥१३४॥

स्मरन् मन्त्रमयीं लक्ष्मीं मामेवां परमेश्वरीम् ।
एकान्तदेशमासाद्य बध्नीयाद्रुचिरासनम् ॥ १३५ ॥

दर्भे चर्मणि वस्त्रे वा फलके यज्ञकाष्ठजे ।
अभिवन्द्य हरिं मां च भक्त्यैव[1] गुरुसंततिम् ॥

गृहीत्वा मानसीमाज्ञां तेभ्यस्तु शिरसा नतः ।
मानसीं निर्वपेत् [2]सर्वां क्रियां ज्ञानसमाधिना ॥

ज्ञानेन क्रियते यद्यत् कर्म ब्रह्मसमाधिना ।
शुद्धसत्त्वमयं तत्तदक्षयं भवति ध्रुवम् ॥ १३८ ॥

बाह्यद्रव्याश्रिता यस्माद् दोषा राजसतामसाः ।
ततस्तच्छोधनमपि कर्मणा मनसा गिरा ॥ १३९ ॥

तस्मादेकान्तनिर्दोषं भावनावासितं[3] तथा ।
तस्माज्ज्ञानं समास्थाय शुद्धं संवित्समुद्भवम् ॥१४०॥

ज्ञानभावनया कर्म कुर्याद्वै पारमार्थिकम् ।
इति स्नानविधिः सम्यक् कीर्तितस्ते सुरेश्वर ।
अङ्गन्यासादिकं स्थानं तव वक्ष्याम्यतः परम् ॥१४१॥

इति [4]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे स्नानविधिप्रकाशो नाम
चतुस्त्रिंशोऽध्यायः

---

[1] एवं B.
[2] सर्वाः क्रियाः B. F.
[3] भावितं B. G.
[4] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B.

## पञ्चत्रिंशोऽध्यायः

श्री —

अन्तर्यागादिसिद्धयर्थं भूतशुद्धिं निशामय ।
कथ्यमानं मया शक्र सावधानेन चेतसा ॥ १ ॥

[1]प्रकृत्यन्तस्य पृथ्व्यादेः [2]कादिभान्ततयैव च ।
मन्मयीकरणं बुद्धया भूतशुद्धिरिहोच्यते ॥ २ ॥

पृथिव्यादि प्रकृत्यन्तं यत् प्रकृत्यष्टकं स्थितम् ।
स्थूलसूक्ष्मविभेदेन तत्र रूपद्वयं विदुः ॥ ३ ॥

चक्षुर्गोचरसंस्थानं स्थूलरूपं तु वर्ण्यते ।
कारणाकारता यत्र तत्तु तन्मात्रमुच्यते ॥ ४ ॥

स्थूलसूक्ष्मविभेदेन तत्त्वमेतद् द्विरष्टकम् ।
विषयेन्द्रियवृत्तीश्च तत्र तत्र निवेशयेत् ॥ ५ ॥

घ्राणादि पायूपस्थादि गन्धादीति त्रयं त्रयम् ।
तन्मात्रवर्गं पृथ्व्यादौ प्रातिलोम्यात्क्रमं नयेत् ॥

तरङ्गा जलधौ यद्वदस्तं यान्ति समीरणात् ।
विषयेन्द्रियकल्लोला महाभूतमहोदधौ ॥ ७ ॥

सुसमीचीनया बुद्धया तद्वदस्तं नयेद् बुधः ।
[3]मनोऽभिमान इत्येतावहङ्कारे शमं नयेत् ॥ ८ ॥

प्राणमध्यवसायं च बुद्धितत्त्वे [4]निबर्हयेत् ।
सत्त्वं रजस्तमश्चैव त्रैगुण्यं प्रकृतौ नयेत् ॥ ९ ॥

यत्तत् त्रैगुण्यमव्यक्तं कारणं महदादिके ।
त्रैगुण्यं च प्रसूतिश्च मायेत्येतत् त्रिधा तु तत् ॥

एवं [5]तत्त्वविदा ज्ञेया एताः प्रकृतयो दश ।
स्थूलसूक्ष्मविभेदेन ताः पुनर्विंशतिः स्मृताः ॥ ११ ॥

स्थूलानां प्रकृतीनां तु दश मन्त्रा इमे स्मृताः ।
तत्तत्संज्ञा हुंफडन्तास्तारिकाद्या ध्रुवादिकाः ॥ १२ ॥

१. भूतशुद्धिर्नाम साधकस्य प्राकृतदेहस्थानां मांसमेदोऽस्थिभूयिष्ठानां भूतानां शुद्धीकरणम् । तच्च भगवदाराधनयोग्यतासंपत्त्यै । तत्प्रकारश्च प्राकृतानां तेषां स्वस्वकारणेषु लयचिन्तनपूर्वकं भगवति समर्पणं कृत्वा पुनस्तत्सकाशात् भगवन्मयाप्राकृतभूताविर्भावपूर्वकं तदारब्धदेहावस्थितिभावनम् । एषा च भूतशुद्धिः सर्वैरपि तान्त्रिकैः स्वस्वसमयानुसारेण स्वस्वतन्त्रेषु प्रतिपादिता दृश्यते । २. कादि भान्तमिति । ककारेण पृथिवी भकारेण प्रकृतिश्च गृह्यते । ७. पूर्वोक्तं लयं निदर्शनमुखेनाह—तरङ्गा इति । १०. त्रैगुण्यमिति । एषा क्रमेण प्रधानमव्यक्तं तम इत्यौपनिषदो व्यवहारः । १२. तत्तत्संज्ञा इति । आदौ प्रणवः, ततस्तारिका, ततो भूतसंज्ञा, ततो हुं फट् । आहत्य ओं ह्रीं पृथिव्यै हुं फट् इति

[1] F omits verses 2 to 23
[2] कादिदान्त A
[3] G omits this line
[4] निगूहयेत् A
[5] तत्र विधा B

मास मेदस्तथा स्मृत्वा रसो व्योमाक्षरत्रयम्[1] ।
परात् परद्वय चैव विन्दुनादविभूषितम् ॥ १३ ॥

दशाना सूक्ष्मरूपाणा शक्त्याद्यास्ता नव स्मृता ।
देहेपु जीवभूता या शक्त्य परसञ्ज्ञिता ॥ १४ ॥

मायाव्योमयुतानेतान् शक्त्यादींस्तदनु स्मरेत् ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥ १५ ॥

शान्त्यतीताभिमाना च प्राणा गुणवती तथा ।
गुणसूक्ष्मा निर्गुणा च एत संज्ञा क्रमात् स्मृता ॥

बीजाना [2]दशके तस्मिन् वह्निविष्ण्वर्धचन्द्रकान्[3] ।
सयोज्य मन्त्रान् जानीयादधिष्ठात्रीगतानिमान् ॥

गन्धश्रीश्च रसश्रीश्च रूपश्री स्पर्शपूर्विका ।
शब्दश्रीरभिमानश्री प्राणश्रीर्गुणपूर्विका ॥ १८ ॥

तथैव गुणसूक्ष्मश्रीर्मायाश्रीरिति सञ्ज्ञया ।
अधिष्ठात्र्योऽपि[4] वर्तन्ते शक्त्यो दशके मम ॥१९॥

एव परिकर बुद्ध्वा भूतशुद्धि समाचरेत् ।
स्थानशुद्धि पुरा कुर्याद्यथा तदवधारय ॥ २० ॥

कालाग्न्यर्कसहस्राभा निर्धूमाङ्गारसनिभाम् ।
मा स्मृत्वा मन्मुखोत्थेन वह्निना निर्दहेद्भुवम ॥

सोमायुताभमद्वक्त्रजेनासिञ्चेदथाम्बुना ।
स्थानशुद्धिर्भवेदेव भूतशुद्धिमथो शृणु ॥ २२ ॥

चतुरश्रा समा पीता वज्रचिह्ना वसुधराम् ।
मन्त्रेणाकृष्य देहान्त स्वस्थानस्था लयं नयेत् ॥

गन्धमात्रे ततस्तत्र स्वबीजेनास्तमानयेत् ।
मय्यधिष्ठानभूताया मा च बाह्याम्भसि क्षिपेत् ॥

मन्त्रेणार्धेन्दुसकाश पद्माङ्क तत्र दैवतम् ।
स्वस्थाने विलय नीत्वा रसमात्रे स्वमन्त्रत ॥२५॥

मन्त्रेण त प्रतिष्ठाप्य तत्र मय्यानयेद्द्वयम् ।
मा च व ह्नौ क्षिपेद्ब्रह्मधामाय तत्क्रमस्त्रयम् ॥

सर्वत्र नैक बुध्येत मच्छक्तेर्विलय बुध ।
यथा हि सर्पिरासिञ्चेत् क्षीरे तन्मथनोद्भवम् ॥२७॥

सर्पिरन्यत्र च क्षीरे तत्सर्पिष्यपि[5] चान्यकम् ।
एनमा प्रकृते शक्तीरधिष्ठात्री स्मरेद् बुध ॥

एव [6]मा परमा शक्ति नवशक्तिसमन्विताम् ।
[7]निर्गुणान्तविधा ध्याता मायाधिष्ठानकारिणीम् ॥

दशमीं तत्पर नीत्वा शक्तिमेकादशीं स्थिताम् ।
महाक्षोभमयीं लक्ष्मीं व्यूहाभ्युदयरूपिणीम् ॥३०॥ ✓

मन्त्र । जयाख्ये तु (१०–१५) तारिकास्थाने मन्त्रान्तराण्युक्तानि । १६. जीवशक्तीना नामान्याह—निवृत्तिरित्यादि । १७. वह्नीत्यादि । रीं इत्येनत् सयोज्येत्यर्थ । १८. गन्धश्रीरित्यादीनि शक्तिनामानि । २०. पुरेति । भूतशुद्धे पूर्वमित्यर्थ । २२. एव निर्दग्धस्य स्थानस्य पुनरुज्जीवनमाह—सोमेत्यादि । २३. मन्त्रेणेति । अत्र मन्त्र क्ष्मा इति जयाख्ये उक्त (१०–१७) २६. मन्त्रेणेति । प्वा इति जयाख्ये मन्त्र उक्त । आमयमिति । मायापर्यन्तमित्यर्थ । २७. नेकमिति । स्वयं सर्वत्रैकनिधि न बुध्येतेत्यन्वय । तदेव निदर्शनमुखेनाह—यथा हीति । तन्मथनेद्भवमिति सर्पिर्विशेषणम् ।

[1] व्योमाक्षर पुन C
[2] दश शक्तेऽस्मिन् A B
[3] चन्द्रमा A B C
[4] हि B C
[5] सर्पिरपि B G
[6] ता B C
[7] निर्गुणा तु निधामेता A B

एकादशीं च ता नीत्वा द्वादशीं परमात्मिकाम् ।
अनिर्देश्यामनौपम्या द्वादशीं ता मयि क्षिपेत् ॥

एव ता परमा शक्तिं द्वादशीमखिलात्मिकाम् ।
द्वादशान्तान्तमुन्नीय वर्णमय्या मयि स्मरेत्[1] ॥३२॥

अग्नीषोमार्ककोट्याभा[2] सर्वतोऽक्षिशिरोमुखी ।
धारासतानरूपा मे सूक्ष्मा वर्णमयी तनु ॥ ३३ ॥

सर्वजीवोपकाराय सर्वसभारसभृता ।
उदिता सा [3]पुरा विष्णोर्मेघाद्विद्युदिवोज्ज्वला ॥

शक्र —

कानि स्थानानि देहेऽस्मिन् यत्र कार्यो लय क्रमात् ।
कीदृशानि च बिम्बानि भूम्यादीना वदाम्बुजे ॥

श्री —

आ जानुतो भुव स्थानमा कट्या पयस स्मृतम् ।
आ नाभेस्तेजस स्थान वायो स्थान तदा हृद ॥३६॥

आ वर्णान्नभस स्थानमा विलाशाप्यहकृते ।
आ भ्रुवोर्महत स्थानमाकाशे तु[4] पर स्मृतम् ॥३७॥

तत प्रादेशमात्राग्रे मूर्धतश्चतुरङ्गुले ।
स्थाने प्रकृत्या शेष तदङ्गुलीना द्विरष्टकम् ॥३८॥

एकादश्या द्विषट्काया स्थान तत्त्वक्षरश्रिय ।
चतुरश्र भवेद्बिम्ब वज्राङ्क पार्थिव महत् ॥ ३९ ॥

अर्धेन्दुसदृश शुक्ल पद्माङ्क पयस स्मृतम् ।
त्रिकोण स्वस्तिकाङ्क च रक्त तैजसमुच्यते ॥ ४० ॥

[5]धूम्र षड्बिन्दुसयुक्त[6] वृत्त वायव्यमुच्यते ।
अञ्जन भ तथाव श बिम्बमात्र स्मृत परम् ॥ ४१ ॥

एव तत्त्वोपसहारे कृते हृत्कुहरोद्गतम् ।
ज्ञानरज्ज्ववलम्ब च सुषुम्नामध्यमानुगम् ॥ ४२ ॥

ऊर्ध्वमाजानुमुन्नीय शक्तिसोपानपङ्क्तिभि ।
द्वादशान्तान्तराजीव मध्यस्थाया मयि क्षिपेत् ॥४३॥

तदन्ते च[7] महापद्म सहस्रदलसयुतम् ।
सूर्यकोटिसहस्राभमिन्दुकोम्ययुतप्रभम् ॥ ४४ ॥

अग्नीषोममयान्त स्था महानन्दमयी तनु ।
अनिदेश्योपमा सविन्मयी सा म मिका परा ॥४५॥ ✓

३२. द्वादशान्तेति । मूर्ध्न उपरि मायातो द्वादशाङ्गुलादूर्ध्वं स्थान द्वादशान्तमिति साम्प्रदायिको व्यवहार । ३३. वर्णमयी तनु निर्दिशति—अग्नीत्यादि । धारसतानेति । अमृतधारासतानरूपेत्यर्थ । ३८. प्रकृत्या स्थानमाकाशे आह—तत इति । मूर्धतश्चतुरङ्गुलेऽर्ध्वभागे प्रकृत्या अवस्थानम् । तत षोडशाङ्गुलोपरि भागे अव्यक्तस्यावस्थानम् । ३९. तत एकादशाङ्गुलोपरि भागे मायास्थानम् । ततो द्वादशाङ्गुलोपरि भागे शब्दब्रह्मस्थानमिति विवेक । इदमेव द्वादशान्तमित्युच्यते । ४१. बिम्बमात्रमिति । प्रधानादीना बिम्बमात्रमेव । न वर्णादिकमित्यर्थ । ४३ मयि क्षिपेदिति । देहस्य दहनचिन्तने तदनन्तरमस्यापि दहनचिन्तनप्रसक्तौ तन्निवारणाय जीवस्य देव्या निक्षेप उच्यते । ४४. तदन्ते

[1] अनुस्मरेत् C
[2] कोट्याभ B
[3] परा B
[4] आकाशेऽस्य A
[5] C omits this line
[6] बिन्दुयुत F
[7] तु A C

अनामायां जयां मायां कनिष्ठायां ततो न्यसेत् ।
सतारतारिकासंज्ञानत्यन्तस्तन्मनुक्रमः ॥ ६२ ॥

कनिष्ठिकाद्यासु ततो हृदयादीन्यनुक्रमात् ।
अङ्गानि पञ्च विन्यस्य नेत्रमङ्गेषु संस्मरेत् ॥ ६३ ॥

कौस्तुभं दक्षिणतले वनमालां तथापरे ।
दक्षिणे मध्यतः पद्मं न्यसेद्वामतलेऽपि च ॥ ६४ ॥

अङ्कुशं दक्षिणे न्यस्येत् पाशं वामतले तथा ।
अनेन विधिना पूर्वं हस्तन्यासं समाचरेत् ॥ ६५ ॥

ततस्तु विग्रहन्यासं यथा कुर्यात्तथा शृणु ।
आ मूर्ध्नश्चरणान्तं च चरणाच्च शिरोऽवधि ॥६६॥

[1]तारकं तारिकां चैव तौ च चन्द्रातपोपमौ ।
वामस्कन्धे ततो लक्ष्मीं न्यसेत् कीर्तिं च दक्षिणे ॥६७॥

जयां दक्षिणपाणिस्थां मायां वामकरस्थिताम् ।
नासान्तरे च हृन्मन्त्रं शिरोमन्त्रं च मूर्धनि ॥६८॥

शिखां चैव शिखास्थाने स्कन्धयोः कवचं ततः ।
विन्यस्य नेत्रयोर्नेत्रमस्त्रं पाणितलद्वये ॥ ६९ ॥

नाभौ पृष्ठे करद्वन्द्व ऊरुजानुपदेषु च ।
न्यसेत् सम्यगुपाङ्गानि त्रियुगं मन्त्रवित्तमः ॥७०॥

वक्षःस्थं कौस्तुभं मध्ये कण्ठे च वनमालिकाम ।
पङ्कजे करयोर्न्यस्य मन्त्रमावर्तयन् द्विधा ॥ ७१ ॥

वामहस्ते ततः पाशमङ्कुशं दक्षिणे करे ।
पादयोस्तारिकां स्थूलां सूक्ष्मां चैवोपसंधिके ॥७२॥

चरमां ब्रह्मरन्ध्रे तु मन्त्राणां नायिका हि सा ।
चन्द्रिकातपसंकाशं न्यासे न्यासे मनुं स्मरेत् ॥७३॥

मनसा भावयेन्मुद्रास्तत्र तत्र च साधकः ।
तारिका या परा देवी तया व्याप्तानुस्मरेत् ॥७४॥

विन्यस्तान् सकलान् मन्त्रान् सर्वतः संप्लुतोदवत् ।
एवं कृतेऽनुसंधाने मन्त्राणां भिन्नवर्त्मनाम् ॥७५॥

अपामिवोदधिस्थानामेकीकारः[2] प्रजायते ।
एवं न्यासे कृते मन्त्री साक्षाल्लक्ष्मीमयो भवेत् ॥७६॥

सर्वाधिकारभागी स्यादाश्रित्य ध्यानजं बलम ।
ध्यायिनः सर्वसिद्धीनामाविर्भावश्च जायते ॥७७॥

न्यस्ताङ्गो निर्भयस्तिष्ठेद्देशे दुष्टसमाकुले ।
विजयेतापमृत्यूंश्च सर्वांश्चैवौपसर्गिकान् ॥ ७८ ॥

न्यस्ताङ्गो विधिवन्मन्त्री यथाशास्त्रेण चेतसा ।
तनुं मन्त्रमयीं तां तु मां ध्यायेत् परमेश्वरीम् ॥७९॥

अहं स भगवान् विष्णुरहं लक्ष्मीः सनातनी ।
इत्येवंभाववान् योगी भूयो नैव प्रजायते ॥ ८० ॥

इतीयं भूतशुद्धिस्ते यथावच्छक्र वर्णिता ।
अन्तर्यागमथो वक्ष्ये तत्त्वतस्तन्निशामय ॥ ८१ ॥ ✓

इति [3]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे भूतशुद्धिप्रकाशो नाम
पञ्चत्रिंशोऽध्यायः

६२. सतारेत्यादि । ओं ह्रीं लक्ष्म्यै तर्जनीभ्यां नमः इत्यादि प्रकारेणेत्यर्थः । ६४. अथ करन्यासः—कौस्तुभमित्यादिना । मध्यतः; तल इत्यर्थः । ६६. मूर्धानमारभ्य चरणपर्यन्तं चरणमारभ्य मूर्धपर्यन्तं च देहन्यासमाह—आ मूर्ध्न इति ।

## इति पञ्चत्रिंशोऽध्यायः

---

[1] B. omits five lines from here. C. omits four lines from here

[2] एकाकार: B.

[3] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B

# षट्त्रिंशोऽध्यायः

श्रीः—

ब्रह्मानन्दमयी शक्र भोगैर्यत् पारमार्थिकैः ।
इज्येयं हृदयान्तःस्था सोऽन्तर्याग इति स्मृतः ॥ १ ॥

पद्मं वा स्वस्तिकं वापि बद्ध्वा योन्यासनं तु वा ।
नाभिमेढ्रान्तरे ध्यायेच्छक्तिमाधाररूपिणीम् ॥ २ ॥

देवीं केनाप्यनाधेयां नीरूपां ज्योतिरात्मिकाम् ।
तदूर्ध्वे कालकूर्मं तु विमलं दीप्तविग्रहम् ॥ ३ ॥

कूर्माकारं परं देवं शङ्खचक्रगदाधरम् ।
तस्य चोपरि नागेन्द्रं पूर्णचन्द्रनिभाननम् ॥ ४ ॥

फणासहस्रसंपूर्णं मदाघूर्णितलोचनम् ।
चक्रलाङ्गलहस्तं च प्रणमेत्तं परात् परम् ॥ ५ ॥

तदूर्ध्वे [1]वसुधां देवीं कुङ्कुमक्षोदसंनिभाम् ।
हेमरत्नविचित्राङ्गीं प्रसन्नवदनेक्षणाम् ॥ ६ ॥

बद्धाञ्जलिं शिरोदेशे संस्मरन्तीं विभुं स्मरेत् ।
चतुर्धा भाजिते क्षेत्रे नाभिमेढ्रान्तरस्थिते ॥ ७ ॥

एवमाधारशक्त्यादिदेवताः संस्मरेदिमाः[2] ।
नाभौ क्षीरार्णवं ध्यायेत् कुन्देन्दुधवलाकृतिम् ॥८॥

स्रोतोरश्मिभिराकीर्णं पूर्णचन्द्रनिभाननम् ।
गम्भीरविग्रहं ध्यायेद्रूपवन्तमरूपिणम् ॥ ९ ॥

ततः समुत्थितं पद्मं ध्यायेत् क्षीरार्णवोदरात् ।
प्रशान्तपावकाकारमुदयादित्यवर्चसम् ॥ १० ॥

लम्बोदरं हसन्तं च सितदन्तं शुभाननम् ।
द्विभुजं वेष्टितं शश्वच्छुभैर्विविधषट्पदैः ॥ ११ ॥

सहस्रदलसंपन्नं[3] सहस्रकिरणावृतम् ।
सहस्ररश्मिसंकाशं तत्पृष्ठे चासनं न्यसेत् ॥ १२ ॥

धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमादिमान् ।
आसनस्य स्मरेत् पादानाग्नेयादिविदिग्गतान्[4] ॥१३॥

[5]पुरुषाकृतयः सर्वे सिताः सिंहानना इमे ।
महोत्साहा महावीर्या मद्धारणकृतोद्यमाः ॥ १४ ॥

पूर्वादिदिग्गता ज्ञेया धर्मादीनां विपर्ययाः ।
अधर्मं च तथाज्ञानमवैराग्यमनैश्वरम् ॥ १५ ॥

पुरुषाकृतयश्चेमे बन्धूककुसुमोपमाः ।
प्रागीशानदिशोर्मध्ये प्रागाग्नेयदिगन्तरे ॥ १६ ॥

२. आधारशक्तिस्थानमुच्यते—नाभीत्यादिना । ३. तदूर्ध्वे इति । आधारशक्तेरूर्ध्वभाग इत्यर्थः । ४. तस्येति । कूर्मस्योपरीत्यर्थः । ६. तदूर्ध्वमिति । नागेन्द्रासनादूर्ध्वमित्यर्थः । ७. संस्मरन्तीमिति । ध्यायन्तीमित्यर्थः । १२. तत्पृष्ठ इति । पद्मपृष्ठ इत्यर्थः । न्यसेत्; न्यस्त ध्यायेदित्यर्थः । १३. आसनस्य पादाः धर्मज्ञानादयः आग्नेयादिविदिक्षु ज्ञेयाः । १५. विपर्ययाः अधर्माज्ञानादयः प्रागादिदिक्षु ।

[1] वसुधा C.
[2] शक्त्यादीः संस्मरेद्देवता इमाः A. G.
[3] पर्यन्तं A. B. G.
[4] दिशः क्रमात् C.
[5] B. C. omit five lines from here.

यातवीवारुणीमध्ये पाशिवायुदिगन्तरे ।
[1]ऋग्वेदाद्य चतुष्क च पीत हयनराकृति ॥ १७ ॥

ईशानसोमदिङ्मध्ये वह्नयन्तकदिगन्तरे ।
राक्षसान्तकदिङ्मध्ये वायुसोमदिगन्तरे ॥ १८ ॥

कृताद्य युगवृन्द तु कृष्ण वृषनराकृति ।
सर्वे चतुर्भुजा एते द्वाभ्या पीठधृतस्तथा ॥ १९ ॥

द्वाभ्यामञ्जलिबद्धाभ्या प्रणमन्त्यासनस्थिताम् ।
तेषामुपरि सचिन्त्य पीठ बुद्धिमयं परम् ॥ २० ॥

अव्यक्तमम्बुज श्वेत तदूर्ध्वऽष्टदल स्मरेत् ।
तदूर्ध्वे सूर्यबिम्ब तु [2]सूर्यकोटिसमप्रभम ॥ २१ ॥

तदूर्ध्वे चन्द्रबिम्ब तु चन्द्रकोटिसमप्रभम् ।
तदूर्ध्व वह्निबिम्ब तु वह्निकोट्ययुतप्रभम् ॥ २२ ॥

तमो रजश्च सत्त्व च गुणानेतान् क्रमात् स्मरेत् ।
प्रणवस्य नतेश्चैव तत्तत्सज्ञास्तु मध्यगा ॥ २३ ॥

बुद्धयादिसत्त्वपर्यन्ततत्त्वमन्त्रगणा स्मृता ।
ततश्चिदासन दद्यात् पराहतास्वरूपकम् ॥ २४ ॥

आ नाभेर्हृदयान्त तु पञ्चधा भाजिते पदे ।
समुद्राद्यासनान्त तु चतुर्भि [3]क्लपयेत् पदै ॥२५॥

एकेन पञ्चमेनैव पद्माद्यासनकल्पनम् ।
भूतान्याधारशक्तौ तु कूर्मे तन्मात्रक गणम् ॥ २६ ॥

वागादिक तथानन्ते भुवि श्रोत्रादिपञ्चकम् ।
मन क्षीरार्णवे ध्यायेदहकार ततोऽम्बुजे ॥ २७ ॥

द्विरष्टक च धर्माद्यमासन च पि धी स्मृता ।
अव्यक्त च तदूर्ध्वस्थमवदात सरोरुहम् ॥ २८ ॥

सम प्रभृतयश्चोक्ता गुणा ह्यब्जत्रयात्मका ।
एके काल वदन्त्येतद् भूतादित्रितयात्मकम् ॥२९॥

चिदासनमनन्ताख्य[4] पुमासमपरे जगु [5] ।
एके चिदासनादूर्ध्वे गरुड परिचक्षते ॥ ३० ॥

खर्वव्योमान्वित पश्चात् [6]खगाननमोयुतम् ।
मन्त्रमाहु सुरेशान तन्मन्त्र नवमं बुधा ॥ ३१ ॥

इत्थ बहुविधैर्मन्त्रैरासने विहिते क्रमात् ।
विष्णु विश्वात्मक देव नारायणमनामयम् ॥ ३२ ॥

भावयेत् परमात्मान शङ्खचक्रगदाधरम् ।
चतुर्भुज पीतवस्त्र पुण्डरीकनिभेक्षणम् ॥ ३३ ॥

उदितं सस्मरेदेवं स्वशक्ते स्पन्दनात्मन ।
सम्यग् ध्येय यथैतत्ते तथा भूयो निबोध मे ॥३४॥

१७ यातवी निर्ऋतिदिक् । पाशी वरुण । २०. द्वाभ्यामिति । भुजाभ्यामिति शेष । अञ्जलिबद्धाभ्यामिति । बद्धाञ्जलिभ्यामित्यर्थ । २३. सूर्येन्दुवह्निबिम्बानि क्रमात् तमोरज-सत्त्वमयानि जानीयात् । ओं सूर्यबिम्बाय नम इत्यादयो मन्त्रा । २५. नाभिमारभ्य हृदयपर्यन्त भाग पञ्चधा विभज्य तत्राद्यौ चतुर्षु भागेषु क्षीरार्णवाद्यासनान्त भावयेत् । २६ पञ्चमे तु भागे अव्यक्तपद्म भावयेत् । उक्तेषु स्थानेषु पदार्थानामवस्थितिमाह— भूतानीति । स्थूलानि पञ्च भूतानीत्यर्थ । २८ अवदात सरोरुहम्, अव्यक्तपद्ममित्यर्थ । २९. एतत्, अव्यक्तपद्ममित्यर्थ । पारमेश्वरे (५–१४) कालचक्रमित्यस्य व्यवहार । ३१. स खगाननाय नम । ३३. "तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी" इति

[1] F omits three lines from here
[2] सूर्यकोट्ययुत G
[3] कल्पिते B C
[4] अद्भुताख्यं A F
[5] विदु B F
[6] खगासन A

सुसम्पद् न्यस्तमन्त्राङ्ग[1] सुसक्लृप्तान्तरासन ।
दर्शिताशेषमुद्रश्च सस्मरेन्मन्त्रवैभवम् ॥ ३५ ॥

पर ब्रह्म पर धाम यत् पारे तमस स्थितम् ।
शक्तिमच्छक्तिभावेन लक्ष्मीनारायण मह ॥३६॥

सर्वं सर्वातिग सर्वसस्थित सर्वयन्तृ[2] च ।
[3]चिदानन्दघन पूर्णषाड्गुण्यामृतविग्रहम् ॥ ३७ ॥

भावाना चिदचिद्रूपभावाभावादिभेदिनाम् ।
अन्तरात्मतया तत्तदहकारपदास्पदम् ॥ ३८ ॥

अचिन्त्याननुयोज्येन हेतुना येन केनचित् ।
शक्तिमच्छक्तिभावेन तद् द्विधा व्यवतिष्ठते ॥३९॥

अहमित्येन य प्रोक्त पदप्रत्यययोर्द्वयो ।
नारायण स भविता तस्याहता तु या परा ॥४०॥

तद्धर्मधर्मिणी लक्ष्मी शक्ति सा भावरूपिणी ।
सर्वकार्यकरी सैव शक्तिर्वितनुते जगत् ॥ ४१ ॥

शक्तिमन्तमधिष्ठाय ज्योत्स्नेव हिमदीधितिम् ।
सा वितिसीर्षमाणा हि शब्दब्रह्मात्मना पुरा ॥४२॥

वितत्यात्मानमथ सा वितनोत्यर्थवर्त्मना ।
शब्दब्रह्ममय पूर्वो यो नाम प्रथमोदय ॥ ४३ ॥

अकलङ्क [4]कल ध्वात्मा योगस्थैरनुभूयते ।
धारासतानवर्णात्मा वर्णमार्ग स शब्द्यते ॥४४॥

कलाध्वानमधिष्ठाय स पुनर्मन्त्रवर्त्मना ।
उदेति सकल शक्तिचक्रमादाय वैष्णवम् ॥ ४५ ॥

परात्मना पर ज्योतिर्मयमानन्दलक्षणम् ।
त्रिविधेनैव रूपेण यथा ते वर्णित पुरा ॥ ४६ ॥

रूप पर तदेवाथ वर्तते सूक्ष्मवर्त्मना ।
मन्त्रप्रसररूपेण तच्च ते दर्शयिष्यते ॥ ४७ ॥

सूक्ष्म तत् त्रिविध भूयो वर्तते स्थूलवर्त्मना ।
स्थूला चादितनुर्येयमङ्गोपाङ्गविभेदिनी ॥ ४८ ॥

लक्ष्मीनारायणस्यैषा मूर्ति षाड्गुण्यबृंहिता ।
चेतनाचेतन विश्वमनुसधेयमत्र तु ॥ ४९ ॥

[5]तत्तदैश्वर्यदत्व तदधिष्ठातृत्वमेव च ।
मन्त्रस्य वैष्णव रूप तद्विज्ञेय विपश्चिता ॥ ५० ॥

तत्तत्कार्यकरी तस्य या शक्ति साहमम्बुजा ।
मन्त्रस्य यद्धि चैतन्य पुमास त प्रचक्षते ॥ ५१ ॥

फलप्रसवसामर्थ्यं प्राकृत रूपमुच्यते ।
[6]यद् दृढव्यवसायित्व [7]महतो यो गुणस्तु स ॥

श्रुत्यर्थोपबृहणमत्र । ३७. सर्वान्तरात्मत्वात् सर्वनियन्तृत्वाच्च सर्वरूपिणमित्यर्थ । ३८. तदेवेच्यते—अन्तरात्मतयेत्यादिना । ४२. देव्या जगद्व्यापारकर्तृत्व भगवन्तमाश्रित्यैव, न स्वातन्त्र्येणेत्यनेन जगज्जन्मादिकारणत्वस्य भगवदसाधारणलक्षणस्य नानुपपत्तिरित्युक्त भवति । प्रयोजककर्ता सर्वेश्वर, प्रयोज्यकर्त्री देवीत्युक्त भवति । अनेनास्य पाञ्चरात्रसिद्धान्तस्य शाक्तमतप्रवेशशङ्काया नावकाश । ४४ कलाध्वात्मा, ज्ञानशक्त्य दिगुणात्मा। धार सतानेति वर्णाध्वनिर्देश । ४५ शक्तिचक्र लक्ष्म्यादिकम् । ४९. अत्र तु, मन्त्रात्मकस्थूलमूर्ताविरयर्थ । ५०. मन्त्रमूर्तौ सर्वतत्त्वावस्थितिमाह—तत्तदित्यादिना । ५२. महत , महत्तत्त्वस्य ।

[1] सवाङ्ग A
[2] धतृ F
[3] B omits four lines from here
[4] कल्ह्वात्मा A, कलामसी B
[5] तत्तदैश्वर्यद तत्त्वम् F
[6] B omits six lines from here
[7] मन्त्रतो A C G

मन्त्राणां यदहंयुत्वमहंकारगुणस्तु सः ।
मन्त्राणां मानसं रूपमैन्द्रियज्ञानहेतुता ॥ ५३ ॥

यच्छब्दरूपता मन्त्रे सा ज्ञेया नभसि स्थिता ।
कम्पो मन्त्रसमावेशे वायव्यं रूपमुच्यते ॥ ५४ ॥

[1]प्रकाशकरता ध्याने मान्त्री या तैजसात्मिका ।
या तृप्तिर्मन्त्रसद्भावे[2] परिज्ञेयाम्भसी तु सा ॥

यो हि मन्त्रस्थितो भावः स भौमो गुण उच्यते ।
इत्येवं सर्वगां व्याप्तिं मन्त्री मान्त्रीं सुसंस्मरेत् ॥

अचिरान्मन्त्रसामर्थ्यात्तेन भावेन जायते ।
इत्थं संवित्तिसामर्थ्यात्तारिकाशक्तिमाततम् ॥

स्पन्दमानां पुरा पश्येद्व्योम्नि सौदामिनीमिव ।
हृदम्बुजगुहामध्ये पूर्वोक्ते चित्प्रभासने ॥ ५८ ॥

स्फुरन्त्यां तारिकामूर्तौ शब्दब्रह्मणि संस्मरेत् ।
मिथुनं शाश्वतं दिव्यं [3]यथावदवधारय ॥ ५९ ॥

सूर्यानलांशसंस्थानं नारायणमनामयम् ।
स्मरेच्चिदासनासीनं पुण्डरीकायतेक्षणम् ॥ ६० ॥

पीताम्बरमुदाराङ्गं काञ्चीनूपुरशोभितम् ।
हारकुण्डलकेयूरकिरीटकटकोज्ज्वलम् ॥ ६१ ॥

[4]युगानुसारिकान्ति वा नीलाम्बरनिभं तु वा ।
शङ्खचक्रधरं देवं वरदाभयदायिनम् ॥ ६२ ॥

प्रभयेव मणिं पूर्णं गाम्भीर्येणेव सागरम् ।
प्रभयेव विवस्वन्तं ज्योत्स्नयेव निशाकरम् ॥ ६३ ॥

पुरा ध्यात्वा हृषीकेशं प्रसन्नमुखपङ्कजम् ।
पुराष्टादशभिर्भोगैरर्चयेत् पुरुषोत्तमम् ॥ ६४ ॥

सूक्तेन पौरुषेणाथ प्रणवेन च वासव ।
द्विपद्चतुस्त्रिकार्णैश्च तथैव च जितंतया ॥ ६५ ॥

अर्चयित्वाथ देवेशं लक्ष्मीं सर्वाङ्गगां स्मरेत् ।
लयात्मनार्चयित्वाथ लक्ष्मीमावाहयेत्ततः ॥ ६६ ॥

वामोत्सङ्गे निषण्णां तामथ देवस्य शार्ङ्गिणः ।
अर्चयेद्विविधैर्भोगैर्यथावच्छास्त्रचोदितैः ॥ ६७ ॥

शक्रः—

देवप्रिये देवदेवि नमस्ते पङ्कजेक्षणे ।
विधिं पुरुषसूक्तस्य तारादीनां च मे वद ॥ ६८ ॥

श्रीः—

एको नारायणो देवः श्रीमान् कमललोचनः ।
एकाहं परमा शक्तिः सर्वकार्यकरी हरेः ॥ ६९ ॥

तावावां परमे व्योम्नि क्षेमाय सकलात्मनाम् ।
आसीनौ सकलेशानौ सूरिभिः सेवितौ सदा ॥

तयोर्नौ हृदि संकल्पः कश्चिदाविर्बभूव ह ।
उत्तारणाय जीवानामुपायोऽन्विष्यतामिति ॥ ७१ ॥

५७. तेन भावेनेति । तत्तद्धर्मेणेत्यर्थः । ५८. पूर्वोक्त इति । आधारशक्त्यादिनिरूपणावसरोक्त इत्यर्थः । ५९. अनेन तारिकायाः शब्दब्रह्मरूपत्वमुक्तं भवति । ६०. नारायणाख्यपुरुषोत्तमस्य मानसीं पूजां वक्तुं तद्रूपमाह—सूर्येत्यादिना । ६५. द्विपदित्यादि । षडक्षराष्टाक्षर-द्वादशाक्षरमन्त्रैरित्यर्थः । जितंतया; "जित ते पुण्डरीकाक्ष" इत्यादिश्लोकरूपमन्त्रेणेत्यर्थः ।

[1] C. omits three lines from here.
[2] तद्ध्याने F.
[3] यथा तत् A. B G
[4] युगानुसार A. G.

आवाभ्यामुत्थितं[1] तेजः शब्दब्रह्ममहोदधिः ।
मथ्यमानात्ततस्तस्मादभूत् सूक्तद्वयामृतम् ॥ ७२ ॥

पुरुषस्य हरेः सूक्तं मम सूक्तं तथैव च ।
अन्योन्यशक्तिसंपृक्तमन्योन्यार्णपरिष्कृतम् ॥ ७३ ॥

नारायणार्षमव्यक्तं पौरुषं सूक्तमिष्यते ।
अन्यन्मदार्षकं सूक्तं श्रीसूक्तं यत् प्रचक्षते ॥७४॥

प्रणवाद्याः पुरा मन्त्राः पञ्च सम्यक् प्रदर्शिताः ।
इदानीं शृणु संक्षेपात्तेषामाराधनक्रमम् ॥ ७५ ॥

अष्टादश ऋचः प्रोक्ताः पौरुषे सूक्तसत्तमे ।
ताभिस्तु प्रणवाद्याभिर्भोगानष्टादशोत्तमान् ॥७६ ॥

कुर्यादावाहनाद्यांश्च त एतेऽष्टादश स्मृताः ।
आवाहनासने सार्घ्यं पाद्यमाचमनं तथा ॥ ७७ ॥

स्नानं च परिधानं च सोत्तरीयोपवीतकम् ।
गन्धः सुमनसो दीपो धूपश्च मधुपर्ककः ॥ ७८ ॥

प्रापणं [2]सेन्दु ताम्बूलं पादयोः कुसुमाञ्जलिः ।
आत्माराधनदानं च यथेष्टस्थानचिन्तनम् ॥ ७९ ॥

सर्वलक्षणसंपन्ना सर्वाधारमयी परा ।
नित्या संपूर्णषाड्गुण्या या विष्णोर्मूर्तिरुज्ज्वला ॥

सैवेयं कथ्यते मूर्तिर्मान्त्री मन्त्रैश्चिदात्मकैः ।
स्वीकारयति तां मन्त्री[3] देवं यत् स्वेन तेजसा ॥८१॥

तदावाहनमित्युक्तं मन्त्रविज्ञानपारगैः ।
स्वस्तिकृत्यै स्वभावेन चेतनाचेतनं हरिः ॥ ८२ ॥

अधितिष्ठति यद्विश्वमासनं तदनु क्रिया ।
ममानन्दमयी शक्तिर्देवस्त्वाप्यायते यया ॥ ८३ ॥

[4]सैवार्घ्याचमनीयादिरूपेत्यर्घ्यादिचिन्तनम् ।
अम्मयाः सकला लोका जीवाश्चैव [5]तदाश्रयाः ॥

तच्छेषा [6]उभयेऽपीति द्योत्यते पाद्यदानतः ।
षोढा विभज्य रूपं स्वं तर्पयामि सनातनम् ॥८५॥

शब्दाद्यैः पञ्चभिर्भावैरन्तश्चाप्यभिमानतः ।
समावेशितसद्भावैर्भोगैः सांदृष्टिकादिकैः ॥ ८६ ॥

आराधयेज्जगन्नाथं सावधानेन चेतसा ।
दृष्ट्वैव जन्यते प्रीतिर्येषां[7] सांदृष्टिका मताः ॥

७३. मम सूक्तमिति । श्रीसूक्तमित्यर्थः । ७४. नारायणः पुरुषसूक्तस्य ऋषिरित्यर्थः । मदार्षकमिति । श्रीरहमृषिरित्यर्थः । ७५. पञ्चेति । तारानुनारायषडक्षराष्टाक्षरद्वादशाक्षरा इत्यर्थः । ७९. प्रापणम्; अन्नादिकं नैवेद्यम् । इन्दुः; घनसारः । ८२. आवाहयति स्वीकारयति मन्त्रतनूमिति यौगिकार्थः । ८४. सैवेति । आनन्दमयी शक्तिरेवेत्यर्थः । अम्मयाः; अपां परिणामभूताः; "अप एव ससर्जादौ" इति सर्वलोकानां तदुपादानकत्वोक्तेः । तदाश्रयाः; अद्भिर्जीवनधारिणः । जीवानामप्परिणामत्वाभावात् तदाश्रयत्वोक्तिः । ८५. शब्दादिरूपेणाहमेव भगवन्तमाराधयामीत्यर्थः । ८७. भोगान् सांदृष्टिकाभ्यवहारिक-

[1] मथितं B. [2] स्वादु F. [3] तन्मन्त्री B F.

[4] The printed edition and all MSS. except F. and I. add wrongly चिदानन्दमयी शक्तिः before this line. [5] समाश्रयाः A. B. F.

[6] उभयोः प्रीतिः A. [7] यैस्ते C.

शुभा रूपोल्बणास्ते च दीपप्रग्रहणादयः ।
भोगाः शुभकराः शश्वत्तर्पयन्ति रसैर्हि ये ॥ ८८ ॥

प्रापणाचमनीयाद्यास्ते स्युराभ्यवहारिकाः ।
[1]सुखा रम्या मृदुस्पर्शाः स्पर्शैर्ये तर्पयन्त्यजम् ॥८९॥

भोगाः सांस्पर्शिकास्ते स्युः पाद्यार्घ्यासनपूर्वकाः ।
गन्धाः सांस्पर्शिके केचित् केचिदाभ्यवहारिके ॥

निविष्टा [2]अनिलाद्याः स्युरन्याः पाकजगन्धिनः[3] ।
स्तुतिवादित्रगीताद्या भोगाः शब्दमया हि ये ॥

दैन्याञ्जलिपुटाद्याश्च ते स्मृता आभिमानिकाः ।
इत्थं चतुर्विधैर्भोगैः शास्त्रदृष्टेन वर्त्मना ॥ ९२ ॥

ऋग्भिः सप्रणवाद्याभिस्तोषयेत् पुरुषोत्तमम् ।
मन्त्रान्ते भोगनिर्देशः प्रीतिश्च तदनन्तरम् ॥९३॥

ओंत्र्यर्चमथोद्धार्य प्रणवादीनि पञ्च च ।
आवाहयामि लक्ष्मीशं परमात्मानमव्ययम् ॥९४॥

आतिष्ठनामिमां मूर्तिं मदनुग्रहकाम्यया ।
श्रिया सार्धं जगन्नाथो दिव्यो नारायणः पुमान् ॥

इत्यञ्जलिप्रसूनस्थं स्वमूर्तावुपतार्य च ।
प्रणम्य स्वागतं पृष्ट्वा क्षामयेदनया धिया ॥ ९६ ॥

प्रणम्य[1] भगवन् पश्चादासनेनार्चयामि च ।
उक्त्वा मन्त्रानथोद्धार्य त्रिर्निर्दिश्येदमित्यतः ॥९७॥

पश्चात् सनाम निर्दिश्य प्रीतिं पश्चात् समाचरेत् ।
प्रीयतां भगवान् पश्चाद्वासुदेवस्ततः परम् ॥ ९८॥

अर्घ्यं निःस्रावयेद्वेद्यामयं भोगविधिक्रमः ।
आसनार्घ्यादि भोगेषु यथालिङ्गं विनिर्दिशेत् ॥

आद्ययावाहनं कुर्यादासनं च द्वितीयया ।
अर्घ्यं तृतीयया देयं मूर्ध्न्यापः कुसुमोद्धृताः ॥१००॥

पाद्यं देयं चतुर्थ्या तु पञ्चम्याचमनीयकम् ।
षष्ठ्या स्नानविधिः कार्यः सप्तम्या परिधानकम् ॥

अष्टम्योत्तरवासश्च नवम्या गन्धलेपनम् ।
दशम्या स्रगलंकारा[5] एकादश्या तु दीपकः ॥१०२॥

द्वादश्या सुरभिर्धूपः परया मधुपर्ककः ।
प्रापणं तु चतुर्दश्या पञ्चदश्यानुवासनम् ॥ १०३॥

षोडश्या तु नमस्कारः परया कुसुमाञ्जलिः ।
अष्टादश्या प्रदानं च समाराधनकर्मणः ॥ १०४॥

स्नानवासःप्रदीपेषु दद्यादाचमनक्रियाम् ।
पुरस्तादर्हणं कार्यं मधुपर्कान्नदानतः ॥ १०५ ॥

[6]तर्पणाचमने पश्चात् प्रणवद्वितयेन तु ।
इत्थं स्नानादिभोगेषु देशकालाद्यपेक्षया ॥ १०६ ॥

कुर्याद्राजवदाचारं तत्तन्मन्त्रेण साधकः ।
संकल्पश्च प्रदानं च प्रीतिश्चेति त्रयं त्रयम् ॥१०७॥

सांस्पर्शिकाभिमानिकभेदेन चतुर्धा विभज्य वर्णयति—दृष्टैवेत्यादिना । ९४. प्रणवादीनि पञ्चेति । तारानुतारिकाषडक्षराष्टाक्षरद्वादशाक्षरमन्त्रानित्यर्थः । ९६. स्वमूर्तौ; स्वपरिकल्पितायां मूर्तौ । ९८. सनामेति । इदमिदमिदं पाद्यमित्यादिरीत्या भोगनामनिर्देशपूर्वकमित्यर्थः । १००. पुरुषसूक्तऋचां भोगप्रदाने विनियोगमाह—आद्ययेत्यादिना । १०३. अनुयामनं नाम भोजनानन्तरदेयं सुगन्धि ताम्बूलादि । १०५. अर्हणम्;

[2] अनुलोमाः G. [3] पद्मगन्धिनः A. B F.
[5] अलंकार: C. [6] दर्पणा B

कुर्यान् सर्वेषु भोगेषु देशकालाद्यपेक्षया।
समाहितोऽञ्जलिं कृत्वा तत ओं भगवन्निति ॥
आमन्त्रनार्चयिष्यामीत्युक्त्वा दद्यात्तथासनम्।
मन्त्रमुच्चार्य निर्दिश्येदिदमासनमित्यत ॥ १०९ ॥
ओमों प्रीयतां भगवान् वासुदेव इति ब्रुवन्।
अर्घ्यादिजलमादाय स्थापयेद्देवसंनिधौ ॥ ११० ॥
आभिरर्घ्याभिरित्येवमाभिः पाद्याभिरित्यपि।
आभिराचमनीयाभिरर्हणीयाभिरित्यपि ॥ १११ ॥
तर्पणीयाभिरद्भिश्च स्नानीयाभिरितीदृशम्।
प्रीतिसंकल्पयोरन्यमिमा अर्घ्या इतीदृशम् ॥ ११२ ॥
वाच्यं प्रदानवेलायां यथालिङ्गमिति क्रमः।
अर्घ्यादिकल्पनं चाम्बे वह्नियागे विधास्यते ॥ ११३ ॥
इति स्रगादिभिः षड्भिर्यजेद्देवं जनार्दनम्।
पञ्चभिर्वा चतुर्भिर्वा त्रिभिर्द्वाभ्यामथापि वा ॥ ११४ ॥
एकेन वा समागम्य देशकालानुरूपतः।
मयैव पूजितं ध्यात्वा देवदेवं जनार्दनम् ॥ ११५ ॥
चन्द्रोदय इवाम्भोधिं सर्वाङ्गपरिबृंहितम्।
अनिर्देश्यमनौपम्यमनन्तां मादिनी सदा ॥ ११६ ॥
आमोदमिव पुष्पस्थं दीपस्थमिव च प्रभाम्।
[1]विनिष्पतन्तीमनघां मामनन्तां पुरुषोत्तमात् ॥
भावयन् विधिवन्मन्त्री लययोगेन मां यजेत्।
मरिचादिभिरन्विच्य तया मां मारिषं यजेत् ॥

अथ मेघादिवोद्यन्तीं विद्युतं पुरुषोत्तमात्।
समुद्यन्तीं तदिच्छातो विभाव्य मनसा सुधीः ॥
वामोत्सङ्गे[2] निषण्णां मां देवदेवस्य चिन्तयेत्।
गम्यमानयोर्ज्ञात्वा स्वभावं च सुशीतलम् ॥ १२० ॥
ऋग्भ्यां हिरण्यपूर्वाभ्यां प्रपद्येत जनार्दनम्।
सान्त्वयेच्च पराभ्यां तां मां तावदपृथक्स्थिताम् ॥ १२१ ॥
पञ्चम्या च प्रपद्येत प्रसन्नां भावयन् धिया।
ज्ञात्वा पूर्वोक्तसामर्थ्यं तारिकाया यथार्थतः ॥
मुद्रासमन्वितो मन्त्रो य आवाहनसंज्ञितः।
पूरकेण सुरेशान मनसा समुदीरयन् ॥ १२३ ॥
मामथावाहयेद्देवादुत्सङ्गे परमात्मनः।
प्रसन्नवदनां शुभ्रां सर्वलक्षणलक्षिताम् ॥ १२४ ॥
पद्मगर्भनिभां कान्तामसितायतलोचनाम्।
स्फुरत्तटपयूरहारकुण्डलमण्डिताम् ॥ १२५ ॥
गम्भीरनाभि[3] त्रिवलीविभूषिततनूदराम्।
सुवर्णकलशोत्तुङ्गपीनवृत्तघनस्तनीम् ॥ १२६ ॥
चलद्द्विरेफपटलसमाक्रान्तालकावलिम्।
आरक्ताधरबिम्बां च पेशलाकलितजानाम् ॥ १२७ ॥
अर्धचन्द्रललाटस्थराजमानललाटिकाम्।
सर्वाभरणसंपन्नां कृष्णकुञ्चितमूर्धजाम् ॥ १२८ ॥
वरदां पङ्कजकरां पद्ममालाविभूषिताम्।
विष्णुवामभुजाश्लिष्टां तद्दक्षकराम्बुजाम् ॥ १२९ ॥

[illegible]। १११. [illegible]। ११४. [illegible]। ११६. [illegible]। ११७. [illegible]। १२०. [illegible]। १२१. [illegible]। १२७. [illegible]। १२८. [illegible]

[1] [illegible] A B C  [2] [illegible] B. I  [3] [illegible] B F.

वामेन बाहुना दिव्यां वहन्तीं पुष्पमञ्जरीम् ।
वरदाभयपाणिं वा पाशाङ्कुशकरां तु वा ॥१३०॥

अर्धस्वस्तिकसंलीनां स्फुरन्मौलिविराजिताम् ।
ध्यात्वा मां संमुखीं कुर्यान्मन्त्रमूर्तिं सनातनीम् ॥

मूलमन्त्रादिकैर्भूयो मन्त्रैः सर्वैश्च पूर्ववत् ।
[1]करन्यासं विना देहन्यासं मयि समाचरेत् ॥१३२॥

पुष्पमर्घ्यं तथा दीपं धूपं माल्यं विलेपनम् ।
चेतसा सादरेणैव पाद्यमाचमनं ततः[2] ॥ १३३ ॥

प्रणाममथवाद्याङ्गं जयशब्दांश्च मानमान् ।
प्रदर्शयेत्ततो मुद्रा यास्ते पूर्वं प्रदर्शिताः ॥ १३४ ॥

स्वागतं तव पद्माक्षि संनिधिं भज मेऽम्बुजे ।
गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥१३५॥

लब्ध्वानुज्ञां ततो मत्तो मानसं यागमाचरेत् ।
संकल्पजनितैर्भोगैः पवित्रैः पारमार्थिकैः ॥ १३६ ॥

बाह्यप्रक्रियया शश्वत् परस्ताद्वक्ष्यमाणया ।
मां यजेत सुनिष्णातो भोगैःसांस्पर्शिकादिकैः॥१३७॥

प्राणान्तं विधायान्ते[3] धारिणं संस्मरेद् गुरुम् ।
जीवन्तमथवातीतं तस्मै दद्यात्ततोऽखिलम् ॥१३८॥

वित्तं संविभजेद्वैव प्रापणादीन मन्त्रवित् ।
जीवतोऽप्यथवातीतान्यथार्थेनैव चेतसा ॥ १३९ ॥

परिवारान् स्मरेत् सर्वान् वक्ष्यमाणान् विशेषतः ।
कारणे मयि संलीनान् धानाधानिव भूरुहान् ॥

तत्तन्मन्त्रप्रयोगेण लयप्रक्रियया यजेत् ।
कुर्यान्महानसे होमं मोक्षलक्ष्मीप्रदं शुभम् ॥१४१॥

त्रिगुणाधारमध्यस्थे त्रिकोणे त्रिगुणेऽनले ।
ध्यानारणिं तु निर्मथ्य चिदग्निमवतार्य च ॥१४२॥

संस्कारैः संस्कृतं कृत्वा वक्ष्यमाणधिया सुधीः ।
त्रिलक्षणाधारगते वैष्णवे जातवेदसि ॥ १४३ ॥

नादावसानगगनात्तारिकायाः परिस्रुतम्[4] ।
ब्रह्म हविर्गृहीत्वाथ ब्रह्मरन्ध्रेण संविशेत् ॥ १४४॥

ततो वह्निगृहं गत्वा सर्पिः [5]संस्कृत्य शास्त्रतः ।
कुर्वीत सकलं कृत्यं तेनाज्येन यथाविधि ॥ १४५॥

ततो होमावसाने तत्संकल्पः कर्म मानसम् ।
संन्यसेन्मयि भावेन वक्ष्यमाणधिया सुधीः॥१४६॥

यः क्रमोऽभिहितो[6] बाह्ये स सर्वो मानसेऽत्र तु ।
अवधानेन वा कार्यो मन्मयैर्द्रव्यसंचयैः ॥ १४७॥

सर्वोपसर्गशमनः सोऽयं सर्वफलप्रदः ।
कथितो मानसो यागः कार्य आदेहपातनात् ॥१४८॥

अथ द्रव्याणि सर्वाणि मन्मयीकृत्य यत्नतः ।
[7]बाह्योत्थवासन शान्त्यै स बाह्ययागमथाचरेत् ॥१४९॥

इत्येवमन्तर्यागस्ते मदीयः शक्र वर्णितः ।
बहिर्यागस्वरूपं तु तत्त्वतो मे निशामय ॥ १५० ॥ ✓

इति श्रीपाञ्चरात्रसारे[8] लक्ष्मीतन्त्रे अन्तर्यागप्रकाशो नाम
षट्त्रिंशोऽध्यायः

तिलकम् । अलंकारे कल् । १३१. स्वस्तिकम् आसनविशेषः । १४३. संस्कारैरिति । वैष्णवीकरणप्रक्रिययेत्यर्थः । १४८. आदेहपातनादिति । अनेन पाञ्चकालिकधर्मनिरतस्य परमैकान्तिनः प्रतिपुरुषं प्रत्यहं च भगवदाराधनमवश्यकर्तव्यं नित्यकर्मेत्युक्तं भवति ।

इति षट्त्रिंशोऽध्यायः

[1] G. omits this line  [2] तप्य B.  [3] विपाणान C.  [4] द्रुतम् B. C.
[5] वैष्णव A. B C.  [6] विहितो B E.  [7] बाह्यार्थं D. F.  [8] अन्तिमगत A; श्रीपञ्चरात्रे B

# सप्तत्रिंशोऽध्यायः

श्रीः—

बहिर्वेद्यादिदेशस्थद्रव्यैर्मन्त्रावनेक्षितैः ।
भोगभूतैर्यदिज्येऽहं बहिर्यागस्तु स स्मृतः ॥ १ ॥

वासना द्विविधा प्रोक्ता बाह्याभ्यन्तरहेतुजा ।
निर्गुणत्वान्तराः सर्वा मानसो याग उत्तमः ॥ २ ॥

बाह्याशयविशुद्ध्यर्थं बाह्ययागो विधीयते ।
शालीयां क्षितिमास्थाय मण्डपे तत्र मण्डिते ॥ ३ ॥

मध्यस्थाने विधायाथ वेदिं सर्वगुणान्विताम ।
अष्टहस्तं तदर्धं वा तदर्धं वापि साधितम् ॥ ४ ॥

प्रागन्तं सुसितं सूत्रं वेदिमध्ये प्रसारयेत् ।
तस्मिन्नुभयतः पार्श्वे[1] मध्यतश्चार्धमध्ययोः ॥ ५ ॥

विधाय त्रीणि चिह्नानि पञ्च शङ्कून् निखानयेत् ।
अन्त्ययोस्त्रिषु मध्येषु शङ्क्वोस्त्र सुपान्त्ययोः ॥ ६ ॥

सूत्रमध्यं यतः प्राप्तं तत्र शङ्कुं निधापयेत् ।
[2]पाशौ द्वौ प्रतिमुच्याथ मध्यचिह्नं समानयेत् ॥ ७ ॥

सव्ये चाप्यपसव्ये च तत्र चिह्ने विधाय च ।
मध्यमे प्रतिमुच्य द्वे सूत्रमध्यं समानयेत् ॥ ८ ॥

चिह्नस्योपरि देशे च[3] क्रमात् सव्यापसव्ययोः ।
सूत्रमध्यं यतः प्राप्तं तत्र शङ्कुं निधापयेत् ॥ ९ ॥

पूर्वस्मिन् प्रतिमुच्यैकं पाशं दक्षिणतोऽपरम् ।
कुर्यात् प्रदक्षिणं कोणं मध्यचिह्नेऽनयोस्ततः ॥ १० ॥

[4]ऐशकोणं तथा[5] कुर्यात् प्रतिमुच्योत्तरस्य तु ।
प्रतीच्ययाम्ययोरेवं प्रतीच्योदीच्ययोरपि ॥ ११ ॥

प्रतिमुच्य क्रमात् पाशौ कुर्यात् कोणौ तथा परौ ।
तत्क्षेत्रस्फुटतार्थं तु सूत्रयेत्तु चतुर्दिशम् ॥ १२ ॥

भक्ते षोडशधा क्षेत्रे चतुर्भिर्मध्यमैः पदैः ।
प्रागादिकैः प्रदेशैश्च विदधीत नराम्बुजम् ॥ १३ ॥

मध्यमं कमलं कार्यमष्टपत्रं यथा शृणु ।
चतुर्धा भ्रामयेत् क्षेत्रं वर्जयित्वाष्टमं[6] बहिः ॥ १४ ॥

कर्णिका केसरं पत्रसंधिः पत्राणि च क्रमात् ।
चत्वार्यंशप्रमाणानि त्वष्टोंऽशो व्योम तद्बहिः ॥

तस्मिन् सूत्राष्टकं पत्रे दिग्विदिक्संस्थितं क्षिपेत् ।
सूत्राणामन्तरे भूयः क्षिपेत् सूत्राष्टकं तथा ॥ १६ ॥

१. मन्त्रावनेक्षितैरिति । मन्त्रजला प्रोक्षितैरित्यर्थः । भोगभूतैरिति । भोगोपकरणै-रित्यर्थः । २. अन्यः; पाठः । मध्यस्थाने; मध्यभागस्थाने इत्यर्थः । १३. पद्मे;

[1] मध्यदेशे च B. F.
[2] F. omits five lines from here.
[3] तु B.
[4] ऐशं B, ऐशं C.
[5] च, B.
[6] वाष्टमं A. C.

पद्मसंधिस्थसूत्रेण दिक्क्रमेण दलाष्टकम् ।
सहजाः[1] सुचिता रेखा व्योमरेखागणाः स्मृताः ॥

पद्मान्तराणामष्टानामेवमेव विधा भवेत् ।
एवं पुरवरं रम्यं [2]नवपद्मसुलक्षणम् ॥ १८ ॥

बहिर्द्वारयुतं कार्यं कोणशोभादिसंयुतम् ।
चतुर्वर्णयुतं कार्यं कर्णिकादिविभक्तये ॥ १९ ॥

पौष्पे वा प्रस्तरे वास्त्रे सुसिते वाथ धूपिते ।
अहते गन्धयुक्तेऽथ स्थण्डिले वोपलेपिते ॥ २० ॥

[3]यजन् कार्यवशान्मन्त्री नवपद्मं विचिन्तयेत् ।
कुर्याद्वाध्यानमार्गस्थां प्रतिमां शास्त्रदर्शनात् ॥

सौवर्णे [4]राजताद्ये वा दृढे कालादिवर्जिते ।
[5]आराधयेद् घटे पूर्णे दध्ना क्षीरेण वारिणा ॥२२॥

प्रशस्तपल्लवाक्रान्ते वस्त्रपट्टादिसंयुते ।
विभाव्य नवपद्मं तु पूजयेन्मन्त्रवित्तमः ॥ २३ ॥

घटे पुरे तथार्चायां यद्वा मन्त्री क्रमाद्यजेत् ।
सर्वलोकमयं सर्वगीर्वाणाश्रयमुत्तमम् ॥ २४ ॥

सर्वाधारमयं ध्यायेन्नवपद्मं पुरोत्तमम् ।
[6]तारिकाख्यानमःशब्दैरर्च्यमर्घ्यादिना ततः ॥

ततः पात्रचतुष्कं तु हेमादिद्रव्यनिर्मितम् ।
पूताम्बु पूर्णं गन्धस्रग्मन्त्रौषधिकुशोदकैः ॥ २६ ॥

वेद्यामर्चापुरःस्थायां न्यसेत् कोणचतुष्कके ।
[7]यातवीयादिवह्न्यन्ते क्रमादेवं प्रकल्पयेत् ॥ २७ ॥

अर्घ्यमाचमनीयं च पाद्यं स्नानीयमेव च ।
कल्पयेत् क्रमशो मन्त्री मन्त्रानेतानुदीरयन् ॥२८॥

तारं च कल्पयामीति मध्ये संज्ञाः स्युरञ्जसा ।
[8]अनेकार्थं च तत्रार्घ्यं कल्प्यं पात्रेऽथ मध्यतः ॥

सिद्धार्थकास्तिला दूर्वाः सयवाः सिततण्डुलाः ।
तोयक्षीरफलोपेता अर्घ्यद्रव्यमुदाहृतम् ॥ ३० ॥

पात्रं तारिकयापूर्य सुधासंदोहदेहया ।
तस्मिन्निष्कलसंस्थाने मन्त्रचक्रं विचिन्तयेत् ॥

निष्कलं मध्यमार्घ्यं तु पूज्य पुष्पादिना पुरा ।
भावनीयं च तत् सम्यगग्नीषोममयात्मना ॥३२॥

एष प्रथमसंस्कारो द्वितीयमवधारय ।
प्रचण्डकिरणव्रातैर्भास्करीयैर्दहेत्तु तत् ॥ ३३ ॥

निर्वापयेत्ततो दग्धं शीतपूर्णेन्दुरश्मिभिः ।
ब्रह्मानन्दामृताम्भोधिकल्लोलैः पूरयेत्तु तत् ॥ ३४ ॥ ✓

विभाजित इत्यर्थः । १९. कर्णिकादीत्यादिपदेन केसरपत्रसन्धिपर्वाणि गृह्यन्ते । २०. मण्डलमिव पुष्पप्रस्तरादिकमपि पूजास्थानतया ग्राह्यम् । २६. पूर्वमर्घ्यादिनेत्युक्तं विशदयति —तत इति । २७. न्यसेदिति । अर्घ्यादिपात्रत्वेनेति शेषः । यातवीयादीति । नैर्ऋत्याद्याग्नेयान्तकोणेष्वित्यर्थः । २९. ओं अर्घ्यं परिकल्पयामीत्यादिक्रमेणेति भावः । अनेकार्थमिति । सर्वार्थतोयमिति तस्य सांप्रदायिकी प्रसिद्धिः । ३२. पूज्य ; पूजयित्वा । भावनीयम् ; ध्येयम् । ३३. द्वितीयमिति । दाहनप्लावनादिरूपं वक्ष्यमाणमित्यर्थः । दहेदिति । शोषण-

[1] सदृशा B.
[2] नवपद्मं B.
[3] यजेत् B. F.
[4] राजते ताम्रे A. C.
[5] आवाहयेत् B
[6] तारिकाख्यां B
[7] याम्यादिवह्निपर्यन्तैः A. B. G.
[8] अनेकाङ्गं A. B. G.

अभिमन्त्र्य तु मुख्यैस्तन्मनुभिस्तादिकादिभिः ।
ततो जलमुपादाय न्यसेत् पात्रान्तरेषु तु ॥ ३५ ॥

प्रतिस्वमपि वा कुर्यादीदृशं संस्कृतिक्रमम् ।
आप्यायनं च पात्राणां प्रीतिं चास्मात् समाचरेत् ॥

मुद्रा कामदुघा कार्या सौरभेयी स्वमन्त्रतः ।
सुरभिं हिमशैलाभां निराधारपदे स्थिताम् ॥ ३७ ॥

ध्यात्वा तत्स्तनसंकाशां मुद्रां तां परिदर्शयेत् ।
करााभ्यां गन्धदिग्धाभ्यां सावधानेन चेतसा ॥३८॥

अर्घ्यपात्राम्भसा प्रोक्ष्य मण्डलं मण्डपं तथा ।
यागद्रव्याण्यदोषाणि ताडयेदस्त्रमन्त्रतः ॥ ३९ ॥

मूलेनाप्लावयेत् पश्चात्तत् सर्वं भोगवां व्रजेत् ।
ततो विष्णुं नमस्कृत्य तदङ्कस्थां च पङ्कजाम् ॥

अर्चयेन्मूलमन्त्रेण [1]ह्यामुकपुसुमादिभिः ।
अर्घ्यपात्रमथादाय पुष्पं धूपं विलेपनम् ॥ ४१ ॥

दीपं नैवेद्यमप्येवं द्वारयागे ततश्चरेत् ।
उदुम्बरस्य मूले तु बहिर्द्वारस्य मध्यतः ॥ ४२ ॥

भृङ्गिष्ठं क्षेत्रपालं तु यजेद्ध्यानादिसंयुतम् ।
नीलजीमूतसंकाशं दण्डहस्तं महातनुम् ॥ ४३ ॥

मुष्टिरद्वामहस्तेन ध्येयः क्षेत्रेश्वरः सदा ।
मुद्रा च दर्शनीयात्र परेष्वेवं विधिः क्रमात् ॥ ४४ ॥

द्वारोपरि स्थितां लक्ष्मीमूर्ध्वसंस्थ उदुम्बरे ।
पद्मेरुहकरां लक्ष्मीं पद्मोपरिगतां यजेत् ॥ ४५ ॥

दक्षिणोत्तरशाखाभ्यां मूले चण्डप्रचण्डकौ ।
तद्वज्जयं च विजयं बाह्ये द्वारस्य चान्तरे ॥ ४६ ॥

चण्डाद्या विजयान्ताश्च[2] सर्वे ज्ञेयाश्चतुर्भुजाः ।
गदाचक्रधराश्चैव शङ्खहस्ता महाबलाः ॥ ४७ ॥

तर्जयन्तो ह्यभक्तांश्च दोषाणां ध्वंसनोद्यताः ।
इत्थं ध्येयाः समभ्यर्च्य दर्शनीयाश्च मुद्रिकाः ॥४८॥

शाखाद्वयस्य मध्ये तु वामदक्षिणतः क्रमात् ।
गङ्गां च यमुनां चैव पूजयेत्तदनन्तरम् ॥ ४९ ॥

हस्ताभ्यां दधती कुम्भं [3]तीर्थेन परिपूरितम् ।
नवयौवनलावण्या श्वेतरूपा स्मिताननना ॥ ५० ॥

गङ्गा ध्येया प्रसन्ना च पूर्णचन्द्रनिभानना ।
तादृशी नीलजीमूतसंनिभा यमुना नदी ॥ ५१ ॥

तेनैव क्रमयोगेन द्वारस्याभ्यन्तरे[4] स्थितौ ।
निधीशौ शङ्खपद्माख्यावर्घ्यपुष्पादिभिर्यजेत् ॥५२॥

निधीशौ भावनीयौ तौ निधिभाण्डोपरिस्थितौ ।
स्थूलोदरौ च पिङ्गाक्षौ द्विभुजौ भगवन्मयौ ॥५३॥

कृत्वैवं द्वारयागं तु ततः पुष्पं च संमुखम् ।
अङ्गुष्ठतर्जनीमध्याश्रितयेनास्त्रमन्त्रतः ॥ ५४ ॥

पूर्वोक्ते दद्यादिति संप्रदायः । ३५. तत इति । संस्कृतोपकरणात् पात्रादित्यर्थः । ३६. प्रतिस्वमिति । मधेरस्याद्दिपात्रमित्यर्थः । ३७. अस्मेति । ओं वीर्याधाराय फडिति मन्त्रेणेत्यर्थः । ४०. मूलेन; मूलमन्त्रेणेत्यर्थः । ४१. अमुकेति । अर्घ्यादिनः त्रिक्रि- रित्यर्थः । ४२. उदुम्बरशब्दो द्वारस्योर्ध्वप्रदेशनिक्षिप्तदारुवाची । ४३. क्षेत्रपाल- स्वरूप—नीलेति । ४५. ऊर्ध्वसंस्थ इत्युच्यते—द्वारोपरीति । ४६. शाखा द्वारस्य पार्श्वदारुस्तम्भः । ४८. अभक्तान् । देवतान्तरनिष्ठानित्यर्थः । ४९. शाखाद्वयस्य; द्वारपार्श्वदारुस्तम्भद्वयस्य । ५०. गङ्गायमुनयोः स्वरूपमाह—हस्ताभ्यामित्यादिना ।

[1] कुर्वेत B. [2] विजयान्ताश्च B. F. [3] दर्भैः B. C. [4] चान्तरे F.

आदाय चामिमन्त्र्याथ चक्र तदुपरि स्मरेत् ।
निशितार ज्वलद्रूप प्रवर्षदनलाशनि ॥ ५५ ॥

क्षयवृद्धिनजालाना न्यसेद्यागगृहान्तरे ।
दक्षिणा तर्जनीं कुर्यान् सम्यगूर्ध्वमुखीं तत ॥५६॥

शिखामन्त्रेण सयुक्ता विद्युद्विलसितप्रभाम् ।
स्मृत्वा भ्रामयमाणस्ता सविशेद्यागमन्दिरम् ॥५७॥

अर्घ्यपात्राम्भसास्त्रेण प्रोक्षयेत् स्वकमासनम् ।
तस्मिन्नाधारशक्त्यादि मान्त्रमासनमर्चयेत् ॥५८॥

ता ता प्रदर्शयेन्मुद्रा यत्र यत्र च या च या ।
तत्रोपविश्य देवेशमर्चयेद्धृदये स्थितम् ॥ ५९ ॥

लक्ष्मीनारायणाख्य तद्धृद्गत परम मह ।
वापत्यमनपाय तद्यापयेन्नेत्रयोर्द्वयो ॥ ६० ॥

सर्वं तद्ध्यानमापाद्य पश्येन्निश्चललोचन ।
मण्डपे वेदिकाया वा यत्र वा यत्नमिच्छति ॥

अर्घ्यपुष्पादिभि पूज्यमाधारादिकमासनम् ।
धर्मादिकान् यजेत् पश्चात्तत्तद्दिग्भागगोचरान् ॥

पद्मार्कमण्डलाश्चैव ततो भावासनावधि ।
उपर्युपरि योगेन ध्यात्वा पुष्पादिनार्चयेत् ॥ ६३ ॥

[1]मण्डलस्थस्य देवस्य दक्षिणे मण्डलोपरि ।
कृतादियुगपर्यन्ते वायोरीशावधि क्रमात् ॥ ६४ ॥

विभज्य सप्तधा क्षेत्रमादौ गणपतिं यजेत् ।
पद्मासनोपविष्ट तत्केसरे तु दलेऽम्बुजे[2] ॥ ६५ ॥

दधान चोर्ध्वबाहुभ्यामक्षसूत्रपरश्वथौ ।
वरदाभयमुद्रे च पूर्वहस्तद्वयेन तु ॥ ६६ ॥

किंतु [3]मुद्रा विचिन्त्यैव वरदाभयहस्तयो ।
तर्जन्यङ्गुष्ठसंसर्गाद् व्याख्यामुद्रासमाकृति ॥

पीन लम्बोदर स्थूलमेकदंष्ट्र गजाननम् ।
केसरेष्वङ्गषट्क च षट्सु पद्मस्य विन्यसेत् ॥

स्वमन्त्रेणार्चयेन्मुद्रा बद्ध्वा पुष्पादिना सुधी ।
ततो वागीश्वरीं देवीं स्वमन्त्रेणार्चयेत्सुधी ॥६९॥

सूर्येन्दुवह्निबिम्बस्थसितपङ्केरुहासनाम् ।
सर्वोपाधिविनिर्मुक्तामपि साकारता गताम् ॥७०॥

शक्तिं शब्दात्मिका साक्षान्मदीया प्रथमोद्गताम्[4] ।
द्विनेत्रा द्विभुजा श्वेता शङ्खपङ्कजधारिणीम् ॥७१॥

स्फुरत्पीयूषकल्लोलसदृशाभरणाम्बराम् ।
ततो गुरु तद्गुरु च लोकसिद्धान्ती च तौ ॥७२॥

लोकसिद्धान्तिनं पश्चात् तद्गुरु परमेष्ठिनम् ।
तत पितृगण पूज्यो ह्यमूर्त पिण्डसनिभ ॥७३॥

आदिसिद्धान् यजेत् पश्चाद्भगवद्ध्यानतत्परान् ।
शान्तान् निमीलिताक्षांश्च शुभाङ्गांस्तेजसाधिकान् ॥

अनुज्ञा प्राप्य तेभ्यश्च लब्धानुज्ञो यथाक्रमम् ।
आवाह्य मा यजेत् पश्चाद्देवदेवाङ्कसस्थिताम् ॥
येन येन प्रकारेण त त शृणु सुरेश्वर ॥ ७५ ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे बाह्ययागप्रकाशो नाम
सप्तत्रिंशोऽध्याय

६०. यापयेत् । गमयेदित्यर्थ । ७५. अनुज्ञा प्राप्येति । गुरुपरमगुर्वादीनामनुज्ञा प्राप्तामनुसधायेत्यर्थ ।

## इति सप्तत्रिंशोऽध्यायः

[1] B C. omit this line
[2] केसरेषु दलाम्बुजे B
[3] मुद्रान्वितं चिन्त्य A B
[4] प्रथमोद्भवम् F
[5] श्रीपञ्चरात्र A श्रीपाञ्चरात्र B

# अष्टत्रिंशोऽध्यायः

श्रीः—

एको नारायणो देवः पूर्णषाड्गुण्यविग्रहः ।
तस्याहं परमा शक्तिरेकाहंता सनातनी ॥ १ ॥

साधकानुग्रहार्थाय साहं साकारतां गता ।
अङ्कस्था देवदेवस्य यथा पूज्ये[1] तथा शृणु ॥ २ ॥

प्राप्यानुज्ञां गणेशादेर्हृत्स्थमावाहयेत्ततः ।
भावयेत् परमात्मानमन्तर्यागाभिपूजितम्[2] ॥ ३ ॥

पूर्णस्तिमितषाड्गुण्यं मया [3]शक्त्याभिपूरितम् ।
तारकं [4]तत् त्रिरुच्चार्य तारिकां तु त्रिरुच्चरेत् ॥ ४ ॥

आवाहयेत् ततो मन्त्रं पुंलिङ्गं समुदीरयन् ।
पुरुषं पुण्डरीकाक्षं पीनोदारचतुर्भुजम् ॥ ५ ॥

[5]उच्चरन् परमं मन्त्रं रेचकेन शनैः शनैः ।
अग्नीषोमद्वयान्तःस्थवर्त्मना नासिकोदरात् ॥ ६ ॥

दिव्यशक्तिसमावासं लक्ष्मीशमवतारयेत् ।
अनाहतात् पदाद्यद्वा सर्वतः समतां गतम् ॥ ७ ॥

निर्गतं तु स्मरेद्देवं विद्युत्पुञ्जमिवाम्बुदात् ।
सपुष्पाञ्जलिमध्यस्थं भावासनगतं न्यसेत् ॥ ८ ॥

संनिधिं संनिरोधं च संस्तम्भं स्थापनं तथा ।
कुर्वन् मुद्राचतुष्कं तु मनसा सम्यगाचरेत् ॥ ९ ॥

उत्तानौ संहतौ पाणी कृत्वाङ्गुष्ठद्वयेन तु ।
स्वां स्वां कनिष्ठिकां मृज्यात् संनिधीकरणं तु तत् ॥

अनामयोर्मध्यमयोः कुर्यादुन्मार्जनं तथा[6] ।
संस्तम्भसंनिरोधौ च द्वौ कृतौ भवतस्तदा ॥११॥

कृत्वा चतसृभिर्मुष्टिमङ्गुलीभिः करद्वये ।
तिर्यक् च संमुखीकृत्य न्यसेन्मुष्टिद्वयोपरि ॥ १२ ॥

अङ्गुष्ठद्वितयं शक्र संस्थापनमिदं भवेत् ।
एवंभूतो भवत्येवं तारादिं मन्त्रमुच्चरन् ॥ १३ ॥

कालं पाद्यार्घ्यदानान्तमुत्थितं भावयेद्धरिम् ।
स्नानाभरणवस्त्रस्रग्दानेऽलंकरणे तथा ॥ १४ ॥

अन्यत्र भोगयागेषु तत्तद्भोगानुकूलतः ।
स्मरेच्छास्त्रीयसंस्थानं सानुकम्पं सुसंमुखम् ॥

क्लृप्ते तु विग्रहे पूर्वं तथारूपोऽवतिष्ठते ।
भोगेषु दीयमानेषु शक्तिर्या मन्मयी परा ॥ १६ ॥

५. पुंलिङ्गं मन्त्रमिति । प्रणवमित्यर्थः । ७. अनाहतं हृदयस्थं द्वादशदलं पद्मम् । ९. संनिध्यादीनां मुद्रा अनन्तरमेव वक्ष्यन्ते । १४. कालमिति । काले इत्यर्थः । अत्यन्तसंयोगे द्वितीया । १५. सानुकम्पं सुसंमुखमिति च हरिविशेषणम् ।

[1] पूज्या F.
[2] यागादिपूजितम् B. C.
[3] शक्त्यादिपूजितम् B. C.
[4] तु F.
[5] उच्चरेत् A. B. G.
[6] तदा C.; ततः F.

तत्रस्था ता स्मरेत् साक्षाद्दादानो हरिर्यथा ।
[1]आहूतस्य तत साघ्यं पुष्पाणा पूर्णमञ्जलिम् ॥

विक्षिप्याधोमुखेनैव पाणियुग्मेन मूर्धनि ।
तारेण तारया द्वाभ्या [2]नमसा चार्चयेत् क्रमात् ॥

पुष्पार्घ्यधूपलेपैस्तु[3] मूलमन्त्रादिभि क्रमात् ।
सक्षेप विस्तर चापि यथाकाल समाचरेत् ॥१९॥

शक्ति तदङ्गसपूर्णा निराकारामनूपमाम् ।
तारया पूजयेत् पश्चात्तत्तदङ्गेषु देवता ॥ २० ॥

अस्त्रभूषणशक्त्याद्या स्वै स्वैर्मन्त्रै समर्चयेत् ।
अयं यागो लयो नाम महान् सर्वार्थसिद्धिद ॥

ततो भगवतो विष्णो शक्तिसपूर्णविग्रहात् ।
सर्वशक्तिमयीं दिव्यामेका परमभास्वराम् ॥ २२ ॥

षाड्गुण्यविग्रहा देवीमनिर्देश्यामनूपमाम ।
सर्वत्र सर्वदा विष्णो सर्वथैवानपायिनीम् ॥२३॥

कृपया साधकार्थाय स्वय साकारता गताम् ।
अविहायैव[1] स देवमाकार पृथगेयुषीम् ॥ २४ ॥

उक्तक्रमेण मा पूर्वं मन्त्रेणावाहयेत् सुधी ।
आवाहनविधौ प्रोक्तं क्रम सर्वं समाचरेत् ॥२५॥

वामोत्सङ्गे निषण्णा च विष्णोर्मां भावयेत् प्रियाम् ।
भार्यार्थे च मद्रूप पूर्वमेव निदर्शितम् ॥ २६ ॥

[4]तस्या लयप्रकारेण मयि सर्वं यनेन् क्रमान् ।
ततो विनिःसृतं मत्त स्मरेल्लक्ष्म्यादिकं क्रमात् ॥

ज्वालाया सुप्रदीप्ताया स्फुलिङ्गनिचयं यथा ।
भोगस्थाने यथैव विन्यसेत्तत्तथा शृणु ॥ २८ ॥

मध्याब्जकर्णिकामध्ये भावासनगतौ स्मरेत् ।
पुरुष पुण्डरीकाक्ष तदङ्कस्था च पङ्कजाम् ॥ २९ ॥

प्राच्याब्जकर्णिकामध्ये लक्ष्मीदेहाद्विनिर्गताम् ।
द्विभुजा भावयेल्लक्ष्मीं द्विनेत्रा चारुकुण्डलाम् ॥३०॥

श्वेतमाल्याम्बरधरा हारकेयूरभूषिताम् ।
सर्वलक्षणसपन्ना पीनोन्नतपयोधराम् ॥ ३१ ॥

प्रबुद्धोत्पलविस्तीर्णलोचना सुस्मिताननाम् ।
चलद्विरेफपटलरमणीयालकावलिम्[6] ॥ ३२ ॥

लसल्ललाटतिलकामारक्ताधरपल्लवाम् ।
कृष्णकुञ्चितकेशा च वशमुक्ताफलद्विजाम् ॥ ३३ ॥

पद्मासनोपविष्टा च पाशाङ्कुशकरद्वयीम् ।
पद्मगर्भोपमाकारा समुखीमावयो स्मरेत् ॥ ३४ ॥

स्मरेद्दक्षिणभागाब्जकर्णिकोदरमध्यगाम् ।
वेषभूषादिभिस्तुल्या लक्ष्म्या कुन्दनिभा तु वा ॥

कीर्तिं मद्रूपनिष्क्रान्ता सर्वकीर्तिमयीं पराम् ।
आवयो पश्चिमाब्जस्थकर्णिकासनसस्थिताम् ॥३६॥

मद्रूपनि सृता ध्यायेत्तादृशीमरुणा जयाम् ।
स्मरेदुत्तरपद्मस्थकर्णिकोदरमध्यगाम् ॥ ३७ ॥

माया मद्रूपनिष्क्रान्ता तादृशीमरुणा तु वा ।
आग्नेये हृदयं पद्मे शिरो यातुसरोरुहे ॥ ३८ ॥

शिखा तु वायवीयाब्जे वर्म चेशानपङ्कजे ।
मध्यपद्मपुरःपत्रे नेत्रमस्त्र तु कोणके ॥ ३९ ॥

नेत्रस्य पुरतो देव वासुदेव विचिन्तयेत् ।
मध्यदक्षिणदिक्पत्रे स्मरेत् सङ्कर्षण प्रभुम् ॥४०॥

१७. आह्नस्येति। सान्निध्य मापिनस्येत्यर्थं । १९. लेप चन्दनाद्यनुलेप । २०. अनूपमाम्;

[1] B C om.
[2] मनसा B
[3] लेपभूषैस्तु B. C
[4] [illegible]
[5] कृष्णां B
[6] पङ्क्तीम् B

स्मरेन्मध्यसरोजस्य प्रद्युम्नं पश्चिमे दले ।
अनिरुद्धमुदक्संस्थे कोणपत्रयुगद्वये ॥ ४१ ॥

अस्त्रस्य पृष्ठतो नागान् स्मरेत् पीयूषवर्ष्मणः[1] ।
[2]गुल्गुलुं च गुरुण्यं च मदनं [3]शल्लं तथा ॥ ४२ ॥

[4]सुधाकुम्भकरान् शङ्खकुन्दगौरांश्चतूरदान् ।
लक्ष्मीकमलपत्रेषु सर्वतः कौस्तुभं न्यसेत् ॥ ४३ ॥

हृत्पङ्कजदलेष्वेवं वनमालां निवेशयेत् ।
कीर्तिपङ्कजपत्रेषु भूपापद्मं निवेशयेत् ॥ ४४ ॥

जयापङ्कजपत्रेषु [5]वर्म पद्मदलेषु च ।
पद्मेषु विन्यसेद्देवं पद्मपत्रचतुष्टये ॥ ४५ ॥

शिरःपङ्कजपत्रेषु [6]न्यसेदङ्कुशमुत्तमम् ।
न्यसेद् द्वारचतुष्काग्रे गरुडं पततां वरम् ॥ ४६ ॥

नागान् वा तत्र आत्मीयद्वाराग्रेषु नियोजयेत् ।
पूर्वद्वारभुवि न्यस्येत् पद्महस्तां वलाविकाम् ॥ ४७ ॥

श्वेतां कमलपत्राक्षीं प्रसन्नां वामनाकृतिम् ।
दक्षिणद्वारतस्तद्वन्नीलां तु वनमालिकाम् ॥ ४८ ॥

पश्चिमद्वारमध्ये तु रक्तवर्णां विभीषिकाम् ।
उदीच्यद्वारमध्ये तु शंकरीं मधुरदीधितिम् ॥ ४९ ॥

प्रागादीशानपर्यन्ते वहिर्द्वारप्रदेशतः[7] ।
इन्द्रादीन् संस्मरेदष्टौ लोकपालान् सवाहनान् ॥

अत ऊर्ध्वं च नागेशं ब्रह्माणं च विचिन्तयेत् ।
तद्बहिश्च तदस्त्राणि चक्रादीनि विचिन्तयेत् ॥

सोमशंकरदिङ्मध्ये स्वस्थितं संस्मरेत् प्रभुम् ।
विष्वक्सेनमुदाराङ्गमायान्तं गगनान्तरात् ॥ ५२ ॥

अनुक्तानामिदानीं मे ध्यानं शृणु पुरंदर ।
अमृतात्मानमव्याङ्गं पुण्डरीकायतेक्षणम् ॥ ५३ ॥

शङ्खचक्रगदापद्मधरं श्रीवत्सवक्षसम् ।
पीताम्बरं चतुर्बाहुं वासुदेवं विचिन्तयेत् ॥ ५४ ॥

तुषारनिचयाकारं नीलवस्त्रं चतुर्भुजम् ।
स्मरेत् संकर्षणं सीरसौनन्दकधरं परम् ॥ ५५ ॥

वरदाभयहस्तं च निमग्नोद्धरणक्षमम् ।
प्रद्युम्नं संस्मरेद्रक्तं रक्तवाससमीश्वरम् ॥ ५६ ॥

शार्ङ्गं शरांश्च बिभ्राणं वरदं चाभयप्रदम् ।
संस्मरेदनिरुद्धं च पीतं विशदवाससम् ॥ ५७ ॥

खड्गखेटकहस्तं च वराभयकरं परम् ।
आसीनाः सर्व एवैते पुरुषाः पुष्करेक्षणाः ॥ ५८ ॥

पश्यन्तो दिशमीशानां मां च विष्णुं च शाश्वतम् ।
सिञ्चन्तोऽमृतकुम्भैर्नौ हिमशैलनिभा गजाः ॥

सितशोणितवर्णाङ्गं शुक्लवस्त्रं चतुर्भुजम् ।
पद्मासनोपविष्टं च पद्मशङ्खकराङ्कितम् ॥ ६० ॥

हृन्मुद्रालंकृतकरं वामेनाभयदं सदा ।
सिताभरणवस्त्राढ्यं कर्पूरालिप्तविग्रहम् ॥ ६१ ॥

आवयोः संमुखासीनं हृन्मन्त्रं संस्मरेद् बुधः ।
बन्धुजीवोपमं रक्तं पद्मचक्रधरं परम् ॥ ६२ ॥

काकालिकज्जलश्यामं पद्मकौमोदकीधरम् ।
दक्षिणेनास्त्रमुद्राढ्यं परेणाभयदायिनम् ॥ ६३ ॥

लिप्तं मृगमदेनैव पुष्पाद्यैरसितैर्युतम् ।
आवयोः संमुखासीनं कवचं संस्मरेत् प्रभुम् ॥ ६४ ॥

अनुपमामित्यर्थः । ४२. गुल्गुल्वादयः नागानां संज्ञाः । ५५. सौनन्दकः कामपालस्य गदा । ६३. काक इव, अलिरिव, कज्जलमिव च श्यामः; तमित्यर्थः । अथवा काकालिः अत्यन्त-

[1] वर्षिणः A.
[2] गुग्गुलुं C.
[3] गल्लं B. C. F.
[4] B and C. omit three lines from here.
[5] पत्र B.
[6] विन्यसेत्पाशमुत्तमम् A. B. C.
[7] प्रवेशतः B.

हरिद्रारुणसकाश गदापद्मधर क्रमात् ।
स्वमुद्राकरणव्यग्रपूर्वभागकरद्वयम् ॥ ६५ ॥

[1]सौवर्णाम्बरभूषाढ्य प्रलयानलविक्रमम् ।
आवयो सम्मुखासीन स्मरेदस्त्र महोद्यमम् ॥ ६६ ॥

नारीर्वा सस्मरेदेतान् हृदादीन् साधकोत्तम ।
उत्तभूषणवेषाढ्या स्वानुरूपानुलेपना ॥ ६७ ॥

इत्युक्तं ध्यानमङ्गाना सर्वपापहर शुभम् ।
कौस्तुभ द्विभुज ध्यायेत् सहस्रार्कसमप्रभम् ॥ ६८ ॥

प्रदीप्तवेषभूषाढ्य स्वमुद्रा दधत हृदि ।
पञ्चवर्णकृता कान्ता वनमाला शुभेक्षणाम् ॥ ६९ ॥

प्रौढस्त्रीसदृशीं मुद्रा दधतीं हस्तयोर्द्वयो ।
पद्म पद्ममुख ध्यायेत् प्रसन्न चन्द्रसनिभम् ॥ ७० ॥

द्विभुज चारुसर्वाङ्ग कराभ्या मुद्रिका दधत् ।
नवदूर्वाङ्कुरश्याम पाशेश पन्नगाननम्[2] ॥ ७१ ॥

द्विभुज याम्यहस्तेन स्वा मुद्रा दधत परम् ।
तथा वरदहस्त च भीमरूप भयावहम्[3] ॥ ७२ ॥

सस्मरेदङ्कुश तीक्ष्ण दीर्घनास भयानकम् ।
याम्येन दधत मुद्रा पाणिना सव्यतो वरम् ॥ ७३ ॥

प्रसिद्धा लोकपालास्ते वेषाकृतिविभूषणै ।
नराकृतीनि शस्त्राणि चिह्नयुक्तानि मूर्धनि ॥ ७४ ॥

शङ्खचक्रधरो ध्येयो विष्वक्सेनश्चतुर्भुज ।
साक्षाद्विष्णुसमो मुद्राव्याप्तोऽन्यकरद्वये ॥ ७५ ॥

द्वारामथ ततो ध्यायेद्गरुड भीमलोचनम् ।
रक्ततुण्डं महाघोण तप्तचामीकरप्रभम् ॥ ७६ ॥

पृथुदष्ट्र गृध्रवक्त्र पक्षमण्डलमण्डितम् ।
इति ते परिवाराणा ध्यानमुक्त समासत ॥ ७७ ॥

आवयो स्थूलयोरूर्ध्वे स्मरेत् सूक्ष्मा तु तारिकाम् ।
दापत्य बिभ्रतीं सूक्ष्मा लक्ष्यालक्ष्यामिवानघाम् ॥

तदूर्ध्वे तु परा तारा पूर्णषाड्गुण्यचिन्मयीम् ।
दापत्यमावयोर्दिव्यं तत्पर पारमेश्वरम् ॥ ७९ ॥

सर्वत पाणिपाद तत् सर्वतोऽक्षिशिरोमुखम् ।
शब्दार्थौ भासयत् स्वेन तेजसा नित्यमुद्यता ॥ ८० ॥

प्रतिबिम्बमिवैतस्मिन् मन्त्रचक्रमशेषत ।
एव क्रमोत्क्रमाकारैस्तारिका वितता पराम् ॥ ८१ ॥

भावेन तत्त्वतो बुद्ध्वा यथान्यास [4]समर्चयेत् ।
आदित सकलानासावर्चयेन्नौ भियानघौ ॥ ८२ ॥

अर्घ्यादिप्रापणान्तेन भोगजालेन मन्त्रवित् ।
शक्त्यादिविष्वक्सेनान्त परिवार ततोऽर्चयेत् ॥

सर्वादौ गरुड देवीश्चतस्रो द्वारपालिका ।
भोगयागक्रमेणाय[5] न्यासस्ते शक्र दर्शित ।
यान्तो यादृशा ये च भोगास्तास्त्व निबोध मे ॥

इति [6]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे बहिर्यागप्रकाशो
नामाष्टत्रिंशोऽध्याय

कृष्णवर्ण काकनिशेष । ६९. वनमालामिति । ध्यायेदिति शेष । ७२. याम्यहस्तेन । दक्षिणहस्तेनेत्यथ । ७४. द्वारपालिका बलाविकादय पूर्वं ४७, ४८, ४९ श्लोकेषूक्ता ।

इत्यष्टत्रिंशोऽध्यायः

---

[1] सुवर्णा A B F
[2] पन्नगाशनम् A G
[3] भयानकम् A
[4] समाचरेत् B C.
[5] क्रम सोऽय B F
[6] श्रीपञ्चरात्र A, श्रीपाञ्चरात्रे B

# एकोनचत्वारिंशोऽध्यायः

श्रीः—

शृणु भोगान् सुरेशान दत्तैस्तुष्यामि यैरहम् ।
येषु मे वितता शक्तिर्भोग्यभोगाय तिष्ठते ॥ १ ॥

यथाशक्त्यनुरूपेण तत्तद्भोगोपकल्पने ।
दिव्यशक्तिप्रभेदैस्तैर्विचित्रैः स्थानतां गतैः ॥ २ ॥

संपूर्णमीश्वरार्हं तद्भावनीयमशेषतः ।
मृद्वास्तरणसंस्तीर्णमादावासनमुत्तमम् ॥ ३ ॥

अर्घ्यं पाद्यं मधूपर्कस्तथैवाचमनीयकम् ।
प्रणामपूर्वकं पश्चादात्मात्मीयनिवेदनम् ॥ ४ ॥

अनुज्ञाप्य ततः पश्चात् स्नानासनमनुत्तमम् ।
पादपीठमथार्घ्यं च ततः पाद्यप्रतिग्रहः ॥ ५ ॥

पाद्याम्बु पादुके स्नानशाटी मात्रा च शालिका ।
दर्पणं गन्धतोयं च पाणिप्रक्षालनार्थकम् ॥ ६ ॥

दन्तकाष्ठं च वदनप्रक्षालाचमनाम्बुनी ।
गन्धतैलं च चूर्णं च शालिगोधूमसंभवम् ॥ ७ ॥

हरिद्राचूर्णसंमिश्रमीषत्पद्मकभावितम् ।
उद्वर्तनार्थं तदनु स्नानार्थं खलिसंयुतम् ॥ ८ ॥

उष्णाम्बु चन्दनं चन्द्रमिश्रितं लेपनार्थकम् ।
क्षीरं दधि घृतं गव्यं मध्वैक्षवरसं तथा ॥ ९ ॥

सुगन्धामलकामिश्रं लोध्रतोयं ततः परम् ।
रक्तचन्दनतोयं च रजनीवारि चोत्तमम् ॥ १० ॥

ग्रन्थिपर्णीपयः पश्चात् ततश्च तगरोदकम् ।
प्रियङ्गुजटिलासिद्धार्थकसर्वौषधीजलम् ॥ ११ ॥

पुष्पपत्रफलाम्भांसि बीजगन्धोदके तथा ।
हेमरत्नसरित्तीर्थकेवलाम्बूनि च क्रमात् ॥ १२ ॥

१. तिष्ठते ; स्वाशयं प्रकाशयन्ती तिष्ठतीत्यर्थः । प्रकाशनार्थे तङ् । ३. भोगविशेषा उच्यन्ते—मृद्वित्यादिना । भगवदाराधने षडासनानि ; यथा—मन्त्रासनम्, स्नानासनम्, अलंकारासनम्, भोज्यासनम्, पुनर्मन्त्रासनम्, पर्यङ्कासनं चेति । तत्र प्रथमं मन्त्रासनमत्रोच्यते । ४. तस्मिन्नासने समर्पणीयानाह—अर्घ्यमित्यादिना । आत्मात्मीयनिवेदनप्रकारमाह पाद्मे (४-३-१४०)—"दासोऽहं ते जगन्नाथ सपुत्रादिपरिग्रहः । प्रेष्यं प्रशाधि कर्तव्ये मां नियुङ्क्ष्व हिते सदा ॥" इति । ५. द्वितीयं स्नानासनमत्र । अत्र मन्त्रः सात्त्वते (६–२६)—"स्फुटीकृतं मया देव त्विदं स्नानपरे त्वयि । सपादपीठं परमं शुभं स्नानासनं महत् । आसादयाशु स्नानार्थं मदनुग्रहकाम्यया ॥" इति । ६. मात्रा च शालिकेति । अक्षताभ्रशुभ्रवर्णशालितण्डुलपूर्णपात्रमत्र मात्रापदार्थः । तथा च पाद्मे (४-६-३६)—"शालितण्डुलमात्रया" इति । एतच्च मात्रादानमाराधनमध्यापतितनैरन्तर्यपरिहाराय । ८. खलिः मृगमदादिवासनावासितं घनीभूतगन्धतैलकल्किकम् । ९. चन्द्रः घनसारः ।

स्नानीयाम्बुसमेतानि देयान्यम्बून्यमूनि तु ।
अर्घ्यपात्रात्तथैवार्घ्यं स्नानानामन्तरान्तरा ॥ १३ ॥

दद्यात् सपुष्पतोयेन क्षालनं चान्तरान्तरा ।
स्नानशिष्टाम्बुसपूर्णं [1]हरिद्राशालिसभृतम् ॥ १४ ॥

स्रगादिसयुतं कुम्भं हस्ते कृत्वापरत्र तु ।
सिद्धार्थैर्धूपनं पात्रं भ्रामयित्वा तु मूर्धनि ॥ १५ ॥

बहिः क्षिपेत्ततो दद्यात् सुधौते चाङ्गशाटिके ।
केशोदकापकर्षार्थमम्बरं देहवारिहृत् ॥ १६ ॥

अन्तरीयोत्तरीये द्वे सुधौते वाससी शुभे ।
भाविते गन्धधूपेन दद्याद् भद्रासनं ततः ॥ १७ ॥

शोधयेत् पूर्णकुम्भैस्तु सप्लुतं भावयेद्धरिम् ।
अलङ्कारासनं पश्चाद्देयं मृद्वास्तरोल्बणम् ॥ १८ ॥

तत्र सर्वं प्रदातव्यमर्घ्यपाद्यादि पूर्ववत् ।
[2]विवेचनं च केशानां कङ्कतेन प्रशोधनम् ॥ १९ ॥

शीर्षण्यास्ता सुमनसस्ततश्चूडोपकल्पनम् ।
[3]चन्दनाद्या सुगन्धाश्च व्यजनं शोषणार्थकम् ॥ २० ॥

मकुटाद्या अलङ्कारा प्रदेया परमाद्भुता ।
स्रजो नानाविधाकारा सात्त्विकैः कुसुमैश्चिता ॥

पुष्पाञ्जलि पदद्वन्द्वे प्राकार सुमनश्चयैः ।
गन्धद्रव्यसुशीतेन ह्यञ्जनेनाञ्जनं दृशो ॥ २२ ॥

तथैवालम्भनं चापि ललाटतिलकं तथा ।
आदर्शो विमलो मृष्ट परितश्च समीक्षणम् ॥ २३ ॥

प्रदीपश्च प्रधूपश्च वाहनं चेतनेतरत् ।
स्तुतिमङ्गलगीतानि नृत्तवादित्रदर्शनम् ॥ २४ ॥

मात्राश्च रत्नसपूर्णा भोगच्छिद्रप्रपूरणा ।
बुद्धया विरचितास्तास्ता राजराजोचिता क्रिया ॥

अलङ्कारासनस्थाय त्वेते भोगा हि मन्मया ।
अथ भोज्यासनं देयमर्घ्यपाद्यादिकं तथा ॥ २६ ॥

यजेत मधुपर्केण [4]यथा तदवधारय ।
पयसो मधुनो दध्न सयोगो मधुपर्कक ॥ २७ ॥

पात्रं पुर प्रतिष्ठाप्य मधुपर्केण पूरितम् ।
अर्हणं तर्पणं चार्घ्यात् प्रथक् पात्रद्वये भवेत् ॥ २८ ॥

[5]अर्हणेनार्चनं पूर्वं ततश्च मधुपर्ककम् ।
तर्पणं तर्पणीयाभिस्ततो निष्पुंसनं करे ॥ २९ ॥

देयमाचमनं पश्चान्मात्रा गौर्माधुपर्किकी ।
यष्टव्यमन्नयज्ञेन साङ्गेन मधुपर्कवत् ॥ ३० ॥ ✓

१४. स्नपनानन्तरं नीराजनमुच्यते—स्नानशिष्टेति । १५. हस्ते, वामहस्ते । अपरत्र, दक्षिणहस्ते । १७. भद्रासनम्, स्नानासनम् । १८ सप्लुतम्, द्वादशान्तस्थितम् । तृतीयमलङ्कारासनमाह—अलङ्कारेति । १९ कङ्कत केशप्रसाधनी । २४. चेतनेतरत् वाहनमिति । सुवर्णादिनिर्मितं हस्त्यश्वादि । २६. मन्मया इत्यनेनाध्यायादावुक्तो विषय स्मार्यते । तुरीयं भोज्यासनमुपस्थाप्यते—अथेति । २७. मधुपर्कमाह—पयस इति । २९. अर्हणमापोशानम् । तर्पणम्, पानीयतीर्थम् । निष्पुंसनम्, हस्तोद्वर्तनम् । ३०. पुन मधुपर्कदानसमानितिकर्तव्यपरि-

[1] हरिद्रागन्धि B
[2] निवेदनं A
[3] चन्दनाद्यास्तु A B
[4] यथावत् B F
[5] अर्हणं चार्चनं B.

[1]प्रदेया अन्नयज्ञार्थां मात्राः शाल्यन्ननिर्मिताः ।
सकर्पूरं च ताम्बूलं प्रदेयमनुवासनम् ॥ ३१ ॥

ततश्च विश्रमार्थाय विमानं परमाद्भुतम् ।
प्रदेयं तत्र दातव्यं सर्वमर्घ्यादि पूर्ववत् ॥ ३२ ॥

जपं समाचरेत् पश्चादलक्ष्यमितरैर्जनैः ।
मन्त्रसंस्कृतया सम्यक् शुभया ह्यक्षमालया ॥३३॥

प्राकृतस्त्वङ्गुलीभिस्तु पर्वभिस्तु दशोत्तरः ।
शतोत्तरादिसंख्यस्तु विज्ञेयो ह्यक्षमालया ॥ ३४ ॥

वाचिकः क्षुद्रकर्मार्थमुपांशुः सिद्धिकर्मणि ।
मानसो मोक्षलक्ष्मीदो ध्यानात्मा सर्वसिद्धिकृत् ॥

अक्षमाला तथा कार्या न दृश्या प्राकृतैर्यथा ।
अक्षास्थिमात्रा मणय उत्तमाः परिकीर्तिताः ॥ ३६ ॥

धात्रीफलास्थिसदृशा मध्यमाः परिकीर्तिताः ।
[2]अधमा बदरास्थ्याभाः श्रेष्ठमष्टशतात्मकम् ॥३७॥

तदर्धं मध्यमं प्रोक्तं तदर्धमधमं स्मृतम् ।
सौवर्णं द्रव्यसिद्ध्यर्थे पुष्ट्यर्थे पितृकर्मणि ॥ ३८ ॥

राजतं ताम्ररूपं तु मेधावीर्यजयाप्तये ।
त्रापुषं यक्षिणीसिद्धौ सैसं रक्षःपिशाचयोः ॥

वेतालसाधनार्थं तु रीतिजं कांस्यजं तु तत् ।
अक्षसूत्रं परिज्ञेयं नागपन्नगसाधने ॥ ४० ॥

आयसं क्षुद्रकर्मार्थमिति धातुमयो मणिः ।
आयुरारोग्यभूत्यर्थः[3] सर्वो मणिमयो मणिः ॥

मोक्षाय शान्तये चैव स्फाटिको मणिरुच्यते ।
सौभाग्ये वैद्रुमः कार्यः सौत्रः कार्यस्तु मुक्तये ॥

शान्तये मुक्तये पुष्ट्यै तुलसीमूलजो मणिः ।
सर्वसिद्धिप्रदः पाद्मो मणिः शाङ्खः श्रियै मतः ॥

आयुःप्रजायशोदः स्यान्मौक्तिको मणिरुत्तमः ।
आदद्यादेकमेतेषां शुभकाले गुणाधिके ॥ ४४ ॥

अस्त्रेण गन्धतोयेन क्षालयेत्तदनन्तरम् ।
[4]शाणकार्पासजोर्णानां कृत्वा सूत्रं नवं दृढम् ॥

त्रिगुणं त्रिगुणीकृत्य चतुर्धा वा यथा दृढम् ।
क्षालयित्वास्त्रतोयेन तेनैव ग्रथयेन्मणीन् ॥ ४६ ॥

अनूनानधिकांस्तुल्यानचलान् ग्रथितान्तरान् ।
इष्टसंख्यामणिप्रोतसूत्रान्तद्वितयोपमम् ॥
मणिं प्रकल्पयेन्मेरुमक्षमालानिधिस्त्वयम् ॥४७॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे बहिर्यागप्रकाशो[6]
नामैकोनचत्वारिंशोऽध्यायः

हाराय गता मात्रादानमत्रोच्यते । ३१. पञ्चमे मन्त्रासने समर्पणीयानि ताम्बूलादीनि । ३२. षष्ठ पर्यङ्कासनमुच्यते—ततश्चेति । ३३. जपसंख्यागणनोपकरणेष्वक्षमाला प्रशस्ता । ३५. जपविशेषो वाचिकादिः । ३८. अक्षमालामणिविशेषानाह—सौवर्णमित्यादिना । ४०. रीतिः पित्तल्लोहविशेषः । ४२. सौत्रः; तन्तुनिर्मितः । ४७. मेरुः जपसूत्रप्रधानग्रन्थिस्थो वृहन्मणिविशेषः ।

इत्येकोनचत्वारिंशोऽध्यायः

---

[1] B. C. F. omit four lines from here. [2] अधमा A. [3] °भूत्यर्थः C.
[4] B. omits four lines from here. [5] श्रीपञ्चरात्र A.; श्रीपाञ्चरात्रे B [6] बहिर्यागो A.

# चत्वारिंशोऽध्यायः

शक्र—

नमस्ते वारिसंभूते नमस्ते पद्मसंभवे ।
प्रकारमक्षमालाया प्रतिष्ठाया वदाम्बुजे ॥ १ ॥

श्री —

साधितामक्षमाला तु स्थापयेद्भाजने शुभे ।
पूजयित्वार्घ्यपुष्पाद्यैस्तस्या शुद्धिं समाचरेत् ॥२॥

अस्त्रेण दग्ध्वा निर्वाप्य वर्मणाप्याययेच्छ्रिया ।
परमामृतरूपिण्या ता माला भावयेत्तत ॥ ३ ॥

चतुर्भुजामनौपम्या मन्मयीं मामिवापराम् ।
वरदाभयहस्ता च बद्धाञ्जलिकरद्वयाम् ॥ ४ ॥

ब्रह्मद्वाराम्बुजन्मस्था देवीं ध्यायेत्तडित्प्रभोपमाम् ।
ता परा वैष्णवीं शक्तिं मन्मयीं मदभेदिनीम् ॥५॥

द्वादशान्ते विचिन्त्याथ क्रमाद्ध्यायेद्धृदम्बुजे ।
हृत्पद्मादुत्थिता भूयो ब्रह्मरन्ध्राद्विनिर्गताम् ॥ ६ ॥

शनै शनैर्व्यसन्तीं मालास्था ता विचिन्तयेत् ।
अङ्गोपाङ्गक्रमोपेता[1] स्थूलसूक्ष्मपरात्मिकाम् ॥ ७ ॥

मा ध्यायेत् तारिकाकारा तत्र शक्तौ सुरेश्वर ।
मणीन् सूत्रं तथा माला मालास्था वैष्णवीमपि ॥८॥

एकार्णवीकृत सर्वं[2] माया ध्यायेत् सुरेश्वर ।
मया दत्ता विभाव्यैना संस्कृतामक्षमालिकाम् ॥९॥

जप समाचरेत् पश्चात् पूर्वोक्तेन विधानत ।
अनुन्मिषत् पर सूक्ष्म स्थूलमात्मानमेव च ॥ १० ॥

लक्ष्मीनारायणाकार पञ्चक भावयेदिदम् ।
तुर्यातीत तथा तुर्यं सुषुप्तिस्वप्नजागरा ॥ ११ ॥

अवस्थापञ्चक तद्वत् तत्कर्तृकरणादिकम् ।
कर्तुर्न्मेष तथा तत्थ करण बाह्यक तथा ॥ १२ ॥

मन्त्राक्षर तथा स्थूल सर्वं तत्तन्मयं स्मरेत् ।
हृत्पुण्डरीकमध्यस्था मन्मुखाम्भोजनि सृताम् ॥

स्मरेच्छब्दमयीं शक्तिं वैष्णवीं मदभेदिनीम् ।
तस्या विनिर्गता ध्यायेन्मातृका मन्त्रमातरम् ॥

मन्मयीं संस्मरेन्माला जप्यमन्त्रमयीं तत ।
लतायामिव पुष्पाणि[3] मन्त्रान् वै तत्र संस्मरेत् ॥

स्फुरण मणिसस्पर्शे हृत्य च तदलये ।
भावयन् मन्त्रनाथस्य जपं कुर्याद्विचक्षण ॥१६॥

[4]हृद्ब्रह्मस्वरूपससृतिबहिरन्तःक्रमोत्क्रमात् ।
इति स्मरन् जपेदेकनार तत्कोटिसमितम् ॥ १७ ॥

२. साधिनाम्, निर्मिनाम् । ३. निर्वाप्य, विशोप्य । श्रिया, श्री-मन्त्रेण । भावयेत्, वक्ष्यमाणरूपेण ध्यायेत् । ५ ब्रह्मद्वार ब्रह्मरन्ध्राख्यनाडी । निम्या बहिर्निम्या । ६. द्वादशान्ते; मूर्ध्न उपरि द्वादशाङ्गुलपरिमितस्थाने ।

[1] क्रियैषा A E.
[2] इत्तां सर्वां C.
[3] पुष्पाणां A B C.
[4] हृदन् A. B, हृद्ब्रह्मस्वरूपसृति F

जपं समाप्य विधिवन्न्यस्येन्मयि जपं कृतम् ।
शक्तिं तां मन्मुखान्तःस्थां जपरूपां विचिन्तयेत् ॥

दीपे धूपे तथार्घ्ये च घण्टानादं समाचरेत् ।
आवाहने तथार्घ्ये च नैवेद्ये मधुपर्कके ॥ १९ ॥

प्रीणने च प्रयुञ्जीत घण्टानादं विचक्षणः ।
न विना पूजया चाल्या तां विना पूजयेन्न च ॥

कार्यसिद्धिमभीप्सद्भिरिह चामुत्र चोभयोः ।
सा हि घण्टाभिधा शक्तिर्वागीशा च सरस्वती ॥

वाचि मन्त्राः स्थिताः सर्वे वाच्यं मन्त्रेषु चाखिलम् ।
एतस्यां चाल्यमानायां मन्त्रा वत्सा इव द्रुतम् ॥

काङ्क्षमाणाः समायान्ति तां घण्टां मन्त्रमातरम् ।
अधोमुखं तु ब्रह्माण्डं ध्यायेल्लोकयुक्तायुतम् ॥२३॥

नालं तस्यास्तदूर्ध्वं तु वृत्तं पद्मं स्मरेद्बुधः ।
अष्टपत्रं शुभं श्वेतं कर्णिकाकेसरान्वितम् ॥ २४ ॥

तन्मध्ये चिन्तयेद्देवीं घण्टामष्टभुजान्विताम् ।
मुख्यहस्तचतुष्केण पाशशङ्खाम्बुजाङ्कुशान् ॥२५॥

परयाहुचतुष्केण दधतीमक्षसूत्रकम् ।
विज्ञानपुस्तकं सम्यगभयं च वरं तथा ॥ २६ ॥

पद्मासनामम्बुजाक्षीं पद्मगर्भसमत्विषम् ।
पद्ममालाधरां पीतसितवस्त्रानुलेपनाम् ॥ २७ ॥

मन्त्रौघमुद्गिरन्तीं च ब्रह्मादिपरिसंस्तुताम् ।
तारिकामुच्चरन् दीर्घं[1] युग्मां सचालयेदिमाम् ॥

अनया पूजयन् मन्त्री मन्त्रसिद्धिं निगच्छति ।
ततो गुरून् समानीय मन्मयान् चापि वैष्णवान् ॥

प्रदद्यात् प्रापणार्थं तु तेभ्यो मन्मन्त्रमुच्चरन् ।
अथ वह्निगतां सम्यगग्नीषोममयीं पराम् ॥ ३० ॥

तर्पयेन्मां सुरेशान यथावदवधारय ।
तत उत्तरदिग्भागे देवागाराद्बहिस्तु वा ॥ ३१ ॥

भूभागे लक्षणोपेते कुण्डं कुर्यात् सलक्षणम् ।
चतुरश्रं समं यद्वा पद्माकारं मनोहरम्[2] ॥ ३२ ॥

शतार्धहोमसंख्यायां कुण्डं स्याद् द्वादशाङ्गुलम् ।
अष्टोत्तरशतेऽरत्निसमं हस्तं सहस्रके ॥ ३३ ॥

अयुताख्ये द्विहस्तं च लक्षहोमे चतुष्करम् ।
कोटिहोमेऽष्टहस्तं स्याच्छास्त्रतः कारयेच्च तत् ॥३४॥

त्रिकोणमपि वा कुर्याद्धोमकुण्डं त्रिमेखलम् ।
उद्धृत्य तारया पूर्वं त्रिस्तया प्रोक्षयेद्बुधम् ॥ ३५ ॥

शोषणं दाहनं प्लावं तारया सम्यगाचरेत् ।
आधारशक्त्याद्यारभ्य पूज्यं भावासनावधि ॥३६॥

तत्र नारायणाख्यां वै शक्तिं तेजोमयीं पराम् ।
मन्मयीममृताकारां सर्वातिशयरूपिणीम् ॥ ३७ ॥

सर्वशक्तिसमूहस्थां सर्ववस्त्वन्तरस्थिताम् ।
अवतार्य हृदम्भोजात् सृष्टिमार्गेण शाश्वतीम् ॥३८॥

तारिकास्फुरणाकाराममवतार्यं हृदम्बुजात् ।
रेचकेन विनिक्षिप्य कुण्डमध्याम्बुजान्तरे ॥३९॥

३०. वह्निसंतर्पणमुच्यते—अथेत्यादिना । ३३. होमसंख्यानुगुण्येन कुण्डविस्तृतिरुच्यते—शतार्धेत्यादिना । ३५. तया; तारया । ३६. भावासनं पूर्वमाधारशक्तिप्रकरणोक्तम् ।

[1] दीर्घां A. [2] मनोरमम् F.

सपूज्य गन्धपुष्पाद्यै पद्ममुद्रा प्रदर्श्य च ।
ध्यायेदृतुमतीं शक्तिं सुस्नातामहताम्बराम् ॥ ४० ॥

ध्यायेत् सर्वात्मिका शक्तिं तामेव त्वधरारणिम् ।
उत्तर चारणि ध्यायेत् सर्वतेजोमय हरिम् ॥ ४१ ॥

मथ्नीयात् तारया सम्यक् तथा चैवानुतारया ।
उत्पन्न तारयादाय[1] कृशानु शक्तिसभवम् ॥ ४२ ॥

[2]अभिगृह्याङ्गुलीभिस्तु सस्कुर्याद्वैष्णवाख्यया ।
चूडा च तारया कुर्यादन्नप्राशनपूर्वकम् ॥ ४३ ॥

उपनीय ततो वह्नि तारया चानुतारया ।
तत स्वाहास्वधाभ्या तु देवीभ्या जातवेदस ॥४४॥

पाणिग्रहणक कुर्यात् तारया त्वनुतारया ।
सर्वं ध्यानमय कार्यं जातनामादिकर्म तत् ॥ ४५ ॥

लोहपाषाणमण्युत्थवह्नौ कार्यवशात् कृते ।
लौकिके वापि सस्कार निषेकादि समाचरेत् ॥४६॥

[3]आधाय तैजसे पात्रे मृन्मयेऽभिनवे तु वा ।
देवीसहाय स्वाहेश तारयैवार्चयेत् सुधी ॥ ४७ ॥

पूरणेनोपसहृत्य स्वात्मन्युपशम नयेत् ।
क्रमादानन्दशक्त्या त सहारेण तु योजयेत् ॥४८॥

सृष्टिमार्गेण त भूयोऽप्यवतार्य पदात् पदम् ।
कुण्डमध्याम्बुनान्त स्था तारया भुवमानयेत् ॥४९॥

वह्निं स्वाहास्वधेशानमग्नीषोममय यजेत् ।
समिद्भिस्तिसृभिस्तारामुच्चरन्नेक्यैकया ॥ ५० ॥

शालीतिलाक्षतै पश्चात् तत आज्याहुतित्रयम् ।
उच्चार्य तारिका पूर्णं बोधयेति द्विरुच्चरेत् ॥ ५१ ॥

तत्रस्थो बुध्यते वह्निर्यथानघ हुत[4] स्वयम् ।
पर्यग्निकरण कार्यं तारयैवार्द्रपाणिना ॥ ५२ ॥

स्तृणीयात् तारया दर्भैस्त्रेधा त्रेधा चतुर्दिशम् ।
उदग्भागेऽग्निकुण्डस्य स्तृणीयाद्दर्भसचयम ॥५३॥

प्रणीताप्रोक्षणीपात्रे दर्वीध्मौ स्रुक्स्रुवौ तथा ।
आज्यस्थालीं पवित्रे च सर्वं तत्र निधापयेत् ॥५४॥

प्रणीता तारयापूर्य गन्धयुक्तेन वारिणा ।
पवित्राभ्या त्रिरुत्पूय मा ध्यायेत् तारया श्रियम् ॥

वह्नेरुदक् प्रतिष्ठाप्य प्रोक्षणीं पूरयेच्छ्रिया ।
तामुत्पूय तत प्रोक्ष्य यागोपकरण समम् ॥ ५६ ॥

आज्यपात्र समादाय तस्मिन्नाज्य निधाय च ।
न्यस्य सर्पि समुद्रोत्थ तद्ध्यात्वाग्नेरुदग्गतम् ॥५७॥

तारया समभिज्वाल्य दर्भाग्रे विनिधाय च ।
तया पुनरभिज्वाल्य पर्यग्निकृतिमाचरेत् ॥ ५८ ॥

वह्ने पश्चात् प्रतिष्ठाप्य पवित्रद्वितयेन तत् ।
उत्पूय तारयाग्नौ तत् पवित्रद्वितय क्षिपेत् ॥ ५९ ॥

परिदध्यात् परिधिभिर्यज्ञयोग्यैश्चतुर्दिशम् ।
अग्निशर्वदिशो स्थाप्य कुण्डमध्ये समिद्द्वयम् ॥

तत इध्म समाधाय शुष्क पञ्चदशात्मकम् ।
तारया परिषिच्याग्निं स्रुक्स्रुवौ[5] परितापयेत् ॥६१॥

निमृज्य तारया पश्चात्तौ प्रोक्ष्याथ स्रुचा तया ।
वायोरग्निदिश यावन्नातो शर्वदिशावधि ॥ ६२ ॥

[6]धारया स्रावयेद्वह्नौ मध्ये दद्यात् स्रुवाहुतिम् ।
अष्टोत्तरशत वापि तदर्धं वा तदर्धकम् ॥ ६३ ॥ ✓

४०. ध्यायेदित्यादिना अग्नेर्गर्भाधानकरणमुच्यते । ४३. अभिगृह्य, सवृत्य । अन्नप्राशनेति

[1] आमाय A B G
[2] अभिगृह्य C
[3] आदाय C.
[4] यो यथा यस्य स A B G
[5] स्रुवौ तु G
[6] धारा आस्रावयेत् C.

स्रुवेणाज्याहुतीर्दद्यात् स्वाहान्तां तारिकां गृणन् ।
अयं योग्यो भवेद्वह्निर्भगवद्धव्यवाहने ॥ ६४ ॥

[1]आदध्यात् समिधः सप्त ततस्तारिकया सुधीः ।
यज्ञकाष्ठमयीरादौ ब्रह्मक्षत्रतरूद्भवाः ॥ ६५ ॥

तारया समिधो दद्यात् काष्ठरूपा दशापराः ।
मामेव भावयेन्मध्ये विष्णोरङ्कस्थितां पराम् ॥६६॥

ब्रह्मानन्दमयाम्भोजकर्णिकास्थस्य वै विभोः ।
अङ्कस्थां भावयंल्लक्ष्मीं ता दद्यात्समिधोऽखिलाः ॥

ततः पुष्पमयीं दद्याद् धूपद्रव्यमयीं तथा ।
एतास्तु त्रिविधा देया हस्तेनैव मनीषिणा ॥ ६८ ॥

मधुपर्कमयीं पश्चात् स्रुवेण जुहुयात् सुधीः ।
स्रुच्यन्नं चतुरादाय सर्पिषापूर्य पूर्ववत् ॥ ६९ ॥

तयैवान्नाहुतिं दद्यात् स्वाहान्तां तारिकां गृणन् ।
स्रुवेणाज्याहुतीः पूर्वसमित्संख्याः समाचरेत् ॥७०॥

पुष्पाञ्जलिमुपादाय वह्निस्थामर्चयेद्धिया ।
नित्ययागो ममैतावानूर्ध्वं काम्याहुतिं क्षिपेत् ॥७१॥

यदि कामयमानः स्यात् तत्तद्विध्यनुरूपिणीम् ।
तारया परिषिच्याग्निं प्रायश्चित्ताहुतिं क्षिपेत् ॥७२॥

दशवारं तारयैव क्षमस्वेति वदन् धिया ।
प्रणीतामुपसहृत्य शुचिस्थाने [2]निनीय च ॥ ७३ ॥

प्रहृत्य परिधीन् सर्वान् [3]संस्रावं समाचरेत् ।
स्तरं प्रहृत्य वह्नौ च घृतेनापूर्य च स्रुवम् ॥ ७४ ॥

दद्यात् पूर्णाहुतिं दीर्घां स्वाहान्तां तारिकां गृणन् ।
शक्त्या समेतां तां तारां वह्निस्थां मन्मयीं पराम् ॥

मां चाप्यङ्कस्थितां [4]विष्णोर्नासिकासंधिमार्गतः ।
मरुच्छक्त्या समाकृष्य हृत्पद्मे विनिवेश्य च ॥७६॥

यागभूमिं समेत्याथ नवपद्मस्थया मया ।
एकीकृत्य मयि न्यस्येदर्चास्थायां कृतिं तु ताम् ॥७७॥

प्रागेव विभजेदन्नं प्रापणात् सम्प्रदानतः ।
तेनान्नेन यजेत् सम्यग्विष्वक्सेनं चतुर्भुजम् ॥७८॥

मण्डलान्तमुपानीय समाहूयाम्बरान्तरात् ।
नवाम्रपत्रसदृशं पिङ्गभ्रूश्मश्रुलोचनम् ॥ ७९ ॥

पीतवस्त्रं चतुर्दंष्ट्रं स्वमुद्राद्वितयान्वितम् ।
गदाखड्गधरं देवमभ्यर्च्य क्रमशः सुधीः ॥ ८० ॥

साङ्गमुद्रामथादर्श्य गत्वा कुण्डसमीपतः ।
विष्वक्सेनस्ततो भक्त्या तर्पणीयस्तिलाक्षतैः ॥

वौषडन्तेन मन्त्रेण दद्यात् पूर्णाहुतिं ततः ।
मण्डले पूजयित्वाथ कुर्यात्तस्य विसर्जनम् ॥ ८२ ॥

स्वमन्त्रेण सुरश्रेष्ठ[5] क्षमस्वेति पदं वदन् ।
मुद्रां च दर्शयेत्तं च नभस्युत्पतितं स्मरेत् ॥ ८३ ॥

विष्वक्सेनार्चनं सर्वमगाधेऽम्बुनि निक्षिपेत् ।
तोयेनास्त्रप्रजप्तेन प्लावयेन्मण्डलं च तत् ॥ ८४ ॥

ततः संपूजयेत् सर्वान् लोकपालानशेषतः ।
पुष्पार्घ्यैरन्नदानान्तैरेकाहुत्या च वह्नितः ॥ ८५ ॥ ✓

जातकर्मनामकरणयोरप्युपलक्षणम् । ६५. ब्रह्मतरुः पलाशः । क्षत्रतरुः मुचुकुन्दनामा तरुः । दशापरा इति । अवशिष्टा दश समिध इत्यर्थः । ८१. इत आरभ्य पञ्चार्धानि

[1] F. omits verses 65 to 112
[2] निधाय A B
[3] सर्पि, A B.
[4] विष्णोर्नाडिका C.
[5] ज्येष्ठ B C.

[1]वह्निभिर्वा यथाशक्ति स्वै स्वैर्मन्त्रैर्यथाविधि ।
पूजयित्वा [2]विसृज्यैतास्तदस्त्राण्यपि पूजयेत् ॥८६॥

सर्वांश्च परिवारास्तान् स्वस्वस्थानक्रमेण तु ।
अर्चयेत् क्षेत्रपालादीन् वह्निमध्ये च तर्पयेत् ॥८७॥

आधारशक्तेरारभ्य पीठशक्तीश्च सर्वश ।
गणेशाद्याश्च सपूज्या सतर्प्याश्च घृतादिकै ॥८८॥

सकृत्कृत्वा निवृत्या वा पूर्णां सवच्चथ क्षिपेत् ।
लक्ष्म्यादीन्पूजयेत्सर्वान् विष्वक्सेनार्चनात्पुरा ॥

विष्वक्सेनार्चनात् पश्चाल्लोकपालार्चन क्रमात् ।
ततो वेदिं विशोध्याथ दर्भान् सस्तीर्य दक्षिणान् ॥

पितॄन् यजेत् क्रमेणैव प्रापणार्थावशेषत ।
कृत्वा पिण्डत्रय तेन पितृभ्यो निर्वपेत् स्तरे ॥९१॥

[3]अर्घ्याञ्जल तथा दद्यादेकैकस्यैकमञ्जलिम् ।
वैष्णवायाथवा दद्याद्ब्राह्मणाय विशेषिणे[4] ॥९२॥

पितॄनुद्दिश्य वै भक्त तत्तन्नामानुदेशवत् ।
सन्यस्य मयि तत् सर्वमन्तर्धानमवेक्ष्य च ॥९३॥

अर्घ्याद्यमुपसहृत्य वर्मास्त्रे प्रतिहृत्य च ।
उपसहृत्य च न्यासमनुयागं समाचरेत् ॥ ९४ ॥

अस्त्रेण तारया प्रोक्ष्य तारया परिषिच्य च ।
उपस्तीर्य तया चापो दद्यात् प्राणाहुतीस्तया[5] ॥९५॥

अदीक्षितस्त्वनुयजस्तत्तन्मन्त्रानुसहिताम् ।
तारिकामुच्चरन् कुर्यान्मा चान्त स्था विभावयेत् ॥

सोमानन्दमयीं दिव्या क्रमादन्नात्मता गताम् ।
वीर्यरूपरसाकारा तेजोवीर्यबलात्मिकाम् ॥ ९७ ॥

ऐश्वर्यशक्तिविज्ञानरूप भोक्तारमव्ययम् ।
आत्मान पुण्डरीकाक्ष भावयेत् पुरुषोत्तमम् ॥९८॥

तारिकामुच्चरन् पश्चादपिधायान्नमम्भसा ।
आचम्य द्विस्ततो न्यसेदनुयागं ततो मयि ॥ ९९ ॥

अथ स्वाध्यायमभ्यस्येद् दिनशेष विचक्षण ।
चतुर्विधानि शास्त्राणि सदुत्थ तारिकादिकम् ॥

सिद्धान्तानपि चाशेषानसलग्नेन चेतसा ॥
स्वाशयप्रविशुद्ध्यर्थं समीक्षेत धिया स्वया ॥१०१॥ ✓

जयाख्यरचनमनुकुर्वन्ति । ९२. ब्राह्मणाय विशेषिणे इति । विशिष्टब्राह्मणायेत्यर्थ । एतच्च धनिकेतरविषयम् । धनिकविषये तु चतुरो ब्राह्मणान्, तदलाभे एक वा श्राद्ध-विधिना भोजयेदिति सात्त्वते उक्तम् (६, १६७–१७९) । ९४ अनुयाग प्रापणाव-शेषोपयोगो भोजनादि । ९५. तयोपस्तीर्य, तारया निपीयेत्यर्थ । ९६. पूर्वोक्त तारया प्रोक्षणपरिषेचनापोशनप्राणाहुत्यादिक दीक्षितविषयम् । अदीक्षिताना तु तत्तत्सूत्रकृदुक्तमन्त्रैरेव कर्तव्यम् । ९९. अपिधायाम्भसेति । उत्तरापोशन पीत्वेत्यर्थ । १००. स्वाध्यायम्, वेददिव्य-शास्त्रादिपरिचयम् । चतुर्विधानि—आगमसिद्धान्तमन्त्रसिद्धान्ततन्त्रसिद्धान्ततन्त्रान्तरसिद्धान्त-

[1] व्रीहिभिर्वा A G
[2] विसृज्यैनान् B
[3] अर्घ्याञ्जलिं A B G
[4] विशेषेन B G
[5] तदा A

सध्यामुपास्य विधिवदभिगम्य च मा धिया ।
योग युञ्जीत विधिवच्छास्त्रशुद्धेन चेतसा ॥ १०२ ॥

पूर्वपश्चिमयोर्नक्त यामयोर्धातुसाम्यवान् ।
इति यागविधि शक्र विस्तरेण प्रदर्शित ॥ १०३ ॥

विधानस्य तु सक्षेप पुनरस्य [1]निबोध मे ।
सक्षेपविस्तरे कुर्याद् देशकालानुकूल्त ॥ १०४ ॥

नैव कुर्यादपच्छेद यजेदञ्जलिनापि माम् ।
यजेतोभौ सहैवावा सूक्तेन पुरुषेण तु ॥ १०५ ॥

तथा मदीयसूक्तेन ताभ्या वा नौ यजेत् पृथक् ।
स्थाने वा सर्वमन्त्राणा तारिकामेव योजयेत् ॥

कुर्यात् सकल्पसन्यासौ द्वावेवाद्यन्तयो पृथक् ।
अकुर्वन् भोगनिर्देश केवलैर्नो यजेत्तु तै ॥ १०७ ॥

तथा तथैव कुर्वीत शक्नुयात्तु यथा यथा ।
न त्वेव हापयेद्यागमपि दद्याज्जलाञ्जलिम् ॥ १०८ ॥

तारिका वाप्यधीयीत द्रव्याभावे विचक्षण ।
मनसा भावयेद्रूप यत्तस्या यादृश च यत् ॥ १०९ ॥

निरामिषस्य शुद्धस्य ल धलक्ष्यस्य वै पदे ।
विक्षोभाय क्रिया सर्वा या या शास्त्रेण दर्शिता ॥

आततस्य च सर्वत्र समतामभ्युपेयुष ।
क किं कस्मै निमित्तं वा कथ वा शक्नुयात्क्रियाम ॥

अग्नीषोममयौ हित्वा पन्थानौ सार्वलौकिकौ ।
तयोरन्तरमाविश्य मार्गमूर्ध्वं समाचरेत् ॥ ११२ ॥

लयाग्निदग्धदुर्मार्ग शीतीभूतो निरामय ।
स्थूलसूक्ष्मपरातीतपदाक्रान्तिविचक्षण ॥ ११३ ॥

पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ ११४ ॥

अकुर्वन्नेव तत् सर्वं मद्गतो ह्यनिदमय ।
अवस्थादेशकालाद्यैरनवस्यूतयाखिलै ॥ ११५ ॥

अहतया समाक्रान्तो धूमपीताग्निपीतवत् ।
अन्तरा वर्तमानो हि सूर्याचन्द्रमसोर्द्वयो ॥ ११६ ॥

[2]व्यक्तमुद्दाल्य वै तालु ध्रुवस्थाने निवेशयन् ।
मन शून्यमय भावमातिष्ठन् लयसमितम् ॥ ११७ ॥

[3]एव यो वर्तते योगी [4]तारिकामननोद्यत ।
स कर्मठ स वै साख्य स योगी स च सात्वत ॥

स च पाशुपतो ज्ञेय सर्वसिद्धान्तगश्च स ।
इत्येव ते मयोद्दिष्टो मद्यान पारमार्थिक ।
शृणु शेपमशेष मे यत्ते किंचिद् विवक्षितम् ॥ ११९ ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे नित्यविधिप्रकाशो नाम
चत्वारिंशोऽध्याय

प्रतिपादकानि शास्त्राणि । १०३ नक्त प्रथमयाम चरमयामश्च योगकाल । मध्ये जायमाना निद्रापि भगवति स्वात्मसमर्पणेन योगरूपा भावनीया । १०५. अपच्छेद , विच्छेद । १०८. शक्नुयादिति । मदाराधनस्य नित्यत्वात् नित्यस्य च यथाशक्त्यनुष्ठान-विधानात् यथाशक्ति मामाराधयेदित्यर्थ । ११५. अनवस्यूतयेति । अपरिच्छिन्नयेत्यर्थ । ११६. धूमपीतेत्यादि । यथा धूमाग्न्योर्मध्ये वर्तमानो धूमेनाग्निना च सनद्धो भवति, तथा सूर्याचन्द्रमसोरन्तरा वर्तमान इत्यर्थ ।

## इति चत्वारिंशोऽध्यायः

---

[1] ब्रवीमि ते B
[2] रद्यमुद्दाल्य वा ताल B C
[3] य एव B C F
[4] तारिकामनुना A
[5] श्रीपञ्चरात्र A श्रीपाञ्चरात्रे B

## एकचत्वारिंशोऽध्यायः

शक्र —

नमो नित्यानवद्यायै जनन्यै सर्वदेहिनाम् ।
आधारेशात्मरूपायै शुद्धाशुद्धाखिलाध्वनाम् ॥ १ ॥

बाह्यान्तरविभागेन श्रुतो याग सविस्तर. ।
सम्प्रति श्रोतुमिच्छामि त्वत्तो दीक्षाविनिर्णयम् ॥२॥

श्री —

एको नारायण श्रीमान् षाड्गुण्यमहिमोज्ज्वल ।
तस्य षाड्गुण्यरूपाहं शक्तिरेका सनातनी ॥ ३ ॥

आत्मान विभजाम्येका पञ्चधा देवसंविदा ।
शब्दरूपार्थरूपाभ्या वृत्तिरूपेण वासव ॥ ४ ॥

तथैवाचार्यरूपेण दीक्षाख्येनापरेण तु ।
यद् द्यति क्लेशकर्मादीनीक्षयत्यखिल पदम् ॥ ५ ॥

क्षपयित्वा मल सर्वं ददाति च पर पदम् ।
दीक्षेति तेन तत्त्वज्ञैर्वर्ण्यते वेदपारगै ॥ ६ ॥

दीक्षा सा त्रिविधा तावत् स्थूलसूक्ष्मपरात्मना ।
पुनर्दीक्ष्यविभेदेन त्रिविधा सा चतुर्विधा ॥ ७ ॥

समयी पुत्रकश्चैव तृतीय साधकस्तथा ।
आचार्यश्चेति दीक्ष्यास्ते तेषामन्यत्र विस्तर ॥८॥

महामण्डलयागेन[1] हवनाद्वाथ केवलात् ।
वाचा केवलया वापि दीक्षैषा त्रिविधा पुन ॥९॥

वित्ताढ्यस्याल्पवित्तस्य द्रव्यहीनस्य च क्रमात् ।
आनीय दृढसकल्प चिरकालपरीक्षितम् ॥ १० ॥

आचार्य प्रणत शिष्य ससारानलतापितम् ।
नवाम्बुज विधायादौ तस्मिन् कुम्भ [2]समिज्य च ॥

[3]निर्णिक्तपाप्मन शिष्यान् प्रायश्चित्तै पृथग्विधै ।
सुस्नातान् धौतवस्त्राश्च पवित्रीकृतविग्रहान् ॥१२॥

आनीय भगवद्भक्तान् शुभा' कन्या' स्त्रियस्तथा ।
पञ्चगव्येन पूताश्च दन्तधावनपूर्वकम् ॥ १३ ॥

पुष्पाञ्जलिभृतश्चैव बद्धाक्षान्नववाससा ।
आपादमूर्धपर्यन्तमेकसूत्र प्रकल्पयेत् ॥ १४ ॥

त्रिगुण त्रिगुणग्रन्थींस्तत्सूत्रे तत्त्वसख्यया ।
कृत्वा मूर्धादिपादान्त भावयेत्तत्त्वपद्धतिम् ॥१५॥

ईशकालादिभूम्यन्त सप्तविंशतिसख्यया ।
तत्त्वानि ग्रन्थयो ज्ञेया ग्रन्थिस्थास्तु गुणास्त्रय ॥१६॥

मायाविद्याक्रियात्मानस्ते पाशा परिकीर्तिता ।
स्थूलसूक्ष्मात्मको देह शुभाशुभफलप्रद ॥ १७ ॥

५. दीक्षाशब्दनिर्वचन यदित्यादिना । द्यति खण्डयति । "दो अवखण्डने" इति धातु । ६. निर्वचनान्तर क्षपयित्वेति । ११. समिज्येति । संपूज्येत्यर्थ । १३. कन्या स्त्रियस्तथेति तासामपि तान्त्रिकदीक्षाधिकारमाह । १५. त्रिगुणेति । सत्त्वरजस्तमोमय-

[1] योगन B

[2] समीक्ष्य च F

[3] निर्णीत A. B C.

रञ्जितोऽयं गुणैश्चित्रैरशेषकलुषास्पदम् ।
संपातहोमकर्मान्ते देहं सूत्रमयं स्वयम ॥ १८ ॥

छित्वा छित्वा तु होतव्यं भोगनिर्मूलकारणम् ।
ललाटे चेश्वरं ध्यायेच्चिद्रूपं सर्वतोमुखम् ॥ १९ ॥

स्वबीजेन स्थितं ध्यात्वा जुहुयात्तत्त्वसंख्यया ।
सिन्दूरपुञ्जसंकाशं प्रधानं भ्रूयुगे स्मरेत् ॥ २० ॥

तालुमूर्ध्नि स्थितां बुद्धिं पूर्णेन्दुकिरणोपमाम् ।
तालुमध्ये त्वहंकारं कुसुमाभं विचिन्तयेत् ॥ २१ ॥

तालुकर्णान्तरे ध्यायेन्मनो [1]राजोपलद्युति ।
[2]कण्ठहृत्पद्मयोर्मध्ये विभक्ते पञ्चधा समे ॥ २२ ॥

प्रस्फुरत्तारकाकाराञ्छ्रोत्रादीन् पञ्च चिन्तयेत् ।
हन्नाभ्योः पञ्चधा मध्ये वागादीनि स्मरेत्तथा ॥ २३ ॥

स्मरेच्छब्दादितन्मात्रा नाभिवस्त्यग्रमध्यमे ।
ऊर्वोराचरणद्वन्द्वात् स्थूलभूतानि संस्मरेत् ॥ २४ ॥

स्वैः स्वैर्बिम्बैः समेतानि ताराकाराणि तान्यपि ।
उच्चार्य प्रणवं तत्र तत्तद्बीजं समुच्चरेत् ॥ २५ ॥

तत्त्वसंज्ञां ततः स्वाहा सपाताहुतिरीदृशी ।
गुरुः सपातहोमान्ते स्वयं लक्ष्मीमयो भवन् ॥ २६ ॥

पूर्णाहुतिं ततो दद्यात्तारया वौषडन्तया ।
एवं सपातहोमान्ते सूत्रं तद्ग्रन्थिमद् दृढम् ॥ २७ ॥

शरावसपुटान्तःस्थं विनिवेद्य मदन्ततः ।
आनीतस्याथ शिष्यस्य नेत्रबन्धं विघट्टयेत् ॥ २८ ॥

प्रदत्तपुस्तकं सम्यग्गुरुं स्वमभिवादयेत् ।
स शिष्योऽग्निसमीपस्थो जुहुयात्तारया धिया ॥

अङ्गैरुपाङ्गैर्लक्ष्म्यादिपरिवारैश्च सर्वशः[3] ।
अधिकारी भवत्येवं [4]जपेऽग्नौ श्रवणेऽर्चने ॥ ३० ॥

दीक्षायामध्वशुद्ध्यर्थं मूलाद्यैर्जुहुयात्ततः ।
तिलेन चापि जुहुयाच्छताद्यं तु दशावरम् ॥ ३१ ॥

पूर्णाहुतिं घृतेनैव तारयैव तु पातयेत् ।
एषा दीक्षा भवेन्मान्त्री सर्वमन्त्रनियोजनी ॥ ३२ ॥

एतावत्यधिकारे तु शिष्यान् भोगैकलम्पटान् ।
ग्राहयेदीप्सितान् मन्त्रान् प्रकृतिप्राकृतांस्तु वा ॥ ३३ ॥

[5]सिध्यन्ति संमुखा मन्त्राः सर्वे प्रकृतिसंभवाः ।
तत्त्वानि त्वस्य शोध्यानि वक्ष्यमाणप्रकारतः ॥ ३४ ॥

शुद्धतत्त्वाध्ववर्गस्य मन्त्रग्रहणमिष्यते ।
[6]एषा दीक्षा भवेन्मान्त्री तत्त्वदीक्षां निबोध मे ॥

ओं बीजं तत्त्वसंज्ञां च [7]शोधयस्वाभिधान्वयान् ।
आहुतीनां दशावृत्त्या सम्यग्ध्यानसमन्वयात् ॥ ३६ ॥

क्षित्यादिरीश्वरान्तः स्यात्तत्त्वग्रामो विशोधितः ।
होमादौ दीक्षणीयस्य संज्ञा योज्या यथार्थतः ॥ ३७ ॥

बद्धपद्मासने शिष्ये सद्गुरुः स्वसमीपगे ।
ध्यायेद्भूम्यन्तमीशाद्यं समग्रां तत्त्वपद्धतिम् ॥ ३८ ॥

निरीक्ष्य लक्ष्मीनेत्राभ्यां लक्ष्मीहस्तेन संस्पृशेत् ।
उपसंहृत्य भूम्याद्यामीशाद्यां तु पुनः सृजेत् ॥ ३९ ॥

ग्रन्थीनित्यर्थः । तत्त्वसंख्या सप्तविंशतिः । १८. सपातहोमः तत्त्वाहुतिः । १९. अन्यप्रभेदेन तत्त्वध्यानमाह—ललाट इति । २२. राजोपलं वज्रम् । ३९. गुरोर्लक्ष्मीमय-

[1] राजसद्युति B
[2] हृत्कण्ठ A
[3] सर्वत. B. F.
[4] जपे B. F.
[5] G. omits this line.
[6] B omits four lines from here.
[7] शुद्ध्या स्वाहया C.

इत्थ शिष्यतनुस्थाना तत्त्वाना जडरूपिणाम् ।
आनहत्याशु सबोध दीक्षा ध्यानमयी त्वियम् ॥४०॥

पाशसूत्रमथादाय शरावद्वयमध्यगम् ।
गत्वा कुण्डसमीप तु तदुत्सार्य निधाय च ॥४१॥

[1]तारया साङ्गया हुत्वा सहस्राय शतावरम् ।
पुष्पमेकमथादाय बहुशोऽप्यभिमन्त्र्य च ॥ ४२ ॥

हृदये ताडयेच्छिष्य तारया हुफडन्तया ।
शिष्य भूतत्त्वग स्मृत्वा तद्भोगान् भोजयेद्धिया ॥

समाप्ताखिलभूभोग तत उद्धृत्य योजयेत् ।
अप्तत्त्वे तत्र चाप्येव मत्वेशाद्विधिरीदृश ॥४४॥

तारया साङ्गया हुत्वा छित्वा ग्रन्थिं तु पार्थिवम् ।
निधाय स्रुचि सपूर्य सर्पिषा जुहुयात्तया ॥ ४५ ॥

तारिकाया परे भावे कुण्डस्थे ज्वलनेऽपि ।
अप्तत्त्वं क्रामयेत्सूक्ष्मं तदप्येव तु होमयेत् ॥४६॥

तत्सूक्ष्म क्रामयेद्वह्निं जुहुयात् पूर्णया च तत् ।
एवं क्रमेण हुत्वा तु पूर्णाहुतिपरपराम् ॥ ४७ ॥

प्रकृतिं पुरुष नीत्वा पुरुष चेश्वर नयेत् ।
ईश्वरात् परमं तत्त्व तत्त्वग्रामे न विद्यते ॥ ४८ ॥

स्थूलसूक्ष्मपराकारा शक्तिरीश्वररूपिणी ।
पुरुषो ईश्वरात्तत्त्वादधो यातो यतोऽशुचि ॥४९॥

प्राप्य तत् परम तत्त्वं शुचिरेव भवत्ययम् ।
विश्रामा विश्वतश्च युक्तो दीक्ष्यो भवत्ययम् ॥५०॥

भोगमोक्षप्रसिद्ध्यर्थं स्याता पूर्णाहुती तत ।
सकल निष्कल शिष्यं ध्यात्वा स्रुचि घृतं तथा ॥

इय तदर्पीघुर्नन यै परातीत स्थितो गुरु ।
ध्यायन् विज्ञानशब्दामा पश्य तीक्ष्णमुत्तमम् ॥

तारिकाया पर भावमनुच्छ्रायमनाहतम् ।
तेन शिष्य समीघुर्नेस्तारया वौषडन्तया ॥ ५३ ॥

पूर्णाहुत्याथ शिष्यस्य स्थितये देहपातनात् ।
नमोऽन्तया ध्रुवायेव तारया जुहुयाद्गुरु ॥ ५४ ॥

तत्र पूर्णाहुतिं दत्वा महापूर्णमथ क्षिपन् ।
शिष्य गुरु स्वमात्मान मा च लक्ष्मीं सनातनीम् ॥

क्षीरे क्षीरमिव ध्यायेत् सर्वं मयि समीकृतम् ।
एव लक्ष्मीमयीकृत्य शिष्य विज्ञानवायुना ॥५६॥

आकृष्य क्रमतो मन्त्रमिम सश्रावयेत् पुन ।
हृदये स्थापयित्वा मा तारामुपदिशेत्तत ॥ ५७ ॥

अङ्गोपाङ्गादिक सर्वं शास्त्रीय क्रममेव च ।
दिशेत् सामयिक धर्मं मन्त्रगुप्त्यादिक हि यत् ॥

विष्णुहस्त ततो दद्यान्मूर्ध्नि पृष्ठे हृदन्तरे ।
तदङ्ग मुद्रयालभ्य शिष्येणाराधयेत्तु[2] माम् ॥५९॥

तारया कुम्भमादाय यत्रेष्टं गुरुणा पुरा ।
अङ्गोपाङ्गादिसयुक्ता तारिका मनसा गृणन् ॥६०॥

अभिषिञ्चेद्गुरु शिष्य प्रसन्नेनान्तरात्मना ।
ल धरूपस्तत शिष्य ससाराम्बुधिपारग ॥६१॥

महता विभवेनाथ गुर्व्यार्गं समाचरेत् ।
कृत्वा त्वावारशस्त्यादि गुरुं तत्र निवेश्य च ॥६२॥

अर्घ्याद्यै पूजयेत् सर्वै स्वर्णरत्नादिभिस्तथा ।
आशिर्तं तर्पित पश्चान्मन्त्रेणानेन पूजयेत् ॥ ६३ ॥

अज्ञानगहनालोकसूर्यसोमाग्निमूर्तये ।
दुःखत्रयाग्निसंतापशान्तये गुरवे नम ॥ ६४ ॥

तस्य पूर्णमुक्तत्वान् तंत्रे लक्ष्मीतंत्रे इत्युच्येते । लक्ष्मीहस्तेन तारिकायुक्तहस्तेन ।

[1] B C. omit 11 lines from here

[2] धारयेत्तु B

गृहीत्वा तु ततोऽनुज्ञा मन्त्रमावर्तयेत्तत ।
साधयेच्च यथाकाम यावद्यावदभीप्सति[1] ॥ ६५ ॥
इति दीक्षाभिषेकौ ते वर्णितौ बलसूदन ॥
सम्यक्समाधिसपाद्य किं भूय श्रोतुमिच्छसि ॥६६॥

इति [2]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे दीक्षाभिषेकप्रकारो[3]
नामैकचत्वारिंशोऽध्याय

६५. इत पर काश्यपाद्यन्वयभवा एव परार्थयजनाधिकारिण इति प्रतिपादनपरो ग्रन्थो न सार्वत्रिको दृश्यते, किं तु आन्ध्राक्षरमुद्रितपुस्तक एव दृश्यते । स च कुण्डलित । अतो भागोऽय केश्चित् देवालयेषु स्वेषामेव परार्थयजनाधिकार स्थापयितुकामै सयोजित स्यादित्यनुमातुमवकाश । आचलिकानुष्ठानविरुद्धश्चाय भाग ।

इत्येकचत्वारिंशोऽध्यायः

---

[1] After verse 65 the Telugu printed edition has the following additional passages within brackets

शक—

पञ्चे त्वयोक्तदीक्षाया दीक्षिता ये मधुद्विष ।
पूजयामधिकारो हि तेषां वान्यस्य नेश्वरि ॥

श्री—

इन्द्रेद परमं गुह्य स्नेहात्ते कथयाम्यहम् ।
मेऽआर्ये दीक्षिता भूमौ सन्ति वर्णत्रयेषु च ॥
सर्वे तेऽनधिकारा हि परार्थयजने तथा ।
तेषां मध्ये महाभागा विष्णुपादार्पिताशया ॥
परमैकान्तिनो लोके मुनयोऽष्टौ शत हि ते ।
काश्यमाप्यदिनरिद पञ्चपञ्चपरा ॥
शरणागतिपर्मेश दयाम्यमनुतत्पर ।
वात्यायनमुनिमौकल्यकर्मकिंदभिता ॥

काश्यपो गौतमश्चाय भृगुराश्वलायनोऽङ्गिरा ।
इत्यादयो मुनिश्रेष्ठा परार्थयजने हरे ॥
साधिकारा भवन्त्यन्ये यजने नाधिकारिण ।
एते भक्ता मम हरे प्रिया भागवता इमे ॥
अन्ये भागवता नैव पूजायामनयोर्द्वयो ।
भक्त्या भागवताश्चान्ये यदा भगवतो हरे ॥
शुभक्ताश्चेतरे लोके प्रोक्ता भागवता इति ।
काश्यपादिमुनिश्रेष्ठगोत्रैर्हि पराचना ॥
कार्यां भागवतैरन्ये कृता यदि पराचना ।
मोहन राज्यराष्ट्रा यन्त्रदोषे भविष्यति ॥
तत्र समन्तदर्शन कार्यो भागवते सदा ।
काश्यपाद्यन्वयस्तो दीक्षितो यो निरन्तर ॥
स एवापने योग्य परना ब्रह्मविन्मतार ॥

[2] श्रीपञ्चरात्र A, श्रीपञ्चरात्रे B

[3] प्रकारो G

## द्विचत्वारिंशोऽध्यायः

शङ्क —

संसारसागरोत्तारपोतपादाम्बुजद्वये ।
हृषीकेशमहिष्यै ते भूयो भूयो नमो नमः ॥१॥

त्वत्प्रसादान्मया देवि श्रुतो दीक्षाविधिः क्रमात्[1] ।
तारिकाया यदा जस्थे पौरश्चरणिकीं क्रियाम् ॥२॥

श्री —

अहं नारायणी नाम शक्तिर्नारायणाश्रिता ।
तस्या मे परमा मूर्तिस्तारिका भुवनेश्वरी ॥३॥

तस्या मे पिण्डभूताया शृणु साधनसंपदम् ।
कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ॥४॥

स कालस्तारिकासिद्धौ तन्त्रज्ञैः संप्रदर्शितः ।
महापापैरसंस्पृष्टः प्रत्यातैरतिपातकैः ॥५॥

नास्तिक्यात्प्रच्युतो भावान्निन्दिताभ्यासवर्जितः ।
भूतेषु भावयन्मैत्रीं कृतपापानुतापवान् ॥६॥

उच्चावचानि पापानि प्रायश्चित्तैः शमं नयेत् ।
ब्रह्मचारी हविष्याशी सत्यवादी दृढव्रतः ॥७॥

संनिधौ मनसा विष्णोरोंकारं नियुतं जपेत् ।
महाव्याहृतिभिर्होमानयुतं सर्पिषाचरेत् ॥८॥

सावित्र्या च तिलैर्होमं तावत्संख्यं समाचरेत् ।
महापापातिपाप्मानौ विहाय प्रथितौ कृतौ ॥९॥

एतादृशं विधिं कृत्वा प्रणवादित्रयेण तु ।
महापापातिपापाद्यैरप्रकाशैर्विमुच्यते ॥१०॥

उपवासादिभिस्तद्वत् प्रकाशैरपि चेतरैः ।
तिस्रो वोपस्पृशेद्रात्रीरघमर्षणतत्त्ववित् ॥११॥

त्रिरह्नस्त्रिर्निशायाश्च सवासा जलमाविशेत् ।
प्रतिसंध्यं निमज्जंस्त्रिस्त्रिर्जपन्नघमर्षणम् ॥१२॥

प्रतिमज्जनमेव तु क्षपयेत्तत् त्रिरात्रकम् ।
चतुर्थेऽहनि वै दद्याद् ब्राह्मणाय पयस्विनीम् ॥१३॥

एवं पूतो भवेत् प्राग्वद्दशेपेणापि चांहसा ।
आत्मानमभिषिञ्चेद्वा त्रिसंध्यं पञ्चगव्यतः ॥१४॥

तिस्रो नीत्वा क्षपा एवं मुच्यते सर्वकिल्बिषैः ।
तारादिपञ्चकं तेषामेकैकमथवा[2] धिया ॥१५॥

जपन् पिबन् समीक्षेत वैष्णवं विमलोज्ज्वलम् ।
अहोरात्रकृतैरेव मुच्यते सर्वपातकैः ॥१६॥

भुवने यान्ति ये विष्णुमपापा धर्मतत्पराः ।
तत्पङ्क्तिस्थोऽपि वा भुक्त्वा मुच्यते सर्वपातकैः ॥

२. पुरश्चरणं नाम गुरूपदेशात् गृहीतस्य मन्त्रस्य स्वाभीष्टफलप्रदत्वसंपादनार्थं क्रियमाणो व्रतहोमादिः । ४. पिण्डभूताया इति । पिण्डमन्त्ररूपाया इत्यर्थः । ८. नियुतं दश लक्षाणि । अयुतं दश सहस्राणि । ९. प्रथितौ विहायेति । अप्रकाशकृतौ इत्यर्थः । ११. उपवासादिभिरित्यनेन प्रकाशकृतानां प्रायश्चित्तमुच्यते । १५ तारादिपञ्चकमिति । तारं व्याहृतीः सावित्रीं तारिकाम् अनुतारिकां चेत्यर्थः । १६. वैष्णवं समीक्षेतेति कृतस्य कर्मणः साद्गुण्यार्थमुक्तम् । १७ वैष्णवमहिमानमाह—भुवन इत्यादिना । विष्णु शरण्य-

[1] विधिक्रम B F

[2] अपि वा B F

यथार्थवागृजुर्नाम्मी धर्मसागरपारग ।
परस्य स्वस्य वाय हि विनियोग चिकीर्षति ॥४२॥

निग्रहेऽनुग्रहे वापि स स सिध्यति सर्वदा ।
शक्र —
नम सपूर्णपाड्गुण्यविग्रहायै हरिप्रिये ॥ ४३ ॥

अरविन्दगृहायै ते गोविन्दगृहमेधिनि ।
त्वन्मुखान्जाच्च्युता सिद्धिस्तारिकाया विशेषिणी ॥

स्थूलसूक्ष्मपराकारा यथावच्च प्रदर्शिता [1] ।
साधिताया विधानेन तारायास्त्रिविधात्मन ॥४५॥

विनियोगमिदानीं मे वक्तुमर्हसि पद्मजे ।
श्री —
एक पाड्गुण्यपूर्णात्मा हसो नारायणो वशी॥४६॥

हसी शक्तिरह तस्य वशिनी सर्वकामदा ।
हसो हसी च तारानामुदितौ तारिकात्मना ॥४७॥

तस्या अरमत्स्वरूपाया विनियोग निबोध मे ।
नानाविधेषु मन्त्रेषु बाह्यान्तरविभागत ॥ ४८ ॥

यावन्तो यादृशा ये च मन्त्रा सन्ति परावरा ।
तदीया विनियोगा ये यावन्त सन्ति यादृशा ॥

तावन्तस्तादृशास्तेऽस्या विनियोगा न सशय ।
तथापि विनियोगान्मे कांश्चिच्छक्र निशामय ॥

धर्मार्थकाममोक्षेषु सद्य प्रत्ययकारकान् ।
कृष्णाजिनोत्तरासङ्गा कृष्णाजिननिवासिनीम् ॥

कृष्णाजिनाम्बरा प्रस्तकृष्णशावगुखेक्षणाम् ।
पूर्णचन्द्रनिभा ध्यात्वा अक्षमुद्राक्षसूत्रिणीम् ॥

सरोरुहे दधाना चाप्यपरस्मिन् करद्वये ।
इत्थ मामम्बुजाक्ष या देवदेवं जनार्दनम् ॥ ५३ ॥

ध्यात्वा लक्ष जपेत्तारा धर्मं प्रत्यक्षतामियात् ।
विभुसख्यामितान्प्रस्थाञ्शालीना तण्डुलात्मनाम् ॥

सर्पिषस्तावत प्रस्थान् शर्करायाः पलानि च ।
गुडस्य वापि तावन्ति पाचयेदेकपात्रगान् ॥ ५५ ॥

पयसा तावता तुल्य विधिना सुशृत हवि ।
शुक्लप्रतिपद प्रातरुदितेऽर्धेन भास्करे ॥ ५६ ॥

एकाहुत्यैव जुहुयान्महापात्रस्थितं हवि ।
त्रिष्टुभा जातवेदस्या तारिकाद्यन्तरुद्धया ॥ ५७ ॥

महाकुण्डे महावह्नौ यन्त्रयोगेन बुद्धिमान् ।
अथ प्रात समारभ्य यावदस्तमयं रवे ॥ ५८ ॥

अविच्छिन्न [2]च जुहुयात् स्रुवेणैव गतक्लम ।
सर्पिषा सस्कृतेनैव तादृश्या त्रिष्टुभा सुधी ॥५९॥

प्रातरारभ्य शाल्यन्न पयोदध्याज्यसस्कृतम् ।
एकैक भोजयेद्विप्र प्रातरारभ्य सततम् ॥ ६० ॥

वाचयित्वा द्विजानन्ते तर्पयेद्वेदवित्तमान् ।
दपती वैष्णवौ चैव लक्ष्मीलक्ष्मीशसज्ञया ॥ ६१ ॥

य एवमाचरेद्धीरो व्यवसायसहायवान् ।
कोटिसख्यमनौपम्यमक्षय्यं लभते निधिम् ॥ ६२ ॥

इम शृणु महाश्चर्यं प्रयोग पाकशासन ।
तारामादाय पूर्वं तु योजयेत् सुभगेपदम् ॥ ६३ ॥

स्वाहा सयोजयेत् पश्चात्तारिकेयं षडक्षरा ।
उपोष्यैव[3] चतुर्दश्या पौर्णमास्यामुपक्रमेत् ॥ ६४ ॥

जपेद्दशसहस्र तामारामे शोभनद्रुमे ।
आसीनो मध्यत सम्यक्पूर्णकुम्भप्रदीपयो ॥६५॥

एकवारभोजनेन । ५७. जातवेदस्येति । "जातवेदसे सुनवाम सोमम्" इत्यादिकया ऋचा ।

[1] प्रकाशिता C.

[2] तु B C.

[3] एव B

ध्यायन्मा पद्मगर्भाभा पङ्कजद्वयधारिणीम् ।
द्विभुजामसितापाङ्गीं नीलकुञ्चितमूर्धजाम् ॥ ६६ ॥

स्मितपूर्णमुखीं रम्या पीनोन्नतपयोधराम् ।
सर्वाभरणसपूर्णां दुकूलोत्तमवासिनीम् ॥ ६७ ॥

सुशुभा सुभगामित्थ ध्यायञ्जपमथाचरेत् ।
तर्पयेज्जुहुयाच्चैव दशाश तारयानया ॥ ६८ ॥

वलिं दद्याच्च शाल्यन्न पयोघृतगुडान्वितम् ।
स्त्रियं ल्क्षणसपन्ना पूजिता भोजयेत्सुधी ॥ ६९ ॥

हविष्य स्वयमश्नीयाद्ब्रह्मचारी सदानिशि ।
एवमस्खलित कुर्यान् त्रिशद्रात्र व्रत त्विदम् ॥ ७० ॥

जपतर्पणहोमाद्यमविच्छिन्नमतन्द्रित ।
परस्या पौर्णमास्या तु व्रत कृत्वा समापयेत् ॥

व्रतान्ते सा समायाति सुभगा नाम मन्मयी ।
यक्षी किं करवाणीति साधक सा वदिष्यति ॥७२॥

मातर भगिनीं भार्यां सखीं वा ता प्रकल्पयेत् ।
मातृत्वेन प्रपन्ना सा सर्वापद्भ्योऽपि रक्षति ॥ ७३ ॥

भगिनीति प्रपन्ना सा सर्वानर्थान् ददाति च ।
प्रियेति स्वीकृता कामान् यावज्जीव ददाति च ॥

सखीव स्वीकृता सा तु सर्वां सप्रापयेद्दिशम् ।
मोक्षकामो जपेन्नित्य स्थूलसूक्ष्मपरात्मिकाम् ॥

पद तद्वैष्णव दिव्य प्रसन्ना प्रापयाम्यहम् ।
वक्ष्यन्ते विनियोगा ये परस्तात्परमन्त्रगा ॥ ७६ ॥

ते सर्वे तारिकाकार्या ये च मन्त्रान्तराश्रिता ।
पौरश्चरणिको मार्ग प्रोक्तस्ते विनियोगगान् ।
तस्या प्रत्ययसिद्ध्यर्थं सिद्धिमार्गं निबोध मे ॥७७॥

इति [1]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [2]तारामन्त्रोपासनक्रमो नाम
द्विचत्वारिंशोऽध्याय

७३. प्रकल्पयेत्, मन्वीतेत्यर्थ । ७६. तारिकोपासनस्य मोक्षफलत्वमप्याह—पद तदिति ।
७७. तस्या इति । तारिकाया इत्यर्थ ।

इति द्विचत्वारिंशोऽध्यायः

---

[1] श्रीपञ्चरात्र A , श्रीपाञ्चरात्रे B

[2] तारामन्त्रक्रमो B तारमन्त्रोपासनो F

# ✓ त्रिचत्वारिंशोऽध्यायः

श्री —

शृणु वक्ष्ये परां सिद्धिं नानायोगसमुत्थिताम् ।
निशाया पिण्डभूतायास्तारिकाया सुरेश्वर ॥ १ ॥

युञ्जीत विधिवद्योगी तारिका देहगोचरे ।
नासिकाग्रे च जिह्वाग्रे जिह्वाया मध्यमूलयो ॥२॥

कण्ठोरसोरुरोऽन्ते च धारयेत्तत्त्वपद्धतिम् ।
[1]क्षित्याद्या बुद्धिपर्यन्ता स्वस्वकार्यस्वभाववत् ॥

तत्त्वात्तत्त्वान्तर यास्यन् सख्यया सख्यया जपेत् ।
द्विश्वतु षट् तथाष्टौ च दशषोडशवारकम् ॥ ४ ॥

चतुर्विंशतिवार[2] च बुद्ध्यन्ते प्रकृति स्मरेत् ।
अशीतिं सस्मरेत्तारा तत्र जीवं विचिन्तयेत् ॥

यावान् यत्क च यश्चाय शत तत्राचरेज्जपम् ।
अव्यक्तचेतनाधार पुष्कर तदध स्मरेत् ॥ ६ ॥

तत्त्वाग्रवयनाधारमनन्त तत्त्ववाहकम् ।
पद्माकार विचिन्त्यैतज्जपेत्सार्ध शत सुधी ॥ ७ ॥

ततस्तन्नाभिमव्यक्तनाम्नीनाभ्रतालमरम् ।
सं यत्तु[3] तत्र धाम्नस्ततमोऽन्त सुषिरूपरम् ॥८॥

यस्त्वन्तश्चेतन सोऽयमिति तत्त्रितयात्मकम् ।
चिन्तयित्वा यथावत्तदाचरेद् द्विशत जपम् ॥ ९ ॥

नालादधोऽनिरुद्धाख्यशक्ति[4] मा भगवन्मयीम् ।
सस्मरन् रूपकालाद्यैराचरेत्तु शत जपम् ॥ १० ॥

प्रद्युम्नशक्तिं तदधो जपसख्या च तादृशी ।
अधः साकर्षिणीं शक्तिं जपसख्या च तादृशी ॥

सर्वाधो वासुदेवाख्य[5] दापत्य स्थूलरूपकम् ।
तत सूक्ष्म पर तस्मात् परातीतं तु सर्वत ॥१२॥

लक्ष्मीनारायणाभासमनिर्देश्यमनौपमम् ।
सर्वत शक्तिशक्तीशस्पन्दमानमनाविलम् ॥ १३ ॥

प्राप्य योगमयीं निद्रा निद्रामेव समाविशेत् ।
उत्थायापररात्रे तु द्वादशैतास्तु धारयेत् ॥ १४ ॥

वासुदेवादिभूम्यन्तं तत्सख्यानविधिक्रमात् ।
हृदि वा धारयेदेता समस्ता अपि धारणा ॥१५॥

धारणा द्वादशैनेतास्तारिकायामथापि वा ।
एष सर्वहितो योगो यत्तत्त्वैस्तत्र भूयते ॥ १६ ॥

प्रतिसन्त्य वा सर्वं व्यक्ताव्यक्तमय पदम् ।
निरालम्ब मन कृत्वा शून्यभाव समाविशेत् ॥

शून्याकारसमाकार सपूर्णमिव वारिधिम् ।
आविशामि महायोग शून्यभावनिवेशितम् ॥१८॥

३. बुद्धिर्महत्तत्त्वम् । ४. तत्त्वादित्यादि । पृथिवीतत्त्वात् अवत्त्वगमने इत्यादि- रीयेन्यर्थ । १५. द्वादशेति । वासुदेवादिचतुष्कनवप्रहनिबुद्धिभूतानीनि द्वादश धारणा । १७. कल्पान्तरमाह—प्रतिगहत्येति । सर्वाण्यपि तत्त्वानि स्वस्वकारणेषु प्रविलाप्य मनो निर्विषय कुर्वन् । निर्विषये मनसि य परमानन्दानुभव स एव परमो योग

[1] B omits this line.
[2] वार्द्ध C
[3] यत्र B
[4] अनिरुद्धाख्य शक्ति C. G
[5] वासुदेवाख्य C.

यदा स्तिमितनि शब्दनीरदानन्दसंनिभम ।
योगी भवति युञ्जान स योगी मत्प्रिय सदा ॥१९॥

यत्र ध्येयमनवच्छिन्न [1]नैव किंचन विद्यते ।
अज्ञेयमनवच्छिन्न तद्रूप मद्वपु स्फुटम् ॥ २० ॥

आत्मसात्कुरुते योगी ज्ञेय सकलमक्रमम् ।
वितता सा महाज्वाला निस्तरङ्गा तनुर्मम ॥ २१ ॥

हूयन्ते मनसा यत्र भूतानि भुवनानि च ।
सर्वभावस्तदा शश्वद्भावो मे प्रविजृम्भते ॥ २२ ॥

स्रुचा च मनसा हुत्वा भूताक्षभुवनादिकम् ।
ता च स्रुच प्रहुत्याथ योगिना भूयते मया ॥२३॥

यदवच्छिद्यते येन तत्तु तस्मान्महत्तरम् ।
धियावच्छिद्यते सर्वं यद्यदस्ति च नास्ति च ॥२४॥

सा नावच्छिद्यतेऽन्येन तनु सा मे निरञ्जना ।
धियो नैतौ बहिर्भूतावभावो भाव एव वा ॥ २५ ॥

अनालीढौ धिया न स्त सा मे तनुरनञ्जना ।
यद्वातिक्रम्य मर्यादा जलधि प्लावयेज्जगत् ॥२६॥

तदा न स्थलनिम्ने स्तस्तथा मय्यखिल जगत् ।
नेदमल्पात्मना शक्यमास्थातु परम पदम् ॥ २७ ॥

कुर्याद्विच्छिद्य विच्छिद्य योगमेतदवाप्तये ।
भावे भावे शुभेऽन्यत्र भूते भवति भाविनि ॥२८॥

स्मरेत सारतर रूप परमं पारमेश्वरम ।
सम्भरन्ति प्रसूनेषु मधु सर्वेषु षट्पदा ॥ २९ ॥

सम्भरन्ति तथैका मा सर्वभावेषु योगिन ।
यत्र यत्र मनो याति लक्ष्मीं तत्रैव चिन्तयेत् ॥३०॥

चलित्वा तत् कुतो याति सर्वं तन्मन्मय हि यत् ।
तत्त्वाना पद्धतिं माला मत्सूत्रग्रथिता स्मरेत् ॥

मयि वा भित्तिभूताया चित्रवत् संस्मरेज्जगत् ।
स्तिमितापारगम्भीरे फेनपिण्ड यथाम्बुधौ ॥३२॥

स्मरेत् क्रमोत्क्रमाभ्या वा प्रमात्रादिचतुष्टयम् ।
प्रभवन्तीं मदाकारादपि[2] यान्तीं च ता पुन ॥३३॥

पुमानाद्यो मदुन्मेष स मत्सकल्पकल्पित ।
अन्त करणसज्ञोऽन्यो मदुन्मेषोऽधरावनौ ॥ ३४ ॥

बहिष्करणरूपोऽन्यस्तृतीयस्तदध क्षितौ ।
भावरूप प्रमेयात्मा तुर्योऽयमधराधर ॥ ३५ ॥

मत्सकल्पवशेनैव सदानन्दचिदात्मिकाम् ।
भावयन्निश शश्वन् क्रमव्युत्क्रमतो धिया ॥ ३६ ॥

इमा चतुष्टयीं हित्वा मज्ज्ञान प्रतिपद्यते ।
विज्ञानाधारभूतेषु द्वात्रिंशत्यम्बुजेषु वा ॥ ३७ ॥

ध्यायेद्दीपशिखाभा मामथवा रूपसुन्दरीम् ।
आधारपद्मादारभ्य नाभिपद्मादधो भुवि ॥ ३८ ॥

इति । २० अनवच्छिन्न परिमितम् । २२. सर्वभाव निश्वात्मना वर्तमानता । भाव सत्ता । २३. मया भूयते ; मदात्मना भूयत इति भावे प्रयोग । २४. देव्या ज्ञानस्वरूपत्वमुच्यते—यदवच्छिद्यत इत्यादिना । २६. योगपरिपाकदशाया सर्वमपि जगत् धीरूपमेवावभासत इत्यत्र लौकिक निदर्शनमाह—यद्वातिक्रम्येति । २९. सर्वभावाना स्वात्मना भाव्यत्वे निदर्शनमाह—सम्भरन्तीति । ३३. चतुष्टयमिति । प्रमाता, प्रमाकरणम्, प्रमेयम्, प्रमितिरिति चतुष्टयमित्यर्थ । प्रभवन्तीमिति तत्त्वाना पद्धतिमित्यनेनान्वेति । ३७–४६. द्वात्रिंशति

[1] B omits this and the next quarters

[2] मदाकारामपि G

षट् पद्मा योगिना चिन्त्यास्तेषा नामानि मे शृणु।
व्युच्छन्ती व्युषिता व्युष्टा व्युपुषी व्योषुपी रमा॥

नाभिपद्माद्धृदम्भोजात् पञ्च पद्मान् प्रचक्षते।
पश्यन्ती नाभिपद्माख्या पश्या पश्येतरात्मिका॥

दृश्या च दृश्यमाना च हृदयं पङ्कजाह्वया।
हृत्कण्ठान्तरमध्याच्च पञ्चपद्माह्वयाञ्शृणु॥ ४१॥

बोधयन्ती च बोद्ध्री च बुध्यमाना तथेतरा।
घोषोन्मेषा च सञ्ज्ञा स्यु कण्ठहृन्मध्यपद्मगा॥

कण्ठताल्वन्तराम्भोजपञ्चकाख्या इमा शृणु।
घोषयन्ती च घुष्यन्ती घुष्टा[1] घोषा तथेतरा॥४३॥

तालुभ्रूमध्यदेशस्था पञ्चपद्माह्वया इमे।
ग्राहयन्ती च गृह्णाना जिघृक्षा च गृहीतिका॥४४॥

निर्णीतिरिति तालुभ्रूमध्याम्भोजगणाभिधा।
भ्रूमूर्धमध्यपद्माना पण्णामाख्या इमा शृणु॥४५॥

प्राणयन्ती प्राणती च प्राणा प्राणावबोधिनी।
परा बोधेति ता एता भ्रूमध्यान्त स्थपद्मगा॥४६॥

रत्नदीपशिखाभेषु भावयेन्मा क्रमोत्क्रमात्।
गृणन्मा तारिका दीर्घा दीर्घघण्टानदोपमाम्॥४७॥

इत्थ मा चिन्तयन् योगी सुरूपा वापि ससरन्।
विहाय सकल क्लेश मद्भाव प्रतिपद्यते॥ ४८॥

लक्षयेद्वापि पद्मेषु नवस्वेषु क्रमोत्क्रमात्।
आधारे त्रीणि पद्मानि हृदयाधोऽम्बुजत्रयम्॥४९॥

मूर्ध्नोऽधस्त्रीणि पद्मानि नवपद्मविधिक्रम।
द्वादशस्वथवाब्जेषु मूर्धाग्रेषु द्विके द्विके॥ ५०॥

षट्सु वा प्रथमाब्जेषु त्रिषु वा मूलहृद्भुवि।
भ्रूमध्ये चिन्तयेद्वापि तारिका तारनादिनीम्॥५१॥

तद्बिन्दु चिन्तयेत् पूर्वं मुद्गमात्र सुभास्वरम्।
तत सर्षपमात्र तु [2]ततश्चित्रमनाकृतिम्॥ ५२॥

यो यो वा गृह्यते भावो घटकुड्यादिरूपवान्।
चिन्तयेत्तत्र तत्त्वानि यानि यावन्ति शाश्वत॥५३॥

मन्मयीकृत्य तत्रैतान्यहभावनया स्मरेत्।
हेतुमद्धेतुभूतानि लोके वस्तूनि यानि वा॥५४॥

आश्रिताश्रयरूपाणि यानि स्वच्छघनानि वा।
भावतद्वत्स्वरूपाणि शुभाशुभमयानि च॥ ५५॥

प्रसवाप्रसवात्मानि गुणगुण्याकृतीनि वा।
आधाराधेयभूतानि शक्तितद्वन्मयानि वा॥ ५६॥

भोग्यभोक्तृस्वरूपाणि नारीनरमयानि वा।
क्रियाकर्तृस्वरूपाणि ह्युपायोपेयकानि वा॥ ५७॥

स्त्रीपुम्प्रत्ययरूपाणि शब्दरूपाणि यानि वा।
द्वन्द्वभूतानि वस्तूनि लोकेऽस्मिन् यानि कानिचित्॥

तानि योगी धिया पश्येल्लक्ष्मीनारायणात्मना।
तन्त्रस्य परम गुह्य व्रत शृणु पुरदर॥ ५९॥

योगिना यदनुष्ठेय लक्ष्मीयोगविधिक्रमे।
प्रवर्तमानया पूर्वमादिदेवाज्जगद्विधौ॥ ६०॥

आत्त सीमन्तिनीरूप मया साभिनिवेशया।
चिकीर्षुर्मत्प्रिय[3] योगी लक्ष्मीतन्त्रविचक्षण॥६१॥

न स्मरेत् कामिनीनिन्दा कर्मणा मनसा गिरा।
यत्राह तत्र तत्त्वानि यत्राह तत्र देवता॥ ६२॥ ✓

अम्बुजेष्विति पदच्छेद। द्वात्रिंशदम्बुजानि निर्दिशति—आधारेति। व्युच्छन्त्यादीनि षट्। पश्यन्त्यादीनि पञ्च। बोधयन्त्यादीनि पञ्च। घोषयन्त्यादीनि पञ्च। ग्राहयन्त्यादीनि पञ्च।

[1] पुष्यन्ती पुष्टा B

[2] ततश्चित्त A B

[3] प्रियान् B C

यत्राहं तत्र पुण्यानि यत्राहं तत्र केशवः ।
वनितायामहं तस्मान्नारी सर्वजगन्मयी ॥ ६३ ॥

योऽभिनिन्दति तां नारीं स लक्ष्मीमभिनिन्दति ।
योऽभिनन्दति तां लक्ष्मीं त्रैलोक्यमभिनन्दति ॥

यो द्वेष्टि वनितां कांचित् स द्वेष्टि हरिवल्लभाम् ।
यो हरेर्वल्लभां द्वेष्टि स द्वेष्टि सकलं जगत् ॥ ६५ ॥

ज्योत्स्नामिव स्त्रियं दृष्ट्वा यस्य चित्तं प्रसीदति ।
नापध्यायति यत्किंचित् स मे प्रियतमो मतः ॥६६॥

यथा नारायणे नास्ति मयि वा शक्र किल्बिषम् ।
यथा गवि यथा विप्रे यथा वेदान्तवेदिनि ॥६७॥

वनितायां तथा शक्र दुरितं नैव विद्यते ।
[1]अकल्मषा यथा गङ्गा यथा पुण्या सरस्वती ॥

अरुणा ह्यापगा यद्वत्तथा सीमन्तिनी वरा ।
यदस्मि जननी नाम त्रयाणां जगतामहम् ॥६९॥

तदिदं नार्यवष्टम्भात् सा हि मे परमं बलम् ।
त्रैलोक्यजननी देवी सर्वकामसमृद्धिनी ॥ ७० ॥

मत्तनुर्वनिता साक्षाद्योगी तस्मात्तु पूजयेत् ।
न कुर्याद् वृजिनं नार्याः कुवृत्तं न स्मरेत् स्त्रियाः ॥

ऋते पापात् प्रियं नार्याः कार्यं योगमभीप्सता ।
जननीमिव तां पश्येद्देवतामिव मामिव ॥ ७२ ॥

यो द्वेष्टि वनितां मोहात्तत्माहात्म्यं न चाचरेत् ।
इदं च शृणु देवेश यद्वक्ष्यामि प्रियोऽसि मे ॥

श्रुत्वा त्वयाप्यनुष्ठेयं नैव वाच्यं हि कस्यचित् ।
या रूपिणी वरारोहा काचिद् दृष्टिपथं गता ॥

तस्यां मां भावयेद्योगी तादृशं मनसा गृणन् ।
अलोलुपेन चित्तेन तस्या रूपमनुस्मरेत् ॥ ७५ ॥

प्राणं सूर्यं पदस्थाने नाडीहृदयपूरणम् ।
संस्मरेदनलं तत्र रूपलावण्यसंपदम् ॥ ७६ ॥

अशेषसंपदोपेतां तां नारीं मामनुस्मरेत् ।
अनुस्मृत्य गृणन् ब्रह्म भावयेदेव मां धिया ॥

ततः समाधिसंपत्तौ तत्राविष्टा भवाम्यहम् ।
स्तब्धसर्वाङ्गविस्रंसो मदावेशस्य लक्षणम् ॥७८॥

अलोलुपेन चित्तेन मां समाराध्य यत्नतः ।
विरमेदेव युञ्जानः पाप्मानं परिवर्जयन् ॥ ७९ ॥

एतत्तु परदारेषु नैव कार्यं विजानता ।
अयं समाधिर्यत्रासीत् सानुरज्यति तद् ध्रुवम् ॥

स्वस्त्रियामेव कुर्वीत साधारण्यामथापि वा ।
विप्लवोऽपि न दोषोऽत्र यतो मद्भावभावना ॥

संस्पर्शजेषु भोगेषु यः संहर्षमहोदयः ।
मद्रूपं तदनुध्यायेदविक्षिप्तेन चेतसा ॥ ८२ ॥

प्रशस्तविषयोत्थं यत् सुखं लेहनमन्थनात् ।
स्मरतस्तत्प्रहर्षो यस्तद्भावमनुशीलयेत् ॥ ८३ ॥

चक्षुषा विषये दृष्टे या प्रीतिरुपजायते ।
रसिते च श्रुते घ्राते सा मे सुखमयी तनुः ॥८४॥

यदृच्छोपनतेष्वेवं शब्दस्पर्शरसादिषु ।
उपपत्तिरियं प्रोक्ता चेतो दमयतो यतेः ॥ ८५ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आदिमन्तोऽन्तवन्तश्च न तेषु रमयेन्मनः ॥

निरस्तरजसा ध्वस्ततमसा सत्त्ववर्तिना ।
यदन्तःकरणेनान्तर्व्यज्यते सुखमुत्तमम् ॥ ८७ ॥

आनन्तविधुरं तन्मे सुखं ज्ञानमयं वपुः ।
तत्त्वादृग्व्यज्यते नैव संस्पर्शैर्विषयाश्रितैः ॥ ८८ ॥

अनुभवन्ति यद् दुःखं विषयाः सुखवाहिनः ।
मध्यन्तर्विषमग्रस्तं मधुरं यदि भक्षते ॥ ८९ ॥

किं तेनानन्तरं यत्तद्वपासादयति भक्षिणम् ।
कुन्दस्य फणिनश्छायां यः श्रयेत्तन्निमर्दितः ॥९०॥

[1] निष्कल्मषा C.

स सेवेत नरो भोगान् सुखाय स्पर्शसंभवान् ।
साध्यान् दुःखव्ययायासैः सुदर्शान् दुःखमिश्रितान् ॥

तनीयसः क्षयिष्णूंश्च कः श्रयेद्विषयान् सुखी ।
जप्यपूतमिताहारदिव्यसत्त्वतनूर्व्रती ॥ ९२ ॥

रजस्तमोगुणौ क्षिण्वन् मत्प्रियाचारकर्मणा ।
योगी समाधये शश्वद्यत्नेन दमयेन्मनः ॥ ९३ ॥

जिते मनसि वै शश्वद्विश्वं तेन विजीयते ।
जिते मनसि शुद्धा मे तनुरभ्युपैति स्वयम् ॥

शक्र —

समस्तचिदचिद्वेदतन्त्रयन्त्रविधायिनि ।
विधात्रि सर्वभोगानां नमस्ते पङ्कजासने ॥ ९५ ॥

विषयप्रवणं शश्वच्चपलं बलवद् दृढम् ।
आशु दूरगमव्यक्तं दम्यते केन तन्मनः ॥ ९६ ॥

श्री —

दुर्दमं दुर्धरं शक्र शृणु दुर्वोधमुत्क्रमम् ।
वैराग्याभ्यासनिग्राह्यं तन्मनः शक्र चञ्चलम् ॥

रागस्तु विषये रक्तिः स्वभावाभ्यासयोगजा ।
तदभावश्च वैराग्यं तत्त्वज्ञानेन जन्यते ॥ ९८ ॥

दौरात्म्यं विषयाणां यत्तत्त्वज्ञानं तु तन्मतिः ।
चतुर्धा लक्षयेत्तच्च दौरात्म्यं प्रज्ञया सुधीः ॥ ९९ ॥

यो यादृशो यतो यस्मै भावोऽयमिति चिन्तयेत् ।
विषया बन्धनात्मानो विषिण्वन्ति स्वसेविन[1] ॥

अव्यक्तादुत्पत्तिमापन्ना सर्वे ते सुखदुःखयोः ।
ते च नैव स्वसंसिद्धा विषया विषयैषिणाम् ॥

अनेकान्तव्ययायासदुःखसाधनजा हि ते ।
सुखमेव न ते कुर्युर्दुःखं च सुवते हि ते ॥ १०२ ॥

सुखं च तत्क्षणध्वंसि स्वदशादुःखसंमितम् ।
चित्ररूपमिदं चिन्त्यं भावे भावे विपश्चिता ॥

तत्त्वज्ञानमिदं प्रोक्तं संगृह्य च निगृह्य च ।
विषयेषु च रागस्तु सुखहेतुत्वनिश्चयात् ॥ १०४ ॥

स मिथ्याज्ञानरूपत्वात्तत्त्वज्ञानैरपोह्यते ।
तद्विनिश्चयबाधे च हेतुत्वं नैव सिध्यति ॥ १०५ ॥

अहेतून् विषयान् कश्चिन्नाददीत स्वसिद्धये ।
यदिदं तत्त्वविज्ञानं तस्य [4]यच्छीलनं मुहुः ॥ १०६ ॥

सोऽभ्यास इति तत्त्वज्ञैस्तत्त्वशास्त्रेषु शब्द्यते ।
सूक्ष्मे महत्यणौ स्थूले स्थिरे च चलवस्तुनि ॥ १०७ ॥

यत्र तिष्ठति यच्चित्तं धार्यतेऽभ्यास एषु वै[3] ।
वैराग्याभ्यासयोगेन यतमानेन योगिना ॥ १०८ ॥

दम्यते मन उद्दामं ततः शाम्यति तद् ध्रुवम् ।

शक्र —

तत्त्वारविन्दसंदोहविहारचतुरक्रमे ॥ १०९ ॥

मधुजिन्मानसावासे नमस्ते पङ्कजासने[1] ।
अभ्यासेन यथा चित्तं दम्यते बलवद् दृढम् ॥

तं प्रदर्शय पन्थानं नमस्ते पद्मसंभवे ।

श्री —

वियत्यूर्ध्वं तनूभूते जवान् पतति पत्रिणि ॥ १११ ॥

अनुवत्या तथा सूक्ष्मे शनैश्चित्तं निरोधयेत् ।
शैले महति वा चित्तमनन्ते वा विभावयेत् ॥

भगवन्त्यादीनि पद् । १००. विषिण्वन्ति, बध्नन्तीत्यर्थः । "षिञ् बन्धने" इति धातुः ।
१११-११७. प्रथमं वस्तूनि यथा सर्वान्ते तथैव तेषु चित्तं निवेश्य, क्रमेण ततो वैराग्यमपाद्य, पश्चात् तत्त्वानुसंधाने तन्निवेशनीयमिति इममर्थं सदृष्टान्तमाह—वियतीत्या-

[1] नम् A [2] यदिन्न C. [3] एव वा A G [4] पद्मजाते C

परिभ्रमति वा चक्रे यत् सूक्ष्ममणु विद्यते ।
मनस्तत्रैव संयोज्य भ्रामयेद्भ्रमता समम् ॥ ११३ ॥

तथाश्वत्थदलाग्रेण चलता चालयेन्मनः ।
तिष्ठति स्थापयेच्चित्तं गच्छता गमयेन्मनः ॥११४॥

प्रदर्शनार्थमुक्तस्ते प्रकारोऽयं पुरंदर ।
अनेन दमयंश्चित्तं परं योगमवाप्स्यति ॥ ११५ ॥

ईशेशितव्यसंभेदं यत्पुंरूपं परावरम् ।
सूर्यरथं संस्मरेत्तत्तु स्त्रीरूपं पञ्चबिन्दुकम् ॥ ११६ ॥

इति ते तारिकारूपं सर्वतः सौम्य दर्शितम् ।
इत्थं विज्ञाततत्त्वस्य ज्ञेयं नैवान्यदिष्यते ॥ ११७ ॥

इतीयं पिण्डसिद्धिस्ते लेशतः शक्र दर्शिता ।
संज्ञामूर्तिविधानं च साधनं चाथ मे शृणु ॥११८॥ ✓

इति [1]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे नानायोगप्रकाशो नाम
त्रिचत्वारिंशोऽध्यायः

दिना । तनूभूत इति । दूरदेशोत्प्लवनेनाल्पपरिमाणतया ह्रस्व इत्यर्थः । ११३. एवं चक्रादि-दृष्टान्तेऽपि ।

## इति त्रिचत्वारिंशोऽध्यायः

---

[1] श्रीतन्त्रगत A. ; श्रीतन्त्रपत्रे B.

# चतुश्चत्वारिंशोऽध्यायः

शक्र —

नमस्ते चिदचिद्वर्गसरक्षणविचक्षणे ।
जगद्विधानशिल्पिन्यै विष्णुपत्न्यै नमोऽस्तु त ॥ १ ॥

स्थूलसूक्ष्मपरात्मानो भेदा पूर्वं प्रदर्शिता[1] ।
ताराया बीजपिण्डादिभेद दर्शय मेऽम्बुजे ॥ २ ॥

श्री —

एको नारायण श्रीमान् पूर्णषाड्गुण्यविग्रह ।
एकाह परमा तस्य शक्ति षाड्गुण्यविग्रहा ॥ ३ ॥

लोकाननुजिघृक्षन्ती शश्वज्ज्ञानक्रियात्मना ।
साह तारिक्या तन्वा पोषयामि पुनामि च ॥ ४ ॥

तस्या परादिभावस्ते शक्र पूर्वं निदर्शित[2] ।
बीजपिण्डादिकान् भेदान् गदन्त्या मे निशामय ॥

या परा दर्शिता पूर्वं यादृशी सा त्रिधात्मना ।
साहता तादृशी शक्र तारिकाबीजमुच्यते ॥ ६ ॥

सूर्यानलस्थिता विष्णुपिण्डव्योमेशशेखरा ।
पौरश्चरणिको योगस्तस्या सिद्धिश्च दर्शिता ॥ ७ ॥

सझाख्या तारिकाया हि योगिभि शक्र सेव्यते ।
तामद्यावदधानस्त्व गदन्त्या मे निशामय ॥ ८ ॥

शुद्धमेरुमुपादाय स्वाहया शक्र योजयेत् ।
अयं सझामनुर्योगिदेवब्रह्मादिपूजित[3] ॥ ९ ॥

योगिभिर्यतमानैर्वा मया नारायणेन वा ।
शक्य प्रभाव आख्यातु सझायास्त्रिदशेश्वर ॥१०॥

शुभानुबन्धमात्र तु सझेष्ट परमक्षरम् ।
पिण्डितास्य इत्रास्याश्च सिद्धय साधनानि च ॥

स्मरन् सततमभ्यासात्तन्मयीकृतविग्रह ।
योगी मन्मयता प्राप्य मद्भाव प्रतिपद्यते ॥ १२ ॥

अह वा बोधिता तेन साक्षात्कारमुपेयुषी ।
विदधे सकल काम[4] स योगी य यमिच्छति ॥१३॥

इति सझामनु शक्र लेशत सम्प्रदर्शित ।
पदमन्त्रमिदानीं मे शृणु त्व सर्वसाधकम् ॥ १४ ॥

विभज्य नायमुद्धार्यो न च लेख्यस्तथापि च ।
अविप्लवाय रूपस्य स्वरूपमुपदिश्यते ॥ १५ ॥

ओं ३, ह्रीं ३, [5]श्रीं ३, ओं, आ ३, ह्रीं ३, हस
३, ओं ह्रीं श्रीं नमो विष्णवे । ओं[6] ह्रीं श्रीं नमो
नारायणाय । ओं ह्रीं श्रीं नमो भगवते वासुदेवाय ।
ओं ह्रीं श्रीं,

[7]जित ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥

ओं ह्रीं श्रीं भगवन् विष्णो नारायण वासुदेव
पुण्डरीकाक्ष लक्ष्मीपते पुरुषोत्तम जगदादे जगन्मध्य

७. ह्रीं इति बीजमन्त्र । ९. शुद्ध, बीजमित्यर्थ । ११. शुभ शकार ।

[1] निदर्शिता B C F  [2] निशामित C F  [3] ब्रह्मादिपूजित A C  [4] सकलान् कामान् C.
[5] ह्रीं ३, हस ३, ओं नमो विष्णवे B  I omits श्रीं ३, ओं आ ३  [6] श्रीं ह्रृ F
[7] जित ते पुण्डरीकाक्ष महापुरुषपूर्वज । नमस्तेऽस्तु हृषीकेश नमस्त विश्वभावन ॥ I

जगन्निधन श्रीनिवास भगवन्तमभिगच्छामि। भगवन्तं प्रपद्ये। भगवन्तं गतोऽस्मि। भगवन्तमभ्यर्थये। भगवदनुध्यातोऽहम्। भगवत्परिकरभूतोऽहम्। भगवदनुज्ञातोऽहम्। भगवति सृष्टोऽहम्। भगवत्प्रसादात् भगवन्मयीं भगवतीं तारिकामयीं लक्ष्मीं पदैरावर्तयिष्यामि। तद्यथा—ओं श्रीं ह्रीं गुरुभ्यो गुरुपत्नीभ्यः। ओं श्रीं ह्रीं परमगुरुभ्यः परमगुरुपत्नीभ्यः। ओं [1]ह्रीं श्रीं परमेष्ठिने परमेष्ठिन्यै। ओं ह्रीं श्रीं पूर्वसिद्धेभ्यः पूर्वसिद्धाभ्यः। ओं ह्रीं श्रीं लक्ष्मीयोगिभ्यो लक्ष्मीयोगिनीभ्यो नमो नमः।

ओं ह्रीं श्रीं ईं नमः संसिद्धिसमृद्ध्यादिप्रदायै परमैकरस्यायै परमहंसि समस्तजनवाङ्मनसस्वास्मातिवर्तिन्यै निरारम्भस्तिमितनिरञ्जनपरमानन्दसंदोहमहार्णवस्वरूपे परपरायै विष्णुविष्णुपत्न्यै विविष्णु ईं स्वाहा।

ओं ह्रीं श्रीं ईं[2] नमो निरन्तरप्रथमानप्रथमसामरस्यायै स्वस्वातन्त्र्यसमुन्मिषितनिमिषोन्मेषपरंपरारम्भे स्वच्छन्दस्पन्दमानविज्ञानवारिधये परसूक्ष्मायै विष्णुपत्न्यै मायायै ईं स्वाहा।

ओं श्रीं ह्रीं श्रीं ईं नमः स्वसंकल्पबलसमुन्मीलितभगवद्व्यापिभावस्वभावे स्वेच्छावेशविजृम्भमाणसत्ताविभूतिमूर्तिनारचतुरगुणग्रामयुगत्रिकमहोर्मिजालायै विष्णुपत्न्यै पञ्चबिन्दवे ईं[2] स्वाहा।

ओं ह्रीं श्रीं हिं हिं हिं[3] नमो नित्योदितमहानन्दपरमसुन्दरभगवद्विग्रहप्रकाशे विविधसिद्धाङ्गनास्पदे षाड्गुण्यप्रसरप्रवरप्रसरत्स्वरूपपरमव्योमप्रभावे[4] विचित्रानन्दनिर्मलसुन्दरभोगजालप्रकारपरिणामप्रवीणस्वभावायै परमसूक्ष्मस्थूलरूपसूक्ष्मायै[5] विष्णुपत्न्यै पञ्चबिन्दवे हिं हिं हिं स्वाहा।

ओं ह्रीं श्रीं आं ह्रीं ह्रीं ह्रीं नमः स्वसंकल्पसमीरणसमीर्यमाणबहुविधजीवकोशदपपुञ्जायै कलितकालकाल्यविकल्पभेदफेनपिण्डनिवहायै [6]विलासनिदर्शितभोक्तृभोग्यभोगोपकरणभोगसंपदेकमहासिन्धवे परमसूक्ष्मस्थूलरूपस्थूलायै विष्णुपत्न्यै पञ्चबिन्दवे ह्रीं ह्रीं ह्रीं स्वाहा।

ओं ह्रीं श्रीं नमः समस्तजगदुपकारस्वीकृतबुद्धिमनोऽङ्गप्रत्यङ्गसुन्दरायै विधाचतुष्टयसमुन्मेषितसमस्तजनलक्ष्मीकीर्तिजयामायाप्रभावात्मसमस्तसंपदेकनिधये समस्तशक्तिचक्रसूत्रधारायै समस्तजनभोगसौभाग्यदायिनि विविधविपयोपप्लवप्रशमनि नारायणाङ्कस्थितायै ओं ह्रीं श्रीं नमो नारायणाय लक्ष्मीनारायणाभ्यां स्वाहा। श्रीं ह्रीं ओं।

इति ते दर्शितः सोऽयं पदमन्त्रो महाद्भुतः।
ग्राह्यो गुरुमुखादेव कृतदीक्षं मनीषिभिः॥ १६॥

अस्यामधीयमानायामादर्श इव निर्मले।
विद्यायां संप्रकाशेऽहं यावती यास्मि यादृशी॥

[7]संबोधितस्वतत्त्वार्था सर्वसिद्धाभिनन्दिता।
अङ्गसंततिमस्यास्तु गदन्त्या मे निशामय॥ १८॥

प्रकाशानन्दसाराहं तदन्ते सर्वदर्शिनि।
सत्त्वसत्त्वव्यञ्जिके चाथ परब्रह्म तदन्तिके॥ १९॥

ततो भगवतीत्येव विष्णुपत्नि तदन्तिके।
ज्ञानं जातियुतं वाच्यं हृन्मन्त्रोऽयं महाद्भुतः॥

तत्संबन्ध एव विशेषः। श्रीं स्वाहा इति संज्ञामन्त्रः। १९. ओं प्रकाशानन्दसारे सर्वदर्शिनि सत्त्वसत्त्वव्यञ्जिके परब्रह्मरूपे भगवति विष्णुपत्नि ज्ञानाय हृदयाय नमः। जातिः स्वाहाशब्दः।

[1] श्रीं ह्रीं C. F.
[2] ईश A.
[3] I. omits हिं हिं.
[4] प्रभावायै I.
[5] रूपायै B.
[6] सर्वेश्वरि विलास B. F.
[7] सुबोधिता B.

अव्याहतानन्दगते सदन्ते परमेश्वरि ।
[1]सर्वोपरि स्थिते शेषं हृन्मन्त्र इव जातियुक् ॥

अहं [2]च शक्तिसंपूर्णे जगत्प्रकृतिके तथा ।
ज्ञानवैश्वानरशिखे शेषं पूर्ववदिष्यते ॥ २२ ॥

प्राणाप्राणमयोन्मेषमहास्पन्दमयीति च ।
सर्वाश्रमपदातीते कवचं पूर्वशेषवत् ॥ २३ ॥

विकारविधुरे चाथ स्वस्वभावस्तथोच्यते ।
महावीर्यमयीत्येवमस्त्रं पूर्वोक्तशेषवत् ॥ २४ ॥

परानपेक्षसामर्थ्ये सर्वप्रसविनीति च ।
अन्ते बोधमयीत्येवं नेत्रं पूर्वोक्तशेषवत् ॥ २५ ॥

पञ्चके ब्रह्मणां कूटे शान्तानलविहारिणी ।
ब्रह्मश्रीर्नाम मायेयं व्योमेशकृतशेखरा ॥ २६ ॥

चतुष्के धारणाकूटे सूक्ष्मानलविहारिणी ।
[3]धारणाश्रीरियं मायाव्योमेशकृतशेखरा ॥ २७ ॥

प्रधानानलपीठस्था व्योमेशकृतशेखरा ।
पुरुषश्रीरियं ज्ञेया चेतनौघप्रसारिणी ॥ २८ ॥

ध्रुवानलस्थिता मायाव्योमेशकृतशेखरा ।
प्रधानश्रीरियं ज्ञेया सर्वचेतनकारिणी ॥ २९ ॥

वामनादिपवित्रान्ते पवित्रानलगामिनी ।
अन्तःकरणश्रीर्मायाव्योमेशकृतशेखरा ॥ ३० ॥

नरादितालक्ष्मान्ते स्रग्धरानलचारिणी ।
ज्ञानश्रीरियमुद्दिष्टा मायाव्योमेशभूषिता ॥ ३१ ॥

[4]कूटे वैकुण्ठपूर्वे तु विश्वाप्यायानलस्थिता ।
कर्मश्रीरियमुद्दिष्टा मायाव्योमेशभूषिता ॥ ३२ ॥

उत्तमादिकरालान्ते कपिलानलचारिणी ।
भूतश्रीरियमुद्दिष्टा मायाव्योमेशभूषिता ॥ ३३ ॥

ब्रह्मश्रीपूर्विका एता अष्टौ पद्मदलाग्रगाः ।
पद्मसूर्तेस्तारिकायाः परिवाराः प्रकीर्तिताः ॥ ३४ ॥

सर्वास्ताः पद्मगर्भाभाः प्रसन्नाननपङ्कजाः ।
बाहुद्वन्द्वे धारयन्त्यः प्रफुल्लं पङ्कजद्वयम् ॥ ३५ ॥

ब्रह्मश्रीः पूर्वहस्ताभ्यां ब्रह्माञ्जलिकरी शुभा ।
पूर्वाभ्यां धारणालक्ष्मीः शुद्धाशुद्धविभाजिनी ॥

पूर्वाभ्यां पुरुषश्रीस्तु प्रसादाञ्जलिकारिणी ।
पूर्वाभ्यां प्रकृतिश्रीस्तु पाशाङ्कुशविधारिणी ॥

अन्तःकरणलक्ष्मीस्तु तर्कमुद्राविधारिणी ।
अधोमुखे पाणितले कनिष्ठानामिकाद्वयम् ॥ ३८ ॥

कुञ्चयेद्धारयेदन्यदङ्गुल्योर्द्वितयं सह ।
विश्लिष्य धारयेत्तद्वदङ्गुष्ठं प्रोन्नतं बलात् ॥ ३९ ॥

उन्नते दक्षिणतले बहिर्मुखमवस्थिते ।
सनिवेशस्तथा कार्य एषा मुद्रा तु तार्किकी ॥ ४० ॥

तथाविधे करद्वन्द्वे व्याख्यामुद्रा तु या भवेत् ।
ज्ञानश्रियस्तु सा मुद्रा कर्मलक्ष्म्या निबोध मे ॥

करणव्यापृतौ पाणी ससरम्भोद्यमौ सदा ।
एषा मुद्रा समुद्दिष्टा कर्मलक्ष्म्या महामते ॥ ४३ ॥

२१. ओं अव्याहतानन्दगते परमेश्वरि सर्वोपरि स्थिते ज्ञानाय शिरसे नमः । २६. ओं ५ श्री इति ब्रह्मश्रीमन्त्रः । २७. अं ४ ग्रीं इति धारणाश्रीमन्त्रः । २८. श्री इति पुरुषश्रीमन्त्रः । २९. श्रीं इति प्रधानश्रीमन्त्रः । ३०. व फ पं भ्रीं इति अन्तःकरणश्रीमन्त्रः । ३१. नं धं दं थं तं त्रीं इति ज्ञानश्रीमन्त्रः । ३२. णं ढं डं ठ ट ट्रीं इति कर्मश्रीमन्त्रः । ३३. यं झं जं छं चं ङं घं गं खं कं क्रीं इति भूतश्रीमन्त्रः ।

[1] सर्वेश्वरि F.
[3] धारिणी A.
[2] हि B. C.
[4] B. F. omit four lines from here.

भूतलक्ष्म्याः करौ पूर्वौ नानाभोगप्रदायिनौ ।
महालक्ष्मीमयं कूटमेकं सर्वसुखावहम् ॥ ४३ ॥

शृणु मे सावधानेन चेतसा बलसूदन ।
गरुडादिकरालान्तं तं नरः प्रोद्धरेत्क्रमात् ॥ ४४ ॥

करालानलगां मायां सव्योमेशामधोधरेत् ।
महालक्ष्मीमयं कूटं महाश्रीरस्य देवता ॥ ४५ ॥

एकानेकस्वभावा सा साकारा च निराकृतिः ।
अनन्तवक्त्रानन्तपदा तथानन्तकरा परा ॥ ४६ ॥

आधाराधेयभावेन सर्वत्रावस्थिता सदा ।
नानावर्णा तथा नानाशस्त्रग्रामौघसंकुला ॥ ४७ ॥

क्रूरा सौम्या समासीना नानासंपत्प्रकर्षिणी ।
सर्वत्र [1]सुलभा ध्येया कमलोदरभास्वरा ॥ ४८ ॥

इयमेव विपर्यस्ता गरुडान्ता महामते ।
पूर्ववद्रूपतो ध्येया पूर्वोक्तफलदायिनी ॥ ४९ ॥

स्वरद्विसप्तकं देव्याः किरणत्वेन संस्थितम् ।
विन्दुराधारभावेन सृष्टिः स्वं रूपमूर्जितम् ॥५०॥

इति ते तारिकामूर्तिः पदाख्या संप्रदर्शिता ।
अवधानवदस्यां त्वं सदा चेतो निवेशय ॥ ५१ ॥

शतकोटिप्रविस्ताराल्लक्ष्मीतन्त्रमहार्णवात् ।
अयं सारः समुद्धृत्य स्निग्धया दर्शितो मया ॥५२॥

अङ्कस्थायां मयि पुरा देवदेवो जनार्दनः ।
उज्जहारारविन्दाक्षो विद्यां मत्प्रीतये पराम् ॥ ५३ ॥

यथा हि चन्द्रिकां दृष्ट्वा नृणां चेतः प्रसीदति ।
विद्यामिमां तथा दृष्ट्वा योगिनां हृत्प्रसीदति ॥५४॥

न यमादिपरिक्लेश आसनव्यसनं न च[2] ।
न प्राणायामतः क्लेशो नैव किंचिदिहेष्यते ॥ ५५ ॥

सुखासीनः प्रसन्नात्मा यथेष्टासनविग्रहः ।
अभ्यस्य मनसा विद्यामिमां सिद्धिं नियच्छति ॥

यथा नद्यो नदाश्चैव संप्लवन्ते महोदधौ ।
एवं सर्वाः परा विद्याः संप्लवन्ते पदात्मनि[3] ॥

असंख्येयानि रत्नानि यथा नदनदीपतौ ।
असंख्येयानि तेजांसि पदमूर्तौ तथा विदुः ॥५८॥

यथान्नं मधुसंसृष्टं मधु चान्नेन संयुतम् ।
एवं बीजादयो भावास्तारायाः प्रीतिदायिनः ॥

अहं नारायणाङ्कस्था सर्वलोकमहेश्वरी ।
[4]सर्वसपन्मयी ध्येया पदमूर्तिर्विवक्षिता ॥ ६० ॥

अहमेव पुनः शक्र परा करुणयोद्यता[5] ।
साधकानां हितार्थाय मनसो भावनाय च ॥६१॥

अखण्डा परिपूर्णा हि चतुर्धात्मानमात्मना ।
इमां विद्यामयीं मूर्तिं विभजामि हितैषिणी ॥६२॥

विभक्तानां तु मूर्तीनां मन्मयीनां पुरंदर ।
विधिं चतसृणां त्वं मे यथावच्छ्रोतुमर्हसि[6] ॥६३॥

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे[8] रहस्यप्रकाशो नाम
चतुश्चत्वारिंशोऽध्यायः

४४. महालक्ष्मीमन्त्रः—क्षं इत्यारभ्य कं इति पर्यन्तं पठित्वा क्रीं इति पठेत् । ५२. शतेत्यादि । अनेन मूलभूतं लक्ष्मीतन्त्रं शतकोटिग्रन्थपरिमितमित्युक्तं भवति । ६२. चतुर्धेति । लक्ष्मीकीर्तिजयामायाख्याश्चतस्रो विद्या अनन्तराध्याये वक्ष्यन्ते ।

## इति चतुश्चत्वारिंशोऽध्यायः

---

[1] सुभगा A. F. G. [2] तथा A. [3] पदाध्वनि A. G. [4] संपत्समृद्धये या C. F.
[5] परकारा यथोद्यता A. G. [6] शतुमर्हसि C. [7] श्रीपञ्चरात्र A.; पाञ्चरात्रे B. [8] लक्ष्मीतन्त्रे सारे F.

# पञ्चचत्वारिंशोऽध्यायः

श्री —

अहं नारायणी देवी पूर्वपामपि पूर्वजा ।
साक्षाद्भगवतो विष्णोर्लक्ष्मीः श्रीरनपायिनी ॥ १ ॥

विभजामि स्वया शक्त्या चतुर्धात्मानमात्मना ।
लक्ष्मीः कीर्तिर्जया माया चतस्रो मूर्तयश्च ताः ॥

या सा [1]शक्तिः परा लक्ष्मीरहंताहं विभोर्हरेः ।
विभजन्ती स्वमात्मानं चतुर्धा जगतो हिते ॥ ३ ॥

अहमेव पराहंता भवामि प्रथमा तनुः ।
लक्ष्मीर्नाम महाभागा सर्वैश्वर्यफलप्रदा ॥ ४ ॥

कीर्तिर्नाम द्वितीया मे तनुः सत्कीर्तिदायिनी ।
जया नाम तृतीया मे तनुर्विजयदायिनी ॥ ५ ॥

माया नाम चतुर्थी मे सर्वाश्चर्यकरी तनुः ।
लक्ष्मीः कीर्तिर्जया मायेत्येव नारायणाश्रया ॥ ६ ॥

नारायणाश्रयाया मे मूर्तयः परमोज्ज्वलाः ।
स्वशक्तिनिचयोपेता निराकारास्तु निष्कलाः ॥ ७ ॥

सूर्यस्य रश्मयो यद्वदूर्मयश्चाम्बुधेरिव ।
सर्वैश्वर्यप्रभावे तु लक्ष्मीर्लक्ष्मीपतेः स्थिता ॥ ८ ॥

नानाविशेषलक्ष्मीभिः कोटिसंख्याभिरावृता ।
कीर्तिस्तथाविधा नैव विभिन्ना विग्रहे विभो ॥ ९ ॥

तन्नास्ति यत्र हि तया व्याप्तं सामान्यदेहया ।
यस्य यत्र च या कीर्तिः स्वसामर्थ्यात्प्रजायते ॥ १० ॥

सा सा रूपविशेषोऽस्याः सामान्यात्मन उत्थिता ।
जया जयेश्वरस्यैव व्याप्तिभावेन संस्थिता ॥ ११ ॥

या काचिद्दृश्यते माया जगत्यस्मिन् सुरादिषु ।
भगवन्माययोद्भूता ता मां विद्धि सुरेश्वर ॥ १२ ॥

तदीयं निष्कलं रूपं मदीयं च विहाय वै ।
कोऽस्मिंस्तत्त्वोदधौ चास्ति[2] चतुर्धा सुरसत्तम ॥

भगवच्छक्तिभिः सम्यगाभिर्योगविभाविता ।
स्वालोकज्ञानसामर्थ्यान् साकारत्वमुपागता ॥ १४ ॥

ध्यातव्या साधकश्रेष्ठैरिज्या पूज्याश्च सिद्धये ।
तासां ममादिभूताया लक्ष्म्या मूर्तिं[3] निशामय ॥

सौम्यवक्त्रा सौम्यनेत्रा द्विभुजा चारुकुण्डला ।
पद्मगर्भोपमा कान्त्या मेखलादाममण्डिता ॥ १६ ॥

८. लक्ष्मीपतेः सर्वैश्वर्यं प्रभावः इत्यादिकं लक्ष्म्यायत्तमित्यर्थः । न चैतावता भगवतः पारतन्त्र्यं न्यूनता वा । गुणाहितो ह्यतिशयो गुणिनि प्राशस्त्यं वर्धयति । आहुश्चाभियुक्ताः — "स्वत श्रीस्त्वं विष्णो स्वमसि तत एवैष भगवांस्त्वदायत्तर्द्धिश्चेदप्यभवदपराधीनविभवः । स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं न कुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥" इति । १३. चतुर्धा, वासुदेवसङ्कर्षणाद्यात्मना लक्ष्मीर्न्यायात्मना च । १४. योगविभाविता लक्ष्मीर्विन्दिय ध्यातव्या इत्यन्वयः । १५. प्रथमं लक्ष्मीरूपमाह

[1] लक्ष्मीः परा हरेः F G
[2] तत्त्वाब्धावस्मिन् F I
[3] मूर्तीः F

श्वेतमाल्याम्बरधरा हारकेयूरमण्डिता ।
सर्वलक्षणसंपन्ना पीनतुङ्गघनस्तनी ॥ १७ ॥

प्रबुद्धोत्पलविस्तीर्णलोचना सुस्मितानना ।
[1]चरद्विरेफपटलतुल्यैर्युक्ता तथालकैः ॥ १८ ॥

ललाटे तिलकं चित्रं वहन्ती च मनोहरम् ।
आरक्ताधररत्ना च वंशमुक्ताफलद्विजा ॥ १९ ॥

अर्धचन्द्रललाटा च नीलकुञ्चितमूर्धजा ।
पाशाङ्कुशधरा देवी धर्मकामार्थमोक्षदा ॥ २० ॥

बद्धपद्मासना चैव मकुटोत्तमशोभिता ।
एवं ध्येयाहमीशाना लक्ष्मीव्यूहस्थिता सती ॥२१॥

मन्त्रमस्याः प्रवक्ष्यामि तं मे निगदितं[2] शृणु ।
तारिका नाम यद्बीजं हृदयं तत्परं मम ॥ २२ ॥

पूर्वं प्रणवमादाय तदन्ते तां नियोजयेत् ।
द्व्यक्षरं तु ततो लक्ष्म्यै नमश्चान्ते नियोजयेत् ॥

ततः परमशब्दं तु तदन्ते पुरुषेश्वरम् ।
आनन्दिनं च गरुडं वरुणं च समुद्धरेत् ॥ २४ ॥

स्थितायैपदमस्यान्ते भूयो मद्धृदयं पठेत् ।
अनुबीजं तदन्ते च मद्बीजं पुनरुत्तमम् ॥ २५ ॥

वह्निजायां तदन्ते च मूर्तिमन्त्रो ममेदृशः ।
विंशत्यर्णः स्मृतः सोऽयं साक्षाल्लक्ष्मीसमाह्वयः ॥

अङ्गमन्त्रं निबोधास्या यथावद् वृत्रसूदन ।
शान्तमादाय तस्यान्ते विन्यसेत् पुरुषेश्वरम् ॥२७॥

अनलं तदधःस्थं च पिण्डमेतत्त्रयं स्मृतम् ।
[3]अन्ते युगादिमायोज्य [4]ह्याद्यन्तस्वरषट्कयोः ॥

चन्द्रिणं व्यापिनं चैव सर्वेषामुपरि न्यसेत् ।
विद्धि षड् हृदयादीनि तान्यस्त्रान्तानि वासव ॥

लक्ष्मीसखीनामधुना मन्त्रानेतान्निशामय ।
सत्यं तरस्थं वराहं च [5]मायान्तममृतं तथा ॥३०॥

वरुणं रामयुक्तं च चत्वारो बीजनायकाः ।
चन्द्री व्यापी क्रमाद्योज्यौ सर्वेषां मूर्ध्नि वै ततः ॥

ऋद्धिर्वृद्धिः समृद्धिश्च विभूतिश्च सखीगणः ।
तारं बीजं ततः संज्ञा स्वाहा चासां मनुः स्मृतः ॥

सख्यश्चतस्र एताः स्युर्द्विभुजाः सौम्यदर्शनाः ।
पद्मकोशप्रतीकाशाः श्रीवृक्षचमराङ्किताः ॥ ३३ ॥

पद्मासनोपविष्टाश्च प्रेक्षमाणा मदाननम् ।
एवं ध्येयास्तु सख्यस्ताश्चतुरोऽनुचराञ्शृणु ॥३४॥

—तासामित्यादिना । १८. चरन्तीति चराः । भ्रमणशीला इत्यर्थः । २२. तारिका ह्रींमन्त्रः । २३–२६. ओं ह्रीं लक्ष्म्यै नमः परमलक्ष्मावस्थितायै ह्रीं श्रीं ह्रीं स्वाहा इति विंशत्यक्षरो मूर्तिमन्त्रः । २७–२९. अङ्गमन्त्र इति । हृदयाद्यङ्गमन्त्र इत्यर्थः । मन्त्रानुद्धरति —शान्तमित्यादिना । श्लूं, श्लिं, श्लुं, श्लृं, श्लैं, श्लौं इत्येतैः प्रत्येकं टं इति संयोजनेन मन्त्रा उद्धृता भवन्ति । ३०. ऋद्धिः, वृद्धिः, समृद्धिः, विभूतिरिति चतस्रो लक्ष्मीसख्यः । तासां बीजमन्त्राः ऋं, वृं, सिं, विं इति प्रत्येकं टं इति सहिताः । ३२. ओं ऋं टं ऋद्ध्यै

[1] चल I.
[2] निगदतः A.
[3] अन्तर्यागादि B. C.
[4] हृद्यन्ते B.
[5] मायार्कं I.

लावण्य सुभगश्चैव सौभाग्यश्च तृतीयक ।
चतुर्थ सौमनस्यश्च चत्वारोऽनुचरा मम ॥ ३५ ॥

चतुर्भुजा सौम्यवक्त्रा नीलकौशेयवासस ।
दधत पद्मकुम्भौ च नलिनीध्वजमेव च ॥ ३६ ॥

प्रफुल्लमल्लवृक्ष च चतुर्भि स्वभुजै शुभै ।
मन्त्रानेषा प्रवक्ष्यामि तत्त्वतस्तान्निबोध मे ॥३७॥

विबुधस्त्रादिदेवाख्य सोमोऽथ भुवनस्थिति [1]।
द्विधामृत समाप्ताय भूधराभ्या नियोजयेत् ॥३८॥

चन्द्रिव्यापिसमेतानि स्मरेद्बीजानि तत्त्ववत ।
तार बीज तत सज्ञा नमश्चाते मनो स्मृत ॥३९॥

एतन् साङ्गपरीवार लक्ष्मीरूप निदर्शितम् ।
कीर्त्याख्याया द्वितीयाया मूर्तं रूपादिक शृणु[2] ॥४०॥

रूपेण सदृशी लक्ष्म्या वर्णतश्चम्पकप्रभा ।
शेषे लक्ष्मीसमा रूपे मूर्तिमन्त्रान्निबोध मे ॥ ४१ ॥

तार मद्भूदय पश्चात् करालो विष्णुसयुत ।
स्मरश्चानलारूढ ऐश्वर्यपरिभूषित ॥ ४२ ॥

नम सनोदितानन्दविग्रहायैपद तत ।
मद्बीज कमलारूढमनल विष्णुभूषितम् ॥ ४३ ॥

व्यापिना च समायुक्तमन्ते बीजमिद स्मरेत् ।
स्वाहापद मनु सोऽय विंशत्यर्णस्तु कीर्तित ॥४४॥

अङ्गमन्त्रान्निबोधाय गदन्त्या मे निशामय ।
करालमनलारूढ कृत्वा सयोज्य पूर्ववत् ॥ ४५ ॥

आन दायै स्वरैश्चन्द्रिव्यापियुक्तै श्रियो यथा ।
अङ्गमन्त्रा इमे कीर्ते सखीरूपमनूच्छृणु ॥ ४६ ॥

द्युति सरस्वती मेधा श्रुति सत्य इमा स्मृता ।
द्विभुजा हेमवर्णाभा कीर्तिरूपा सितानना ॥

सुपुस्तक करे वामे दक्षिणे चामर करे ।
मन्त्रान् कीर्तिसखीना तु गदन्त्या मे निशामय ॥

मदन चामृत चैव प्रधान शकर तथा ।
एतान् कृत्वानलारूढान् मायया परिभूषयेत् ॥

चन्द्रिण व्यापिन दद्यात् सखीमन्त्रानिमान् स्मरेत् ।
कीर्तेरनुचराणा [3]तु नामरूपादिक शृणु ॥ ५० ॥

वागीशो जयदश्चैव[4] प्रसादस्त्राण एव च ।
ध्येया किंशुकवर्णाभा [5]कान्तरूपा मनोहरा ॥

श्वेताम्बराश्चतुर्हस्ता सर्वाभरणभूषिता ।
वामदक्षिणहस्ताभ्या मुख्याभ्या तेषु चिन्तयेत् ॥

शङ्खमिन्दुशताभ च कदम्बाख्य महाद्रुमम् ।
सपुष्प षट्पदोपेतमपराभ्या निबोध मे ॥ ५३ ॥

पूर्णचन्द्रोपम वामे दर्पण दक्षिणे करे ।
मयूरव्यजन शुभ्र दधतश्चारुलोचना ॥ ५४ ॥

स्वाहा इत्यादयो मन्त्रा । ३५. लक्ष्म्यनुचरा लावण्यादय । ३८. अनुचरमन्त्रा उच्यन्ते—विबुध इत्यादिना । ला, सु, सौं, सौं, ट इति बीजमन्त्रा । ३९. ओं ला ट लावण्याय नम इत्यादयो मन्त्रा । ४०. ओं ह्रीं क्रा ऐं नम सदोदितानन्दविग्रहायै ह्रीं श्रीं स्वाहा इति विंशत्यर्णो मन्त्र । ४५. अङ्गमन्त्रा क्रा श्री इत्यादिका लक्ष्म्या इव ज्ञेया । ४६. सखीत्यादि । सखी तासा रूपाणि मन्त्रांश्च शृण्वित्यर्थ । ४९. मदनमित्यादि । क्षीं, सीं, क्षीं, श्रीं, ट इति मन्त्रा । ५१. कीर्तेरनुचरा—वागीशादय ।

[1] स्थिरा B I
[2] रूपादि तच्छृणु A G
[3] च B C F
[4] धमदश्चैव B C F
[5] कान्ति B I

वराहमादिदेवाढ्यमप्रमेयं च केवलम् ।
पवित्रमनलारूढं स्रग्धरं च तथाविधम् ॥ ५५ ॥

आदिदेवान्वितं कृत्वा तेषामूर्ध्वे सुयोजयेत्[1] ।
चन्द्रिणं व्यापिनं चान्ते मन्त्रा अनुचराश्रिताः ॥

कीर्तेर्द्वितीयमूर्तेर्वै क्रमोऽयं परिकीर्तितः ।
रूपादिकं तृतीयाया जयाया मे निशामय ॥ ५७ ॥

रूपेण सदृशी लक्ष्म्या जया परमशोभना ।
तारश्च तारिका चैव जन्महन्ता चतुर्गतिः ॥ ५८ ॥

आदिदेवान्वितः पश्चात् स ऐश्वर्यसंयुतः ।
[2]तारमादाय तस्यान्ते कालं सपरमेश्वरम् ॥ ५९ ॥

व्यापको जन्महन्ता सरामोऽथ स्रग्धरस्तथा ।
आदिदेवान्वितो धर्ता प्रधानश्च तथाविधः ॥ ६० ॥

वरुणोऽथामृतस्थश्च धन्वी रामविभूषितः ।
वैराजश्चादिदेवाढ्यः शङ्ख ऐश्वर्यभूषितः ॥ ६१ ॥

तारिका शाश्वतोऽशेषभुवनाधारविष्णुमान् ।
व्योमेशभूषितश्चाथ वह्निपत्नी ततः परम् ॥ ६२ ॥

जयाया मूर्तिमन्त्रोऽयमङ्गमन्त्रान् निबोध मे ।
जन्महन्तारमादाय कालपावकभूषितम् ॥ ६३ ॥

स्वरैर्विभूषयेत् प्राग्वच्चन्द्रिव्यापिसमन्वितैः ।
अङ्गानि हृदयादीनि जयायास्तानि संस्मरेत् ॥

जयन्ती विजया चैव तृतीया चापराजिता ।
सिद्धिश्चतुर्थी विज्ञेया जयासख्य इमाः स्मृताः ॥

अजितं विष्णुसंयुक्तं वरुणं [3]चेद्धसंयुतम् ।
केवलव्यापकं चैव सोममिष्टविभूषितम् ॥ ६६ ॥

चन्द्रिव्यापिसमायुक्तं कृत्वा संयोज्य संज्ञया ।
स्वाहामन्ते समायोज्य सखीमन्त्रानिमान् स्मरेत् ॥

[4]नीलनीरदवर्णाभाः प्रसन्नवदनेक्षणाः ।
पीताम्बरधराः सर्वाः सख्यः कनककुण्डलाः ॥

[5]सितचामरहस्ताश्च चित्रवेत्रलताकराः ।
निरीक्षमाणा वदनं जयाया अजितस्य च ॥ ६९ ॥

प्रतापी जयभद्रश्च तृतीयस्तु महाबलः ।
उत्साहश्चेति वर्गोऽयं जयानुचरसंज्ञितः ॥ ७० ॥

रक्ताम्बरधराः सर्वे चतुर्हस्ता महाबलाः ।
धनुर्बाणकराश्चैव गदाचक्रधरास्तथा ॥ ७१ ॥

इत्थं तेऽनुचरा ज्ञेयाः[6] पुष्पाभरणभूषिताः ।
पद्मनाभोऽनलारूढोऽजितः कालस्तथैव च ॥ ७२ ॥

५५. वराहो वकारः । पवित्रं पकारः । स्रग्धरः तकारः । ५८. तारः प्रणवः । तारिका ह्रीं मन्त्रः । जन्महन्ता जकारः । चतुर्गतिः यकारः । ५९. कालः मकारः । परमेश्वरः विसर्गः । ६०. व्यापकः अकारः । रामः इकारः । धर्ता धकारः । प्रधानः मकारः । ६१. धन्वी थकारः । वैराजः तकारः । शङ्खः यकारः । ६२. शाश्वतः जकारः । विष्णुः इकारः । व्योमेशः अनुस्वारः । वह्निपत्नी स्वाहाकारः । ६३. कालपावकः रेफः । ६६. अजितः जकारः । वरुणः वकारः । इद्धः इकारः । सोमः सकारः । इष्टः इकारः । ६८. जयासखीनां रूपमाह—नीलेत्यादिना । ७०. जयानुचरा उच्यन्ते—प्रतापीत्यादिना । ७१. जयानुचराणां रूपमाह

[1] मूर्धसु योजयेत् A. G.
[2] नरम् A. B. F.
[3] सिद्धसंयुतम् A.; चेद्धसंज्ञितम् C.; चेन्द्रसंयुतम् F.
[4] C. and G. omit three lines from here; कुन्दकुड्मलवर्णाभाः प्रसन्नवदनेक्षणाः । पीताम्बरधराः सर्वाः प्रसन्नमुखपङ्कजाः ॥ A.
[5] F. omits this line.
[6] ध्येयाः A. B.

उद्दामश्च सुरेशैते चन्द्रिव्यापिविभूषिता ।
प्रणवाद्या नमोऽन्ताश्च सञ्ज्ञया च समन्विता ॥

जयानुचरमन्त्रास्ते विज्ञेया वृत्रसूदन ।
अथ तृतीयमूर्तेर्मे जयाया विधिरद्भुत ॥ ७४ ॥

चतुर्थ्या सविधान मे मायामूर्तेर्निशामय ।
सर्वाश्चर्यकरी देवी देवदेवस्य शार्ङ्गिण ॥ ७५ ॥

माया नाम महाशक्तिस्तुरीया मे तनु परा ।
रूपेण सदृशी लक्ष्म्या मूर्तिमन्त्र निशामय ॥ ७६ ॥

आदाय तारक पूर्वं तारिका तदनु स्मरेत् ।
मायायै च नम पश्चात् काल ओदनसस्थित ॥७७॥

वामभ्रूसयुत सूर्य स्रग्धरो विष्णुभूषित ।
केवलोऽसौ नरान्त्योऽथ मदनो गोपनान्वित ॥

पुण्डरीकोऽनलारूढो रामवास्तदनन्तरम् ।
ताल्लक्ष्मादिदेवाढ्य शङ्ख ऐश्वर्यसयुत ॥ ७९ ॥

तत कालोऽनलारूढो मायाव्यापिसमन्वित ।
मायाबीजमिद दिव्यं तारिकोर्ध्वस्थित स्मरेत् ॥

वह्निजाया तदन्ते स्याद्विंशत्यर्णो मनु स्मृत ।
अङ्गान्यस्य प्रवक्ष्यामि तानि मे त्व निशामय ॥

मायाबीज समादाय गोपनाग्ने स्वरै क्रमात् ।
विभेद्य पूर्ववत् कार्या ह्यङ्गक्लृप्तिर्विपश्चिता ॥८२॥

मोहिनी भ्रामणी दुर्गा प्रेरणी च सुरेश्वर ।
मायामन्त्यस्रतन्मन्त्रा विज्ञेया रणमासुरा ॥ ८३ ॥

लावण्येन च वीर्यण सौन्दर्यण च तेजसा ।
मायातुल्या इमा देव्य सितयज्ञानुलेपना ॥८४॥

चामराङ्कुशहस्ताश्च बद्धपद्मासनस्थिता ।
मन्त्रानासा प्रवक्ष्यामि शृणु त्व बलसूदन ॥ ८५ ॥

प्रधान ओदनारूढो ध्रुवो रेफादिदेववान् ।
मदनो भुवनारूढो योऽनलैश्वर्यसयुत ॥ ८६ ॥

चन्द्रिव्यापियुता ह्येते सर्वे प्रणवपीठगा ।
सञ्ज्ञास्वाहायुजो मायासखीमन्त्रा इमे स्मृता ॥

मायामयो महामोह शम्बरश्च कलीश्वर ।
चत्वारोऽनुचरा एते काकालीकज्जलोपमा ॥ ८८ ॥

चतुर्भुजा महाकाया सौम्यवक्त्रा सितानना ।
केयूराभरणोपेता पीतकौशेयवासस ॥ ८९ ॥

हारनूपुरसयुक्ता नानाकुसुमभूषिता ।
तुषारधूलिधवला खड्गपाशकरोद्यता ॥ ९० ॥

घ्राण कार्मुकमन्यस्मिन्नातपत्र करद्वये ।
प्रधानो गोपनोपेत केवलस्तदनन्तरम् ॥ ९१ ॥

शक्र केवलश्चैव केवल कमलस्तथा ।
चन्द्री व्यापी च सर्वेषा क्रमान्मूर्धसु विन्यसेत् ॥

तारकाद्या नमोऽन्ताश्च सञ्ज्ञया च समन्विता ।
मन्त्रा मायामयादीना चतुर्णा बलसूदन ॥ ९३ ॥

सर्वेषामङ्गमन्त्राणा ध्यान सामान्यमीरितम् ।
मुद्राश्चाङ्गसमेताना देवानामपि वासव ॥ ९४ ॥

या पुरस्तान्मया प्रोक्ता दर्शयेत्ता यथायथम् ।
एकैकश समस्ता वा देवीरेता भजन्नर ॥ ९५ ॥

यथामति यथोमाद युज्यते परया श्रिया ।
एताश्चतस्रस्तन्व्यो मे भगवत्किरणात्मिका ॥९६॥

—रतेत्यादि । ७२. पद्मनाभ पकार । अनिन जकार । काल मकार । उद्दाम टकार । ७७. ओदन ओकार । ७८. नर नकार । मदन मकार । गोपन आकार । ७०. पुण्डरीक शकार । तल्लक्ष्मा तकार । ८६. ध्रुव भकार । भुवनम् उकार ।

याभिः स भगवान् देव पूर्णरूपोऽवतिष्ठते ।
एकैकस्या असख्याता शक्तयस्तत्तदात्मिका ॥९७॥

अनन्तपरिवारास्ता इति शक्तिमय जगत् ।
आसा चतसृणामेका शक्तीना परमेश्वरीम् ॥९८॥

मूलभूता पराहता विष्णोस्तद्धर्मधर्मिणीम् ।
सर्वशक्तिमयीं ता मा शक्तिचक्रस्य नायिकाम् ॥

प्रकाशानन्दयोरन्तरनुस्यूतामनुस्मरेत् ।
अग्नीषोमद्वयान्तःस्था मध्यमार्गानुवर्तिनीम् ॥१००॥

अपराच्या मनोवृत्त्या [1]मन्वीत मतिमान्नरः ।
अस्तमानाय्य सौषुम्ने मार्गे सूर्यनिशाकरौ ॥१०१॥

अपराचीनया वृत्त्या कुर्वीत मयि सस्थितिम् ।

शक्र —

देवदेवमये देवि सरसीरुहसस्थिते ॥ १०२ ॥

मुद्रा देवीसखीना च किंकराणा च मे वद ।

श्री —

देवीना दर्शिता मुद्रा पुरैव बलसूदन ॥ १०३ ॥

तत्सखीनामिदानीं तु षोडशाना निबोध मे ।
समुखौ तु करौ कृत्वा सुस्पष्टौ सुप्रसारितौ॥१०४॥

कनिष्ठानामिकाभ्या वै युगल युगल हरेत् ।
मेलयेन्नखदेशाच्च यथा स्यादेकपिण्डवत् ॥१०५॥

अङ्गुलीभिश्चतसृभि पाणिमध्ये निराश्रयम् ।
अङ्गुष्ठौ दण्डवत्कृत्वा प्रान्तलग्नौ प्रसारितौ ॥

अङ्गुलीना चतसृणा विश्रान्तौ चोदरावघे ।
सर्पकुण्डलवत्कृत्वा भयत्नात्तर्जनीद्वयम् ॥ १०७ ॥

प्रसार्य चाग्रतो लग्ने मध्यमे द्वे सुरेश्वर ।
कनीयसौ ऋजूभूते समारभ्य करद्वयम् ॥ १०८ ॥

कुर्याच्चैवातिसलग्न मणिबन्धावसानत ।
ईषदङ्गुष्ठमूले तु मणिबन्ध करद्वयात् ॥ १०९ ॥

कुर्याद्विकसित चैव मुद्रैषा बलसूदन ।
महायोन्यभिधाना च त्रिलोकजननी परा ॥ ११० ॥

वशीकुर्याज्जगत् सर्व कामतो यदि योजिता ।
अत्रानुष्ठानयुक्ता स्त्री बद्ध्वा दूरात् प्रदर्शयेत् ॥१११॥

मुनीना गतसङ्गाना क्षोभ जनयते क्षणात् ।
पुरुषोऽत्राभियुक्तो वा दर्शयेद्वनितासु च ॥ ११२ ॥

निवृत्तकामधर्मासु चाबलास्वथवा मुने ।
क्षुभ्यन्त्यमदनास्ताश्च सकामायास्तु का कथा ॥

एषा साधारणी मुद्रा सर्वासामपि वासव ।
वक्ष्येऽथानुचराणा तु षोडशाना समासत ॥

पृष्ठलग्नौ करौ कृत्वा मोक्षयेत्तदनन्तरम् ।
प्रदेशिनीयुग चैव कनिष्ठायुगल तथा ॥ ११५ ॥

अधोमुख तु सुस्पष्ट ताभ्या मध्यं[2] महामते ।
कनिष्ठिकाद्वयं लग्न विरल तर्जनीयुगम् ॥ ११६ ॥

मध्यमानामिकाया तु युग्म युग्म तु धारयेत् ।
एकलग्न नखोद्देशाद्यावत्पर्व[3] तु मध्यमम् ॥ ११७ ॥

ऊर्ध्ववक्त्रं सुरश्रेष्ठ समेन धरणेन तु ।
सुस्पष्टौ लम्बमानौ चाप्यङ्गुष्ठौ चाप्यधोमुखौ ॥

परस्पर तु दूरस्थौ मुद्रैषा सर्वकामदा ।
स्वस्वमन्त्रयुता कार्या सर्वेषामियमेकिका ॥ ११९ ॥

[1] F omits four quarters from here

[2] मध्या C. F

[3] पद्म A

साधारण्याविमे प्रोक्ते मुद्रे सर्व्यनुचारिणाम्।
इत्थं सपरिवारामित्था मां चतसृभिर्युताम्॥१२०॥

विभूतिभिरुपास्यैव मामेवान्ते समश्नुते।
विभूतयो ह्यनन्ता मे तत्तनतान्निक्सश्रया ॥

कोटिकोटिपरीवारा एकैकास्ताश्च वासव।
एता प्रधानभूतास्ताश्चतस्र परिकीर्तिता[1]॥१२१॥

इति मे मूर्तिमन्त्राणामङ्गमन्त्रादिभिः सह।
कथितस्ते समुद्देश साधनादीनि मे शृणु ॥१२२॥

इति [2]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे मूर्तिप्रकाशो नाम
पञ्चचत्वारिंशोऽध्याय

१२०. चतसृभिरिति। लक्ष्मीकीर्तिजयामायाभिरित्यर्थ ।

इति पञ्चचत्वारिंशोऽध्यायः

---

[1] [illegible] B C.

[2] श्रीपाञ्चरात्र A, श्रीपाञ्चरात्रे B.

# षट्चत्वारिंशोऽध्यायः

श्रीः—

अनुक्रमेण देवेश लक्ष्म्यादीनां च साधनम् ।
विविधानि च कर्माणि तन्मन्त्रेभ्योऽवधारय ॥१॥

चतुरश्रं चतुर्द्वारं कृत्वा पूर्वोदितं पुरम् ।
तन्मध्येऽष्टदलं पद्मं लिखेच्छुक्लारुणप्रभम् ॥ २ ॥

सितानि चतुरालिख्य कोणेषु स्वस्तिकानि च ।
व्यापकत्वेन तु पुरा मणिबन्धमुखादितः ॥ ३ ॥

विन्यस्य मूलमन्त्रं च हस्ते देहे च केवलम् ।
पश्चादादौ च[1] हस्ताभ्यां लक्ष्मीमन्त्रं तथा न्यसेत् ॥

तदङ्गानि च विन्यस्य हस्ते देहे यथा पुरा ।
तस्यानुगचतुष्कं यद्देवीनां तदनु न्यसेत् ॥ ५ ॥

प्रदेशिन्यादितो हस्तद्वये तदनु विग्रहे ।
उत्तमाङ्गे तु [2]हृन्मध्य ऊर्वोर्जानुद्वये तथा ॥ ६ ॥

लावण्याद्यांश्च चतुरो ह्यनामादि[3] करद्वये ।
अङ्गुष्ठान्तं च विन्यस्य हस्ते देहे च वासव ॥

दक्षिणे च तथा वामे स्कन्धे पक्षद्वये ततः ।
न्यासं कृत्वा यथान्यायं श्रीकामोऽथ यजेद्धृदि ॥

लययागप्रयोगेण लक्ष्मीमन्त्रं तु केवलम् ।
कृत्वावलोकनाद्यं तु ततो वाह्ये तु विन्यसेत् ॥

मूर्तिमन्त्रयुतं मूलं कर्णिकोपरि वासव ।
सकलाकलदेहं च सर्वमन्त्रान्वितं विभुम् ॥ १० ॥

तदुत्सङ्गगतां लक्ष्मीं स्वमन्त्रेणावतार्य च ।
पूर्वोक्तध्यानसंयुक्तो भोगमोक्षप्रसिद्धये ॥ ११ ॥

तदाग्नेये तदीशाने यातवीयेऽथ वायवे ।
चत्वारि हृदयादीनि नेत्रं केसरसंततौ ॥ १२ ॥

तदग्रे दक्षिणे पृष्ठे वामपार्श्वे क्रमान्न्यसेत् ।
चतुष्टयं तु ऋद्ध्याद्यं द्विभुजं तु तथाकृति[4] ॥

[5]पद्मगौरप्रतीकाशं श्रीवृक्षचमराङ्कितम् ।
पद्मासनेनोपविष्टं प्रेक्षमाणं सदाननम् ॥ १४ ॥

स्वस्तिकानां तदीशादिकोणस्थाने निवेश्य तु ।
लावण्याद्यचतुष्कं तु सौम्यवक्त्रं चतुर्भुजम् ॥

नीलकौशेयवसनं पद्मकुम्भकरान्वितम् ।
नलिनीध्वजहस्तं च सफलामलवृक्षधृत् ॥ १६ ॥

१. आदिशब्देन कीर्तिजयामाया गृह्यन्ते । २. पुरनिर्माणमाह— चतुरश्रमित्यादिना । ५. अनुगेति । ऋद्ध्यादिचतुष्कमन्त्रमित्यर्थः । ७. अनुचरमन्त्राणां न्यासमाह—लावण्याद्यानिति । १०. कर्णिकोपरीति । अष्टदलपद्मकर्णिकोपरीत्यर्थः । अकलो निष्कलः ।

[1] तु B C.
[2] भ्रूमध्ये B.
[3] अनामादौ C. G.
[4] यथाकृति C.
[5] सिन्दू C

द्वारेष्वत्र चतुर्दिक्षु न्यस्य पूज्य यथा पुरा।
मूलमन्त्रयुता देवीं लक्ष्मीं त्रिदशनन्दन ॥ १७ ॥

मुद्राश्च दर्शयेत् सर्वा यत्र यत्र हि या स्मृता ।
जप्त्वा हुत्वा ततो होम सघृतैस्तु तिलाक्षतै ॥

सामले श्रीफलैश्चैव [1]सति लाभे तु पङ्कजे ।
[2]यथाशक्ति ह्यसख्यैस्तु होमान्ते वृत्रसूदन ॥ १९ ॥

लक्ष्मीरूपस्ततो भूत्वा साधक कृतनिश्चय ।
जपेल्लक्षाणि वै पञ्च शुद्धाहारो जितेन्द्रिय ॥२०॥

होम कुर्याज्जपान्ते तु क्रमाद्बिल्वामलाम्बुजे ।
यथाशक्ति ह्यसख्यैस्तु अयुतायुतसख्यया ॥ २१ ॥

ददाति दर्शन [3]शक्र होमान्ते परमेश्वरी ।
पुत्र सिद्धासि ते ब्रूहि यत्ते मनसि चेप्सितम्[4] ॥

कुरु कार्याण्यभीष्टानि मन्मन्त्रेणाखिलानि च ।
अद्य प्रभृति नि.शङ्को द्वन्द्वोपद्रववर्जित ॥ २३ ॥

एवमुक्त्वा तु सा देवी याति यत्रागताशु वै ।
तत कर्माणि वै कुर्याल्लक्ष्म्या अनुमते मम ॥ २४॥

स एव तुष्टोऽभीष्ट तु श्रिय दद्यात्प्रयार्थिनाम् ।
सक्रुद्धो निर्धन कुर्याद्वाङ्मात्रेण धनेश्वरम् ॥ २५॥

गुल्म कुर्यात् सन्दधयन् मन्त्रजापाच्च हाटकम् ।
पूरयित्वाम्भसा कुम्भ क्षीरेण मधुनाथवा ॥२६॥

निधाय दक्षिणे हस्ते वाम तदुपरि न्यसेत् ।
शतमष्टाधिक मन्त्र जपेद्ध्यानसमन्वितम् ॥ २७ ॥

रसेन्द्राभिनिवेशस्थो ह्येकचित्त समाहित ।
रसेन्द्रत्व समायाति तत्कुम्भे त्वाहृत जलम् ॥

सरसो लक्षवेधी स्याच्छक्रार्दीना पुरदर ।
करोति कायममर जरारोगनिवर्जितम् ॥ २९ ॥

अङ्गुष्ठाग्रमात्र तु पुरा पाषाणमाहरेत् ।
दक्षिणोदरहस्तेन वामेन बदरीसमम् ॥ ३० ॥

अभिमन्त्र्य तु तौ मुष्टी द्वे शते षोडशाधिके ।
दक्षिणस्थ तु पाषाण रत्नत्वमुपयाति च ॥ ३१ ॥

वामे मुक्ताफलत्व च महामूल्ये तु ते उभे ।
यद्यदिच्छति जात्या वै तत्तद्रत्न भवेत्तदा ॥ ३२ ॥

[5]तथा मुक्ताफल तत्तत् प्रतिभाति करोति च ।
गोगजाश्वसमुद्भूतमस्थि चादाय पाणिना ॥ ३३ ॥

शतार्ध मन्त्रित कृत्वा [6]प्रवालत्व प्रयाति तत् ।
शताभिमन्त्रित कृत्वा त्रपु सीस तथायसम् ॥३४॥

जायते कलधौत तु रजत यातिनिर्मलम् ।
यद्यद् गृहीत्वा देवेन्द्र य य धातु समीहते ॥३५॥

क्रुद्धो वा परितुष्टश्च तत्तत् कुर्यात्तु सोऽन्यथा ।
एवमश्ममयाना तु अन्यत्वमुपपद्यते ॥ ३६ ॥ ✓

३४. कृत्वेति । धारयति चेदिति शेष ।

[1] सन्निधौ च A C.
[2] B C omit three lines from here
[3] तत्र B G
[4] चाप्सितम् A B C
[5] यथा B C F
[6] प्राणयुक्त भवेदि तत् A G

या या मनसि वै यस्य विभूतिः प्रतिभाति च ।
तां तां ददाति तस्याशु धनधान्यगवादिकाम् ॥

लिखित्वा भूर्जपत्रे तु [1]यागन्यासक्रमेण तु ।
रोचनाकुङ्कुमाभ्यां तु सधारयति य. सदा ॥

सुवर्णवेष्टितं चाङ्गे लक्ष्मीमन्त्र शतक्रतो ।
तस्यायुषो भवेद् वृद्धि. सर्वत्र विजयी महान् ॥

प्राप्नुयान्महतीं पूजां यत्र यत्र च संविशेत् ।
इदमाराधनं प्रोक्तं श्रीकामानां विशेषतः ।
लक्ष्म्यास्त्रिदशशार्दूल मम या प्रथमा तनु. ॥४०॥

इति [2]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [3]लक्ष्मीमन्त्रसिद्धिप्रकाशो नाम
षट्चत्वारिंशोऽध्यायः

३८. रोचनाकुङ्कुमाभ्यामिति । लिखित्वेति पूर्वेणान्वय ।

इति षट्चत्वारिंशोऽध्याय·

---

[1] G omits this and the next quarter

[2] श्रीपञ्चरात्र A , पाञ्चरात्रे B

[3] A G. omit लक्ष्मीमन्त्र

# सप्तचत्वारिंशोऽध्यायः

श्रीः—

व्यूहानां प्रथमा लक्ष्मीर्मत्सङ्ज्ञैवोदिता हि या ।
तस्याः सिद्धिरियं प्रोक्ता द्वितीयाया निशामय ॥

न्यासोपाय पञ्चयागं सर्वं विद्धि पुरोदितम् ।
पूर्वोक्तं मण्डलं कृत्वा सितपीतं तदन्तरे ॥ २ ॥

किंतु वै पङ्कजं कुर्याद्विन्यसेत्तदनन्तरम् ।
विभोरुत्सङ्गगां कीर्तिं हृदादीनि यथा पुरा ॥ ३ ॥

क्रमाद्ध्यानं सखीनां च यथा तदवधारय ।
द्विभुजा हेमवर्णा च [1]कीर्तिरूपा स्मितानना ॥ ४ ॥

सुपुस्तकं करे वामे दक्षिणे चामरं करे ।
ध्यायेत् किंशुकवर्णाभं कान्तरूपं मनोरमम्[2] ॥ ५ ॥

तत्रानुगचतुष्कं तु चतुर्हस्तं सिताम्बरम् ।
वामदक्षिणहस्ताभ्यां मुख्याभ्यां तेषु चिन्तयेत् ॥

शङ्खमिन्दुशताभं च कदम्बाख्यं महाद्रुमम् ।
सपुष्पं षट्पदोपेतमपराभ्यां निबोध मे ॥ ७ ॥

पूर्णचन्द्रोपमं वामे दर्पणं दक्षिणे करे ।
मयूरव्यजनं शुभ्रं ध्यात्वैवं दर्शयेत्ततः ॥ ८ ॥

मुद्राः सर्वाः प्रतिस्वं याः साधकः पूजयेत्ततः ।
अर्घ्यपुष्पादिना सम्यग्जप्त्वा शक्त्याथ होमयेत् ॥

तिलानि चाज्यसिक्तानि गन्धशाल्यन्वितानि च ।
देवीरूपं तु होमान्ते कृत्वा पुष्पाञ्जनाम्बरैः ॥

एकान्ते विजने स्थित्वा मौनी मूलफलाशनः ।
जपेल्लक्षत्रयं [3]मन्त्रं जपान्ते होममाचरेत् ॥ ११ ॥

लक्षैकसंख्य देवेन्द्र तण्डुलैस्तिलमिश्रितैः ।
कापिलेन घृतेनैव तादृक्क्षीरयुतेन च ॥ १२ ॥

एकैकं च हृदादीनां सहस्रं चाथ होमयेत् ।
दद्यात्पूर्णाहुतिं पश्चात् क्षीरेणाज्यान्वितेन च ॥१३॥

पतितायां तु पूर्णायामायाति परमेश्वरी ।
साधु साध्विति वै ब्रूते स्थित्वाग्रे साधकस्य तु ॥

एह्येहि परमं धाम त्यजेदं भौतिकं पुरम् ।
उपभुङ्क्ष्वामरान् भोगान् मर्त्यमध्यगतोऽपि च ॥

मदीयेनाखिलं कर्म मन्त्रेण कुरु साधक ।
एवमुक्त्वा तु सा देवी गगनं च व्रजेत्तत. ॥१६॥

साधकः कीर्तिमन्त्रेण कुर्यात् कर्म यथेप्सितम् ।
ददाति यस्य यत्किंचित्तत्तस्याप्यक्षयं भवेत् ॥

तेनासौ लभते कीर्तिं यावच्चन्द्रार्कतारकम् ।
[4]प्रचण्डानां मनुष्याणां मध्यस्थो यदि बुध्यते ॥

वक्ति ससदि वा किंचित् प्राप्नुयाद्विपुलं यशः ।
अभिभूय जनान् सर्वानुत्कृष्टत्वं प्रपद्यते ॥ १९ ॥

जप्त्वा सिद्धान्नभाण्डं तु स्वल्पकालेऽन्नसकटे ।
यदेच्छति जनानां तु यथेच्छमशनं भवेत् ॥२०॥

ददाति चाक्षयं तस्य सप्ताहमनिश यदि ।
प्राप्नुयान्महतीं कीर्तिं यावदाभूतसम्प्लवम् ॥ २१ ॥

सुभिक्षे लवमात्रं तु आदाय कनकस्य च ।
परिजप्य सहस्रं तु विधिना परितः स्थितम् ॥

[1] G omits this and the next quarter.
[3] मन्त्री B F.
[2] हरम् C.
[4] B. C. omit three lines from here.

प्रयाति तत् प्रभूतत्व दीयतेऽर्थिजनस्य च ।
अव्युच्छिन्नं द्विसप्ताहं सशयं नाधिगच्छति ॥

तेनासौ महतीं कीर्तिं प्राप्नुयाल्लोकसत्कृताम्[1] ।
आदाय तोयकलशं नागेन्द्रभवनह्रदात् ॥ २४ ॥

प्रयायान्मरुभूमिं वै तत्र निम्ने तु भूतले ।
निक्षिपेत् पर्वताग्रे वा सहस्रपरिमन्त्रितम् ॥ २५ ॥

स पन्नगेश्वरस्तत्र परिवारसमन्वित. ।
रक्षन्नुदकमातिष्ठेद्यावत्तिष्ठति मेदिनी ॥ २६ ॥

तेनासौ महतीं लोके कीर्तिमाप्नोति वासव ।
काले तु बीजरोही च यदि देवो न वर्षति ॥२७॥

आदाय मृत्कण हस्ते तटाकजलमर्दितम् ।
तन्मध्यस्थं च वा [2]छिन्नं परिजप्य शतत्रयम् ॥२८॥

मुख्यातैस्तु सततं कृत्वा कीर्तिमनुं स्मरेत्[3] ।
प्रक्षिपेद्गगने तद्वै मेघत्वं प्रतिपद्यते ॥ २९ ॥

[4]पूरयेन्मेदिनीं सर्वां जलेन जलदस्तु सः ।
तदाज्ञया वसेत्तावत्तस्मिन् देशे स मेघराट् ॥३०॥

वर्षैस्तदुपयोग्यं च यावत् संपद्यते जलम्[5] ।
तेनासौ महतीं कीर्तिं प्राप्नुयाच्च त्रिलोकगाम् ॥३१॥

सपादयति तत्तस्य यस्य यन्मनसेप्सितम् ।
प्रभाव मन्त्रराजस्य कीर्त्याख्यस्य सुरोत्तम ॥३२॥

लिखितं पूर्ववद्बद्ध्वा हस्ते वा दक्षिणे करे ।
प्राप्नुयान्महतीं कीर्तिं [6]पूजामृद्धिं सरस्वतीम् ॥३३॥

एतत् सक्षेपत. प्रोक्तं कीर्तेर्मन्त्रस्य वासव ।
द्वितीयाया विधान मे तत्त्वात्तनुभृता वर ॥ ३४ ॥

एतद्विधानमातिष्ठन् कीर्तिमन्त्रस्य शोभनम् ।
प्राप्नुयाद्विमलां कीर्तिं सततेरपि भूतिदाम् ॥ ३५ ॥ ✓

इति [7]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे कीर्तिमन्त्रसिद्धिप्रकाशो नाम
सप्तचत्वारिंशोऽध्याय.

---

[1] विश्रुताम् B F
[2] कुम्भ B
[3] कीर्तिमनुस्मरेत् B F
[4] पूरयन् A B
[5] अखिलम् G
[6] F omits eight quarters from here.
[7] श्रीपाञ्चरात्र A श्रीपञ्चरात्रे B

# अष्टचत्वारिंशोऽध्यायः

श्री —

निधिं तृतीयतन्त्वा मे जयाया वृत्रसूदन ।
शृणु सिद्धिप्रकार च सिद्धसंघैरभिष्टुतम् ॥ १ ॥

कृत्वा तु पूर्ववन्न्यासमिष्ट्वा च हृदये जयाम् ।
मण्डल पूर्ववत् कृत्वा तन्मध्ये पङ्कज लिखेत् ॥२॥

नीलोत्पलाभतुल्येन रजसा च सुपत्रकम् ।
तत्रोत्सङ्गगता विष्णोर्हृदयान्नोजयेज्जयाम् ॥ ३ ॥

कर्णिकोपरि मन्त्राश्च न्यसेत् पूर्वक्रमेण तु ।
किंतु ध्यानानि सर्वेषा यथावदवधारय ॥ ४ ॥

नीलनीरदवर्णाश्च प्रसन्नवदनेक्षणा ।
पीताम्बरधरा सर्वा सख्य कनककुण्डला ॥५॥

सितचामरहस्ताश्च चित्रवेत्रलतोद्यता ।
निरीक्षमाणा वदन जयाया अजितस्य च ॥ ६ ॥

कुन्दकुड्मलवर्णाभा प्रसन्नमुखपङ्कजा ।
रक्ताम्बरधराश्चैव चतुर्हस्ता महाबला ॥ ७ ॥

धनुर्बाणकराश्चैव गदाचक्रकरान्विता ।
चत्वारोऽनुचरा ध्येया पुष्पाभरणभूषिता ॥

सर्वाश्च दर्शयेन्मुद्रा प्रतिस्व या प्रकीर्तिता ।
पूजयेच्च ततो भक्त्या होम कुर्यादनन्तरम् ॥ ९ ॥

तिलैः सिद्धार्थकोपेतैर्हविषा [1]गुल्गुलेन च ।
होमावसाने मन्त्री स्व कृत्वा रूप जयात्मकम् ॥

जयाहमिति वै बुद्ध्वा चेतसोपस्थित महत् ।
तीरस्थान समासाद्य निश्शङ्क जनवर्जितम् ॥११॥

[2]वर्मणास्त्रेण दिग्बन्ध कृत्वा दुष्टनिबर्हणम् ।
प्रारभेत जप पश्चात् पयोऽन्नफलभुक् सदा ॥१२॥

प्रणिपत्य हरिं भक्त्या प्राक् स्वमन्त्रेण वासव ।
एकान्तशीलो लघ्वाशी मौनी ध्यानपरायण ॥

जपेल्लक्षचतुष्क तु जपान्ते होममाचरेत् ।
समित् प्रादेशमात्रा तु रक्तचन्दनसभवा ॥ १४ ॥

तासामयुतमव्यग्रो घृताक्ताना तु होमयेत् ।
सिद्धार्थैर्नियुते द्वे च मधुमिश्रैर्महामते ॥ १५ ॥

अयुत नियुत चाथ जुहुयादसितैस्तिलैः ।
मधुत्रितयसयुक्तैरन्ते पूर्णाहुतित्रयम् ॥ १६ ॥

मधुक्षीरघृतैः शक्र क्रमेण परिहोमयेत् ।
ततो भगवती देवी समायाति जया स्वयम् ॥

सिद्धास्मीति च ते पुत्र मन्मन्त्रेण समाचर ।
यदभीष्ट तु वै कार्य निःशङ्को विगतज्वर ॥ १८ ॥

इत्युक्त्वादर्शन याति शक्तिर्नारायणात्मिका ।
तत कर्माणि कुर्वीत विविधानि त्वनेकश ॥१९॥

लोकेऽस्मिन् यान्यभीष्टानि स्वात्मनश्च परस्य वा ।
तत्राप्युद्देशतो वक्ष्ये शृणु तत्त्वेन वज्रधृत् ॥२०॥

ज्वालावद्रसना ध्यायेद्देवीमन्त्रेण साधक ।
उद्ग्राहयति वै यस्य यस्मिन् यस्मिन् हि वस्तुनि ॥

विजित्य न्यायतस्तं वै जयमाप्नोत्ययत्नत ।
गजाश्वशस्त्रभृत्पूर्णमपि सैन्य बलान्वितम् ॥ २२ ॥

[1] गुग्गुलेन F

[2] वर्मास्त्रेण च G

दृष्ट्वान्यस्य [1]समायुक्तं हन्तुमभ्युद्यतं[2] रणे ।
परिजप्य धनुः खड्गं खेटकं बाणपञ्चकम् ॥ २३ ॥

प्रेरयेद्यस्य वै दत्त्वा स गत्वा तु चमूमुखम् ।
विदारयति चैकाकी जयमाप्नोति शाश्वतम् ॥ २४ ॥

ध्यात्वा दक्षिणपाणिस्थं त्रिकोणं चाग्निमण्डलम् ।
तन्मध्ये चिन्तयेद्देवीं परिवारसमन्विताम् ॥ २५ ॥

मत्तेभसिंहसर्पाणामशनीनां च दर्शने ।
क्षिप्रं पराङ्मुखा यान्ति दृष्ट्वा हस्ततलं तु तत् ॥

खादिरं मुसलं स्पृष्ट्वा चादाय शतमन्त्रितम् ।
कृत्वा गत्वा बिलद्वारं चतुर्वर्णं जयान्वितम् ॥ २७ ॥

मुसलाहनना[?]न्यष्टौ दद्यात् तत्र शनैः शनैः ।
देवीमन्त्रेण देवेश स्वाक्षसपुटितेन तु ॥ २८ ॥

फट्कारान्तेन तु ततो बिलयन्त्रं यजेदथ ।
समस्तजनसंयुक्तो विशेत् साधकसत्तमः ॥ २९ ॥

भित्त्वा यन्त्राण्यनेकानि जित्वा दानवपुंगवान् ।
जनानां योजनं तत्र कृत्वा कान्तागणैः सह ॥ ३० ॥

पीत्वा तु सात्त्विकं पानं स्वहस्तेन महाबलः ।
स निर्याति स्वमार्गेण तेनैव स्वनिवेशनम् ॥ ३१ ॥

करोति यदि देवेश मतिं मन्त्री जगत्त्रये ।
जयं प्रत्यविचारेण गदाचक्रकरोद्यतः ॥ ३२ ॥

पाशाङ्कुशधरो वाथ जयं प्राप्नोति नान्यथा ।
लिखेद्रोचनया भूर्जे कुङ्कुमेन घनेन च ॥ ३३ ॥

संपुटीकृत्य वै नाम निधाय जनमध्यगम् ।
तदा सुजयमाप्नोति दिव्यैः सर्वैस्तु लीलया ॥ ३४ ॥

विलिख्य चन्दनेनैव पयसा कुङ्कुमेन च ।
धारयेद्यो गले वक्त्रे[3] करे वामेऽथ दक्षिणे ॥ ३५ ॥

सर्वदा तु जयं शक्र संप्राप्नोत्यविचारतः[4] ।
जयार्थं त्रिदशेशान मन्त्रं वै यत्र कुत्रचित् ॥ ३६ ॥

मन्त्री प्रयोजयेच्छश्वत् तत्र तत्राप्नुयाज्जयम् ।
जया नाम तृतीया मे या तनुः परिकीर्तिता ।
तस्या विधानमित्येतत् तव शक्र प्रदर्शितम् ॥ ३७ ॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे जयामन्त्रसिद्धिप्रकाशो नामाष्टचत्वारिंशोऽध्यायः

---

[1] समयान्तं A. F. G.  [2] अभ्युत्थितं B.  [3] वक्त्रे A. C. G.
[4] अविचारितः F.  [5] श्रीपञ्चरात्र A ; श्रीपाञ्चरात्रे B.

# एकोनपञ्चाशोऽध्यायः

श्री —

चतुर्थी या तनुर्मा श्री मायाख्या मम वासव ।
तस्या विधानमधुना शृणु मन्त्रक्रियान्वितम् ॥ १ ॥

मूर्त्यङ्गसच्चिदासारया मायीया मन्त्रसततिम् ।
स्वहस्ते पूर्ववन्न्यस्य विग्रहे तदनन्तरम् ॥ २ ॥

हृदयान्तर्गता चेशु भोगे सर्वैश्च पूर्ववत् ।
बाह्ये तु मण्डल कृत्वा मध्ये च कमल शुभम् ॥

तत्रोत्सङ्गगता विष्णोर्हृदयादवतार्य च ।
आराधयेत्ततो मायामङ्गसख्यादिसयुताम् ॥ ४ ॥

श्रामण्याद्यास्ततो ध्येया सख्य कमललोचना ।
[1]सिताम्बरधरा दिव्याश्चतस्रो रत्नभासुरा ॥ ५ ॥

चामराङ्कुशहस्ताश्च बद्धपद्मासनस्थिता ।
मायामयादयो ध्येयाश्चत्वारोऽनुचरास्तथा ॥ ६ ॥

सपूर्णसर्वावयवा स्निग्धालिकुलसनिभा ।
चतुर्भुजा महाकाया सौम्यवक्त्रा स्मितानना ॥

केयूराभरणोपेता पीताम्बरधरास्तथा ।
हारनूपुरसयुक्ता नानाकुसुममण्डिता ॥ ८ ॥

तुषारधूलिधवला खड्गपाशकरोधृता ।
बाण कार्मुकमन्यस्मिन्नातपत्र करद्वये ॥ ९ ॥

दर्शयित्वा तथा मुद्रा यस्य यस्य हि या स्मृता ।
होम तदनु कुर्वीत तिलै सिद्धार्थकान्वितै ॥ १० ॥

ततो नियममाश्रित्य कृत्वा तदनु वासव ।
देवीरूप स्वमात्मान भावेनाव्यभिचारिणा ॥ ११ ॥

प्रयायाद्विजनस्थान[2] प्रौढोत्तरसहायवान् ।
जपेल्लक्षाणि वै सप्त पूर्वोक्तविधिना व्रती ॥ १२ ॥

क्षीरमूलफलाहारो देशकालवशात्तु वै ।
अयाचितैर्भिक्षाशी यावकेनापि वर्तयन् ॥ १३ ॥

स्वशिष्यसाधित धान्न मन्त्रपूतमसैन्धवम्[3] ।
तैलमासविनिर्मुक्त सध्याकाले ह्युपस्थिते ॥ १४ ॥

[4]आतृप्तेरभिभुञ्जीत भावित मधुसर्पिषा ।
जपान्ते विधिवन्मन्त्री होम कुर्यात् प्रयत्नत ॥ १५ ॥

बला मोटा तथा मासी चक्राङ्गीं नागकेसरम् ।
चन्दन कुङ्कुमक्षोद रजनीचूर्णमेव च ॥ १६ ॥

मेलयेत् सुघृताना च तिलाना[5] मधुना तत ।
भावयेत् सघृतेनैव[6] त्रिलक्ष जुहुयात् तत ॥ १७ ॥

मध्यमानामिकाभ्या च साङ्गुष्ठाभ्या पुरदर ।
अन्तेऽयुतत्रय चैव समिधा परिहोमयेत् ॥ १८ ॥

भ्रमानार्कतरूत्थाना खादिराणा तत परम् ।
सुरदारुमयीना च तृतीयमयुत तत ॥ १९ ॥

दद्यात् पूर्णाहुतिं सम्यक् सुशुद्धेनान्तरात्मना ।
पतिताया तु पूर्णायामायाति गगनान्तरात् ॥ २० ॥

६. चामराङ्कुशहस्ता इत्यनेन द्विभुजत्व द्योत्यते । मायामयादयोऽनुचरा पञ्चचत्वारिंशाध्यायेऽत्रैव नाम्ना निर्दिष्टा । १९. राजतर कर्णिकार । सुरदारु देवदारु ।

[1] पीताम्बर C
[2] निजयस्थानं I
[3] पूर्तं सुतण्डुलम् B G
[4] आवृति I
[5] तिलानं C, तिलास्तान् I
[6] स्वधिताम च I

परिवारान्विता माया भाषते साधु साध्विति ।
कुरु कार्यमभीष्ट च मन्मन्त्रेणाधुना व्रज ॥ २१ ॥

इदमुक्त्वा व्रजेत् तूर्णं देवी [1]विष्णुनिकेतनम् ।
[2]ततस्तु साधकवर कर्माणि विविधानि च ॥

प्रारभेताञ्जसा शक्र यान्यभीष्टानि चेतसा ।
आत्मार्थे वा परार्थे वा लेशतस्तानि मे शृणु ॥

प्रजप्यामलक विल्व सक्तून्नृपगृह[3] विशेत् ।
कोशस्याग्रे विनिक्षिप्य यत्र यत्र स्थित स तु ॥२४॥

गगनात् प्रपतेत् तूर्णं यद्यद्वित्त समीहते ।
यद्यद्वाभरण श्लाघ्य यद्यद्वा वसन शुभम् ॥ २५॥

एव वै व्रीहिगुलिका[4] तथैव तिलतण्डुलम् ।
क्षिपेद्धान्यकुले पूर्णे गोष्ठागारेऽथ खातके ॥ २६ ॥

राजकीये तथात्मीये यत्र यत्र स्थितस्तत ।
यद्यत् समीहते धान्य सस्य वा तण्डुलान्वितम् ॥

तत्तदग्रेऽथ गगनात् पतत्येव यथेप्सितम् ।
एवमेव तु सिद्धान्नगुलिका परिजप्य च ॥ २८ ॥

क्षिप्त्वा महानसोद्देशे सिद्धान्न कर्पयेत् क्षणात् ।
गुलिका गोमयेनैव कृत्वा तु बदरीसमाम् ॥ २९ ॥

निक्षिप्य गोव्रजस्यान्त सप्तवाराभिमन्त्रिताम् ।
ध्यानमात्रात् क्षणस्यान्ते दधिक्षीराज्यपूरितान् ॥

भाण्डाश्च प्रपश्यन्ति पश्येद्यत्र यत्र स्थितो व्रती ।
प्रजप्य बदर सम्यक् फलमन्यत्तु वा क्वचित् ॥३१॥

क्षिपेन्मधुवने रात्रौ फलावृष्टिं करोति च ।
सुपुष्पवाटिकाया तु पुष्पमेक विनिर्दिशेत् ॥ ३२॥

जप्त्वा यावत्य मन्त्री पुष्पाण्यास्पर्शयेत् क्षणात् ।
यत्र यत्र तदङ्घ्रोर्ध्व सप्तवार विनिक्षिपेत् ॥ ३३ ॥

तत्र तत्र तु तत् तिष्ठेत् सकल्पे तु कृते सति ।
यथेच्छ[5] तु समाकृष्ट तत्र तत्र तु तद् व्रजेत् ॥३४॥

न चापि साधकवर सङ्कर्णो[6] जायते क्वचित् ।
कृत्वाङ्गारकण चैव शत जप्त समाहित [7] ॥ ३५ ॥

क्षिपेत् सलिलमध्ये तु ज्वलत् तद् दृश्यते जलम् ।
कुशाग्रस्थ जलकण शतवाराभिमन्त्रितम् ॥ ३६ ॥

कृत्वा हुताशराशौ तु ज्वलमाने विनिक्षिपेत् ।
भवेत् पानीयमिव च स वह्निर्दृश्यते क्षणात् ॥३७॥

वालुकापरिपूर्णं चाप्यरण्य तु तृणोज्झितम् ।
दृष्ट्वा तत्र विनिक्षिप्य तृण द्विशतमन्त्रितम् ॥ ३८ ॥

पुष्पपत्रसमाकीर्णं पत्रपल्लवसकुलम् ।
कुर्यान्नन्दनतुल्य तत् तोयराशिसमावृतम् ॥ ३९ ॥

[8]नानाविहगसपूर्णं पत्तनोपवनान्वितम् ।
पुरप्राकारसपूर्णं देवतायतनान्वितम् ॥ ४० ॥

गेयवेदध्वनियुत ललनाभिश्च शोभितम् ।
नृपाणामेतदाश्चर्य[9] दर्शनीयं सदैव हि ॥४१॥

[10]तन्नदकेष्वरण्येषु निरत्नेषु सदैव हि ।
इच्छयापस्तथान्नानि भोगाश्च विविधानपि ॥४२॥

करोति मन्त्रितैर्लोष्टैर्गोमयेनाथ्सरल्यया ।
अरिवग गृहीतास्त्र समुखे सति तिष्ठति ॥ ४३ ॥

ओघाधैन तपोयुक्त एकाकी यदि तिष्ठति ।
जपमानस्तु वै मन्त्र सकल्प्य मनसा महत् ॥४४॥

आत्मीय च वर्ल पत्तिस्यन्दनाश्वगजाकुलम् ।
तस्य सपद्यते क्षिप्र चमूर्वीरपराक्रमा ॥ ४५ ॥

दृष्ट्वा ता विमुख याति द्रतीनस्य रिपोर्बलम् ।
करोति शत्र यत्किंचिन्मनसा मन्त्रमुच्चरन् ॥४६॥

[1] विष्णोर्निकेतनम् F [2] ता स B C. I [3] भूगृह C [4] गुलिका A I
[5] यथेष्ट C. [6] सौर्णो B C [7] समाहितम् C. [8] नानाविधा I
[9] आर्य B [10] A. omits this line

[1]व्यलीक सत्यभूत च तत्तथा परिदृश्यते ।
दृष्ट्वा तु पादप शुष्क ताडयेच्चरणेन तु ॥ ४७ ॥

जपमानो महामन्त्र [2]स स्यात् पुष्पफलाकुल ।
पत्रपुष्पफलोपेत पाणिभ्या मन्त्रमुच्चरन् ॥ ४८ ॥

पीडयेत् पादप मन्त्री स शोषमधिगच्छति ।
पर्वताग्रस्थितो मन्त्र [3]तन्नाशार्थं जपेद्यदि ॥ ४९ ॥

पतेदधस्ताच्छैलस्तु यावदिच्छति साधक ।
तुग प्रोत्थापयेत् पश्चात् पातालात् पर्वतोत्तमम् ॥

चान्दनेन रसेनैव मन्त्र पद्मोदरे न्यसेत् ।
पत्रेष्वङ्गानि चालिख्य सुशुभे दिवसे तत ॥५१॥

पूजयित्वाथ पुष्पाद्यैर्वैर्मन्त्रैनैवमप्येत्तथा ।
पूर्ववद् धारयेद्यन्त्र तस्य सर्वा विभूतय [4] ॥५२॥

[5]सम्यगाविर्भवन्त्यत्र लोके निष्कण्टक स च ।
सुभगश्चैव दीर्घायु परत्र सुखमाप्नुयात् ॥ ५३ ॥

मूर्तेश्चतुर्थ्या श्चारे प्रभावोऽय महाद्भुत ।
लेशतो दर्शितस्तस्या साकल्य मम दुर्वचम् ॥ ५४ ॥

देवीचतुष्टयस्यैष सिद्धिसघ समासत ।
किंचित्तु लेशत प्रोक्त साधकाना हिताप्तये ॥

तेभ्यो दिव्यानि भौतानि प्रयच्छति शुभानि च
विमला च मन शुद्धिमन्ते च परम पदम् ॥ ५६ ॥

प्रकाशयति भक्ताना वैष्णव चाविनाशितम् ।
विस्तीर्णामिति मा लक्ष्मीमियतीभिर्विभूतिभि ॥

भजेत विविधैर्भावै क्षेम कृत्वा मन स्थितम् ।

शक्र —

नमो देवादिदेव्यै ते नमो वैकुण्ठवल्लभे ॥ ५८ ॥

कस्मिन् लक्ष्ये मन कृत्वा भजेयं त्वा सरोरुहे ।

श्री —

एको नारायणो हस पाड्गुण्यामृतवारिधि ॥

तस्याह परमा शक्तिर्विष्णोरनपगामिनी[6] ।
साहमङ्कस्थिता तस्य यथा ते पूर्वमीरिता ॥ ६० ॥

लक्ष तदेव ते शक्र मनस स्थैर्यकारणम् ।
सर्वलक्षणसपन्ना सुवर्णरजतादिभि ॥ ६१ ॥

निर्माय मा विभोरङ्कस्थायिनीं शास्त्रदर्शनात् ।
प्रतिष्ठाप्य विधानेन तैस्तैर्भावैर्भजस्व माम् ॥ ६२ ॥

शक्र —

नमस्ते जगदावासे मनोनयननन्दिनि ।
युवयो स्थापन कीदृग्बिम्बे पाड्गुण्यनिर्मिते ॥

श्री —

सर्वभूतो यथा विष्णुर्देव पाड्गुण्यविग्रह ।
सर्वभूतात्मभूतस्था तादृश्येवाहमद्भुता[7] ॥ ६४ ॥

प्रतिष्ठिताया सर्वत्र मम नारायणस्य च ।
वस्तुत का प्रतिष्ठा स्यात् सर्वं यद्वैष्णव यश ॥६५॥

तमिम वास्तव भावमारूढ मानस यते ।
अर्चा प्रतिष्ठा चेत्येते विकल्पा प्रविजृम्भिता ॥

शृणु तत्र प्रतिष्ठा मे यथावद्बलसूदन ।
यया विहितया देही कृतार्थत्व प्रपद्यते ॥ ६७ ॥

निर्माप्य शास्त्रत सम्यग्योगोक्त रूपमावयो ।
सूक्ताभ्या सपवित्राभ्या स्नापयेत् तीर्थवारिणा ॥

आच्छाद्य नववस्त्रेण विप्रैरध्यापयेत् सह ।
विमलैर्धर्मतत्त्वज्ञैस्त्रयीसात्त्वतशास्त्रयो ॥ ६९ ॥

[1] अलीकं I
[2] स्यात्स I
[3] नाशार्थाय I
[4] हि सिद्धय G
[5] G omits three lines from here
[6] श्रीरनपायिनी B G
[7] महाद्भुता F

तारकं तारिकां चैव तथैवाप्यनुतारिकाम् ।
सूक्तं च शाकुनं चैवाप्यधीयीरन् पवित्रवत् ॥७०॥

सूर्येऽप्यास्तमयं प्राप्य तद्बिम्बं वस्त्रवेष्टितम् ।
ऋतं चेत्यादिसूक्तेन तथा सारस्वतेन च ॥ ७१ ॥

ऋग्भिर्हिरण्यवर्णाभिः कुर्याद्वार्यधिवासनम् ।
उद्गते विमले सूर्ये कुर्याद्दिक्स्थापनं ततः ॥ ७२ ॥

उत्तिष्ठ ब्रह्मण इति प्रापयेयुश्च वेदिकाम् ।
अपनीय ततो वस्त्रं स्नापयेच्छुद्धवारिणा ॥ ७३ ॥

याम्ये च वेदिभागे तु मृद्वास्तरणशोभिते ।
बिम्बं पूर्वशिरस्कं तु शाययेज्जपपूर्वकम्[1] ॥ ७४ ॥

ततः शलाकां सौवर्णीं गृहीत्वास्त्राभिमन्त्रिताम् ।
[2]उल्लिखेन्नयने नेत्रमन्त्रजापी शलाकया ॥ ७५ ॥

स्नातः शुद्धाम्बरः शिल्पी दिव्यदृष्ट्यावलोकितः ।
[3]अस्त्रमन्त्रितशस्त्रेण नेत्रे प्रकटतां नयेत् ॥ ७६ ॥

पूरयेन्मधुसर्पिर्भ्यां तत्पात्रे च प्रदर्शयेत् ।
सालंकारं धेनुयुग्मं तस्मिन् काले निवेदयेत् ॥

नयनोन्मीलनीयं तत् सर्वं दद्यात्तु शिल्पिने ।
ततः सितेन सूत्रेण बद्ध्वा राजीः सुवासमि[4] ॥

षड्भीयाताराया तस्य कौतुकं दक्षिणे करे ।
भद्रपीठे समारोप्य तथा बिम्बं तु सुस्थिरे ॥७९॥

आधारादिक्रमोपेते सम्यग्भावेन पूजिते ।
ततो बिम्बं निरीक्षेत धिया[5] षाड्गुण्यपूरितम् ॥

ताडयित्वास्त्रमन्त्रेण कवचेनावगुण्ठ्य च ।
सर्वौषध्युदकेनैव स्नापयेन् फेनलेन च ॥ ८१ ॥

संमृज्याहतवस्त्रेण कौतुकं मोचयेत्ततः ।
मन्त्रविघ्नक्रमन्त्रेण दद्यादर्घ्यं तु मूर्धनि ॥ ८२ ॥

भावयित्वा ततो बिम्बं बिम्बं चारुरुचेरिव ।
पूजितैर्मन्त्रितैः शुद्धैः कलशैर्द्रव्यपूरितैः ॥ ८३ ॥

षोडशच्छदपद्मोत्थपत्रषोडशकस्थितैः ।
प्रथमं पञ्चगव्येन गोमूत्रेण द्वितीयकम् ॥ ८४ ॥

तृतीयं गोमयाम्भोभिस्तुर्यं श्वेताग्निभस्मना ।
गजगोवृषशृङ्गाग्रवल्मीकोर्व्यम्बुना परम् ॥ ८५ ॥

शालिक्षेत्रनदीपद्मवनाद्युर्व्यम्बुना परम ।
सप्तमं सर्षपाम्भोभिः सर्वौषधिभिरष्टमम् ॥८६॥

क्षीरेण नवमं दध्ना दशमं सर्पिषा परम् ।
द्वादशं मधुना सर्वबीजाम्भोभिस्त्रयोदशम ॥८७॥

फलैः परं परं धान्यैः [6]सुगन्धाद्भिस्तु षोडशम् ।
अभिमन्त्र्य हृदा पूर्णमेकैकं कलशं पुरा ॥ ८८ ॥

स्नापयेन्मूलमन्त्रेण तैः षोडशभिरादरात् ।
उदकान्तरितैः सार्घ्यपुष्पधूपप्रदीपकैः ॥ ८९ ॥

[7]मसूरमाषगोधूमचूर्णैरथ निघृष्य च ।
प्रक्षाल्य पयसा मूर्ध्नि तारिकां विन्यसेन् पराम् ॥

ततः सूक्ष्मां ततः स्थूलां स्थानेष्वेषु क्रमात् सुधीः ।
मूर्ध्नि वक्त्रेऽक्ष्णयोः कर्णे हृदि नाभौ तु पृष्ठतः ॥

कटिमूले तथोर्वोश्च जानुगुल्फेऽथ पादयोः ।
तारकं विन्यसेदेवं तथैवाप्यनुतारिकाम् ॥ ९२ ॥

न्यस्यैवं बीजं सूक्तं न्यसेच्छ्रीसूक्तमप्यथ ।
[8]शिरो मे श्रीर्यजुर्भिश्च न्यसेद्विज्ञानुरूपकम् ॥९३॥

७०. शाकुनं सूक्तम् ऋग्वेदे (म० २.सू० ४२. ऋ. १) द्रष्टव्यम् । ७८. राजिः कृष्णसर्षपः । ९३. शिरो मे श्रीरित्यादि । तैत्तिरीयब्राह्मणे (२-६-५-३) द्रष्टव्यम् ।

[1] पूर्वकं B. [2] उल्लिखेच्च ततो नेत्रे I. [3] अस्त्रमन्त्रेण शस्त्रेण I.
[4] सुवासमी I. [5] धिया I. [6] सुगन्धैस्तु I.
[7] मसूरमाष I. [8] I. omits four lines from here.

कुर्याच्च होतृविन्यास यथा प्रोक्त यजुर्मये ।
एन विन्यस्य पुरपे मयि पश्चात् समाचरेत् ॥ ९४॥

विन्यस्य पूर्वं श्रीसूक्त शिरो मे श्रीर्यजूपि च ।
ततश्च होतृविन्यास विधायैव तनुद्वये ॥ ९५ ॥

कुण्डे पूर्वविधानान्ते जुहुयात् सर्वशान्तये ।
उक्ताश्च वर्तमानाश्च यावन्तो मन्त्रजातय ॥

जुहुयात् तावतीभिस्तु सर्वदोपप्रशान्तये ।
ऋच पूर्वदिशाभागे दक्षिणस्या यजूपि च ॥९७॥

प्रतीच्या चैव सामानि सौम्य आथर्वणानि च ।
समीपे सात्त्वतान्मन्त्रानेवमध्यापयेद् द्विजान् ॥

पूर्वं पोडशपत्रा न्तर्णिकार्थैश्चतुर्दिशम् ।
कलशै स्नापयेन्मन्त्रैस्तारतारानुतारवत् ॥ ९९ ॥

यसवस्त्वेति मन्त्रेण पुष्पाम्भ कलशेन तु ।
रुद्रास्त्वा ग धतोयेन स्वर्णाम्भ कलशेन तु ॥१००॥

आदित्यास्त्वेति विश्वेति रत्नोदकलशेन तु ।
तारतारानुताराभिरभिपिञ्चेश मन्त्रवित् ॥ १०१ ॥

तत शुद्धोदमादाय परान्त्रिविधा मना ।
तारया त्वभिपिच्याथ तथार्घ्यं मूर्ध्नि निक्षिपेत् ॥

समाभ्य ततो विम्ब चन्दनाद्यनुलेपनै ।
पादप्रभृतिभिभागै प्रापणान्तै समर्चयेत् ॥

मुद्रा यद्वाचंयेत् पश्चात् पीठं ब्रह्मशिलान्वितम् ।
समस्ताध्वमय पीठं ध्यायेद्वैष्णवमुत्तमम् ॥१० ॥

आधारशक्तिभूता च दिव्या ब्रह्मशिला स्मरेत् ।
[1]पीठब्रह्मशिले त्वेव सहभावेन निर्मिते ॥ १०५ ॥

पृथग्विनिर्मिते ते च कुर्यात्तु शयनोत्तरे ।
शयन स्थिरविम्बस्य वक्ष्यमाण विधीयते ॥१०६॥

प्रासादगमन चैव पीठब्रह्मशिलास्थिति ।
तत्प्रतिष्ठापन चैव बिम्बस्यावाहन तत ॥ १०७ ॥

द्वादशाङ्गकलान्यासस्त्र्यहाद्युत्सवसाधनम् ।
[2]तथावभृथकर्मादि सर्वमेतद्विधीयते ॥ १०८ ॥

चलविम्बप्रतिष्ठा च चतुष्कलशसेचने ।
आराध्यावाहन कुर्याद्यथा तदवधारय ॥ १०९ ॥

कार्यमावाहनात् पूर्वं भोगाना त्रितय क्रमात् ।
[3]स्वरूपेऽविकृते शुद्धे निस्तरङ्गे निरामये ॥ ११० ॥

परातीते गुरु स्थित्वा पुन स्वहृदयाम्बुजे ।
शक्तिं सत्तामयीं विष्णोरनुरूपामनुस्मरेत् ॥ १११ ॥

यद्बिम्ब संस्कृत पूर्वं तन्मय तदनुस्मरेत् ।
अग्नीषोममयौ भावौ स्वदेहस्थावनुस्मरेत् ॥११२॥

ऊर्ध्वाधोव्यापकत्वेन स्थितौ परमभास्वरौ ।
यथात्मनि तथा बिम्बे यथा बिम्बे तथात्मनि ॥

दक्षिणेन ततो यायादग्निमार्गेण देहत ।
प्रविशेद्वाममार्गेण बिम्बस्य हृदय धिया ॥११४॥

यथा मनात्मा हृदये स्वानुभूतो ह्यनूपम ।
तथा तद्धृदयान्त स्थमात्मानमनुसंस्मरेत् ॥

९४. होतृन्यासमिति । दश होतारस्यो मन्त्रा तैत्तिरीयारण्यके पठिता । तेषा न्यासमित्यर्थ । १००. वसवस्त्वेति । रुद्रास्त्वेति । (तैत्तिरीयब्राह्मणम् २-७-१५-५) १०१. आदित्यास्त्वेति । विश्वेति । (तैत्तिरीयब्राह्मणम् २-७-१५-५)

[1] पीठ ब्रह्मशिले A पीठब्रह्मशिले B
[2] A B C omit three lines from here
[3] तद् ब्रह्म A B

दृष्ट्वा स्वरश्मिखचितमानन्दापूरितं महः ।
तस्मिंस्तस्मिन् परब्रह्मण्यैकध्यं[1] तस्य चिन्तयेत् ॥

एवमेकार्णवीकृत्य वैष्णवं तत् परं महः ।
तिष्ठेत् समादधानस्तदस्पन्दं स्वमनो दधत् ॥११७॥

मनसि[2] स्पन्दमानेऽथ स्मृत्वा तं स्वधिया[3] पुनः ।
बिम्बाद् दक्षिणमार्गेण बहिर्निष्क्रम्य मेधया ॥११८॥

सविशेद्वामभागेन स्वमेव हृदयाम्बुजम् ।
योगोऽयं द्रव्यबिम्बस्य [4]नाडीवृन्दप्रवर्तकः ॥११९॥

योगान्तरमथातिष्ठेत् तस्य सर्वेशिताप्तये ।
ध्यायीतातो हृदम्भोजात् तारिकां तारिणीं गृणन् ॥

यायादूर्ध्वप्रवाहेण परं पद्मनामयम् ।
ततः स्मरेत् परं[5] तच्च [6]भोगं प्राप्तं स्वयेच्छया ॥

ततस्तत्स्पन्दमादाय विज्ञानैश्वर्यशक्तिमत् ।
अनाकुलं पुनर्यायात् पथा तेन हृदम्बुजम् ॥१२२॥

दक्षिणेन विनिष्क्रम्य परस्परसहायवान् ।
तद्बिम्बहृदयाम्भोजं वामेनैव तु सविशेत् ॥१२३॥

ध्यात्वा पूर्ववदेकत्वं विनिष्क्रम्योर्ध्वमार्गतः ।
द्वादशान्तं समाविश्य पूर्ववत् स्पन्दमेत्य च ॥१२४॥

यथाबिम्बं हृदम्भोजं तेनैव प्रविशेत् सुधीः ।
ततोऽग्निना विनिष्क्रम्य सव्येन हृदयं विशेत् ॥

स्मरेत् स्पन्दमथैश्वर्यं स्वचक्षुर्द्वयगोलकम् ।
परस्परं निरीक्ष्याथ तन्वानावेकतामिव ॥ १२६ ॥

अन्योन्यालोकनाभ्यां तावनुविद्धावनुस्मरेत् ।
एतदीश्वरसंधानं नाम योगोऽनुवर्णितः ॥ १२७ ॥

येन सर्वेषु बिम्बेषु सर्वेशित्वं सदा भवेत् ।
अथ शब्दानुसंधानं मन्त्रबिम्बैकता हि या[7] ॥

सा [8]स्मृता वैष्णवी सूक्ष्मा शक्तिर्विष्णोर्निरञ्जना ।
तत्सामान्यमयो भूत्वा तस्मिन् स्वं लोपयेद् ध्वनिम् ॥

सर्वसंकल्पहीनं तच्छब्दभावविवर्जितम् ।
[9]शान्तं विद्धि परं सूक्ष्मं [10]तत्परं बोधनिर्मितम् ॥

ततः शब्दार्थसंस्कारसार्धस्पन्दोद्यमो हि यः ।
तं स्मरेत् परमं सूक्ष्मं पश्यन्तीपदमुन्मिषत् ॥१३१॥

संकल्पपदवीरूढस्तत्संस्काररञ्जितः ।
स्वकं वाच्यं पृथक्कृत्य तदुद्दिश्योदयो हि यः ॥

शब्दं तं मध्यमं रूपं स्मरेद्धृत्पद्ममध्यगम् ।
नानास्थानप्रयत्नोत्थैः करणश्वसनेरितैः ॥ १३३ ॥

११९. नाडीवृन्देति । अत्रेदं पारमेश्वरवचनमनुसन्धेयम् — "योगोऽयं मुनिशार्दूल बिम्बस्य द्रव्यजस्य च । आपादमूर्धपर्यन्तं नाडीवृन्दस्य व्यञ्जकः ॥ येन सर्वेशिता विप्र बिम्बस्यास्य प्रजायते । तं योगमधुना वच्मि एकाग्रमवधारय ॥" (१५.४४७,४४८) इति । १२२. स्पन्दः क्षोभम् । तथा च पारमेश्वरे — "अव्युच्छिन्नोऽप्यथोऽक्षुब्धः स्वेच्छया क्षोभमेति च ।" (१५.४५१) इति ।

## इत्येकोनपञ्चाशोऽध्यायः

[1] एकत्वं I [2] मनस्वी F [3] द्विधा A G
[4] नाडीबिम्ब A नानाबिम्ब I [5] पदं I [6] क्षोभं I
[7] अभिधा I [8] सत्ता G I [9] I omits this line
[10] तद्वेर G

तरङ्गैर्व्यक्तिमायाति स्फुटो वर्णपदादिकै ।
[1]यो वाचकस्वरूपेण तत्पद वैखरीं विदु ॥१३४॥

बोधशब्दात्मक तस्मात् परसूक्ष्मादिभेदवत् ।
वपुरित्यनुसधाय तद्बिम्ब भावयेत् तत ॥१३५॥

शब्दसहारयोगेन स्व वपुस्तच्च बिम्बकम् ।
निष्कम्पबोधशब्दात्म[2] स्मृत्वा तद्द्वितय तथा ॥

पूर्वोक्तक्रमयोगेन शब्दब्रह्म ह्यनाहतम् ।
पश्यन्त्यादिक्रमेणैव शब्दबिम्बमय[3] स्मरेत् ॥१३७॥

एव शब्दानुसधान कृत्वा मन्त्रानुसहितम् ।
आरभेत सुधी कर्म तस्य योगोऽयमुच्यते ॥

अनाहत पर नाभौ पश्यन्तीपदमागतम् ।
नालसूत्रमिवान्त स्थ मध्यमे हृदयाम्बुजे ॥१३९॥

स्थित्वा तद्वैखरीद्वारा बिम्बान्त सविशत् स्मरेत् ।
सुस्वनादस्वरूप च मन्त्रैर्व्याप्त तथाखिलै ॥१४०॥

[4]मन्त्रात्मान जगन्नाथ बिम्बहृन्मध्यग स्मरेत् ।
एव सस्थापित बिम्ब भुक्तिमुक्तिफलप्रदम् ॥१४१॥

आवाहन तत कुर्याद् बिम्बेऽस्मिन् हरिमेधस ।
पूर्वमावाहयामीति तथा सर्वाङ्गमन्त्रत ॥१४२॥

प्रवेशनिर्गमौ लक्ष्म्या स्मरेद्देवस्य देहत ।
ऋग्भि पञ्चभिराद्याभिस्तस्या आवाहन स्मृतम् ॥

द्वादशाङ्गकलान्यास देवन्यासवदाचरेत् ।
भवत न सुमनसाविति द्वावनुसान्त्वयेत् ॥१४४॥

एतावती चले बिम्बे प्रतिष्ठान्यत्र तु स्थिरे ।
कुर्यात् पूर्वोक्तमार्गेण सात्त्वतादिविधानवित् ॥

यदेतदनुसधानत्रितय[5] पूर्वमीरितम् ।
एतदेव [6]प्रतिष्ठानमुभयत्रेति मे मति ॥१४६॥

इत्थ सस्कारसपन्ने तद्बिम्बद्वितये सुधी ।
लक्ष्मीं लक्ष्मीपतिं चैव धिया पश्यन्नुपस्थितौ ॥

तन्मनाश्चैव तद्भक्तस्तद्याजी तज्जपोद्यत ।
तद्योगी सतत भूत्वा तावेवान्ते प्रपद्यते ॥१४८॥

प्रतिष्ठेयमिति प्रोक्ता साक्षाज्ज्ञानमयी परा ।
ज्ञान विना न चैवान्यन्नराणा तारक [7]स्मृतम् ॥

इति [8]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे [9]प्रतिष्ठाविधान
नामैकोनपञ्चाशोऽध्याय

---

[1] दैत वाचकस्वरूपेण I
[2] शब्दार्थौ F
[3] ब्रह्ममयं G
[4] मन्त्रनाथ I
[5] तृतीयं B
[6] प्रतिष्ठाया I
[7] स्मृतम् I
[8] श्रीपञ्चरात्र A, श्रीपाञ्चरात्र B
[9] मन्त्रादिबिम्बप्रति B F

## पञ्चाशोऽध्यायः

शक्रः—

विश्वारणे नमस्तुभ्यं नमो विश्वविभूतये ।
सर्वासामपि सिद्धीनां नमस्ते मूलहेतवे ॥ १ ॥

आदिदेवात्मभूतायै नारायणकुटुम्बिनि ।
समस्तजगदाराध्ये नमस्ते पद्मयोनये ॥ २ ॥

त्वत्प्रसादाच्छ्रुता मन्त्रास्त्वदीयाः सिद्धयो मया ।
आराधनं च सर्वेषां यथावदवधारितम् ॥ ३ ॥

इदानीं श्रोतुमिच्छामि त्वद्वक्त्राम्बुजनिःसृतम् ।
त्वत्सूक्तस्य विधिं कृत्स्नमुपसन्नोऽस्म्यधीहि भो ॥

श्रीः[1]—

देवो नारायणो नाम जगतस्तस्थुषस्पतिः ।
आत्मा च सर्वलोकानां षाड्गुण्यानन्दविग्रहः ॥

सर्वप्रकृतिरीशानः सर्वज्ञः सर्वकार्यकृत्[2] ।
[3]निरनिष्टोऽनवद्यश्च सर्वकल्याणसंश्रयः ॥ ६ ॥

तमसां तेजसां चैव भासकः स्वप्रकाशतः ।
अन्तर्यामी नियन्ता च भावाभावविभावित.[4] ॥

शक्तिमान् सकलाधारः सर्वशक्तिर्महेश्वरः ।
तस्याहं परमा शक्तिरेका श्रीर्नाम शाश्वती ॥ ८ ॥

निरस्तनिखिलावद्या सर्वकामदुघा विभोः ।
आत्मभित्तिसमुन्मीलच्छुद्धाशुद्धाध्ववर्गिणी ॥ ९ ॥

अनुव्रता हृषीकेशं सर्वतः समतां गता ।
तावावां परमे व्योम्नि पितरौ जगतः परौ ॥ १० ॥

अनुग्रहाय लोकानां स्थितौ स्वः परया श्रिया
कदाचित्कृपयाविष्टौ जीवानां हितकाम्यया ॥११॥

सुखिनः स्युरिमे जीवाः प्राप्नुयुर्नौ कथं न्विति[5] ।
[6]उपायान्वेषणायत्तौ परमेण समाधिना ॥ १२ ॥

मथ्नीवः स्मातिगम्भीरं शब्दब्रह्ममहोदधिम् ।
मथ्यमानात्ततस्तस्मात् सामर्ग्यजुपसङ्कुलात् ॥१३॥

तत् सूक्तमिथुनं दिव्यं दध्नो घृतमिवोत्थितम् ।
अनाहतमसंदिग्धमनस्पष्टमनश्वरम् ॥ १४ ॥

सर्वैश्वर्यगुणोपेतमनाकुलपदाक्षरम्[7] ।
आद्योस्तथान्तयोः शश्वदन्योन्याक्षरमिश्रितम् ॥

१. विश्वारणे । विश्वोत्पत्तिस्थानभूते इत्यर्थः । २. आत्मभूतायै । प्राणवल्लभायै इत्यर्थः । ४. त्वत्सूक्तस्य ; श्रीसूक्तस्य । ५. जगत इत्यादि । जङ्गमस्थावराणां पतिरित्यर्थः । ६. प्रकृतिः ; उपादानकारणम् । ७. "तस्य भासा सर्वमिदं विभाति" इति श्रुत्यर्थोपबृंहणमत्र । भावाभावेति । भावाभावपदार्थरूपतया निर्धारित इत्यर्थः । ९. सर्वकामेति । मय्येव सः अवाप्तसमस्तकाम इति भावः । आत्मभित्तीति । शुद्धाशुद्धरूपः प्रपञ्चः सर्वोऽपि मदेकावलम्बन इत्यर्थः । १२. समाधिना ; ध्यानेन । १३. मथ्नीवः स्मेति । अमथ्नीवेत्यर्थः । १४. सूक्त-

[1] श्रीरुवाच B. F. I. [2] रित् I. [3] निरपिद्धः I.
[4] विभावनः A B. C. [5] त्विति A. B. G. [6] उपायान्वेषणे C.
[7] अनाकुलमनाक्षरम् I.

कां सोस्मि [1]धूपदीपौ च पष्ठ्या चैवोपहारकम् ।
मनसः काममित्येवं मधुपर्कं प्रकल्पयेत् ॥ ३४ ॥

क्षुत्पिपासामिति ह्येषा प्रापणप्रतिपादिका ।
अन्त्यया तु नमस्कारः शिष्टं पूर्ववदाचरेत् ॥३५॥

सूक्तेऽस्मिन् मम नामानि पञ्चाशत् त्रीणि चाच्युत ।
तेषां निरुक्तिं मत्तस्त्वं शृणु जम्भनिषूदन ॥ ३६ ॥

निहिता सर्वभूतेषु रणे[2] भृङ्गवधूरिव ।
जनयन्ती परं नादं तैलधारावदच्युतम् ॥ ३७ ॥

निमेषोन्मेषयोर्मध्ये सूर्याचन्द्रमसोः स्थिता ।
मूलमाधारमारभ्य द्विषट्कान्तमुपेयुषी ॥ ३८ ॥

उदितानेकसाहस्रसूर्यवह्नीन्दुसन्निभा ।
[3]चक्रकात् पवनाधाराच्छान्ता पश्याथ मध्यमा ॥

वैखरीस्थानमासाद्य तत्राष्टस्थानवर्तिनी ।
वर्णानां जननी भूत्वा भोगान् प्रस्नौमि गौरिव ॥

हिरण्यवर्णेत्येवं मां प्रजापतिरुदारधीः ।
स्तुत्वा तु[4] मत्प्रसादात् स योगानां धर्ममूचिवान् ॥

प्रणवादिर्नमोऽन्तोऽयं मन्त्रो मम नवाक्षरः ।
शब्दब्रह्ममयः साक्षाद्योगिनां योगसाधकः ॥ ४२ ॥

दूराद् दूरतरं यामि हरिणी योगिमानसात् ।
भक्त्या बध्नन्ति निजया योगिनो मां यतव्रताः ॥

षष्टिरष्टौ सहस्राणि योगिनो मत्परायणाः ।
हरिणीं मामनुध्याय प्रत्याहारं परं गताः ॥ ४४ ॥

हरिणाजिनसंवीतां हरिणाजिनसंस्तराम् ।
हरिणाश्लिष्टमध्यां तां हरिणायतलोचनाम् ॥ ४५ ॥

हरिणीं मामनुस्मृत्य परां शान्तिमवाप्नुयात् ।
[5]हरिं नयामि कार्येषु नीये च हरिणा स्वयम् ॥

सदा हरिणभासाहं हारिणी दुरितं सताम् ।
प्रणवादिर्नमोऽन्तश्च मन्त्रोऽयं मे षडक्षरः ॥४७॥

कर्दमेनेति । एकादश्येत्यर्थः । गन्धद्वारेति । नवम्येत्यर्थः । उपैत्विति । सप्तम्येत्यर्थः । ३४. कां सोस्मीति । चतुर्थ्येत्यर्थः । अस्या आचमनेऽप्युपयोगः पूर्वमुक्तः । षष्ठ्येति । "आदित्यवर्णे" इत्यनयेत्यर्थः । मनस इति । दशम्येत्यर्थः । ३५. क्षुदित्यादि । अष्टम्येत्यर्थः । अन्त्ययेति । "तां म आवह" इति पञ्चदश्येत्यर्थः ३६. पञ्चाशत् त्रीणीति । त्रिपञ्चाशदित्यर्थः । ३७. निहितेत्यादिना हिरण्यवर्णेतिनामनिरुक्तिः । हिशब्दार्थो निहितेति । रणे; शब्द करोमी-त्यर्थः । तादात्विकनादस्य विवरणम्—भृङ्गवधूरिवेति । अच्युतम; अविच्छिन्नमित्यर्थः । ३९. वर्णशब्द निर्वक्ति—चक्रकादिति । आधारचक्रादित्यर्थः । शान्ता; परेत्यर्थः । पश्या; पश्यन्ती । ४०. वैखरीस्थानम्; कण्ठादीन्यष्टौ । ४२. ओं हिरण्यवर्णायै नमः इति नवाक्षरो मन्त्रः ४३. हरिणीति नाम निरुच्यतेऽत्र । हरिणीवत् दूरधावनादिति, हरन्ति बध्नन्ति योगिन एनामिति च निर्वचनद्वयम् । ४५. निर्वचनान्तरमाह—हरिणेत्यादि । हरिणस्येवाश्लिष्टम-सङ्घष्टं मध्यं यस्याः, हरिणा विष्णुना आश्लिष्टं मध्य यस्या इति वा निर्वचनम् । ४६. निर्वच-नान्तरं हरिमिति । "यदिङ्गितपराधीनो विपत्तेऽस्मि" इत्यभियुक्ताः । ४७. हरिणभामेति

[1] दीपधूपौ B [2] मणे C. [3] I. omits three lines from here.
[4] अप I. [5] I. omits nine lines from here.

सर्वार्थसाधकं साक्षाद्योगसाधनमुत्तमम् ।
सौवर्णं कल्पिता नित्यं मम माला सरोरुहे ॥४८॥

सृजामि शोभनान् वर्णान् [1]सुष्ठु विश्वं वृणामि वा।
सृताश्चापि मयाजस्रं वद्धमुक्तादयो ह्यजा ॥४९॥

सुवर्णस्रजमित्येव गुह्यकानामधीश्वरः ।
मेरौ चिरमुपस्थाय धनेशत्वमवाप्तवान् ॥ ५० ॥

राजतैर्मे स्रजः पद्मै राजन्ते च स्रजोऽमला ।
[2]राजिताश्च स्रजः सर्वे स्रष्टारो जगतां मया ॥

रजतस्रजमित्येव रुद्राणां प्रवरः पुरा ।
[3]कैलासे समुपस्थाय रजताधिपतां ययौ ॥ ५२ ॥

अष्टाक्षराविमौ मन्त्रौ [4]सतारौ नमसा युतौ ।
जपार्चनहुतध्यानादभीष्टं साधयिष्यतः ॥ ५३ ॥

चक्रम्यमाणा भक्तानां द्रावयामि च दुष्कृतम् ।
चन्द्रवत् सततं चित्तं भक्तानां द्रावयामि च ॥५४॥

उदेमि योगिनामन्तरानन्दस्पन्दलक्षणा ।
चतुर्थीं तु दशां तेषां चन्द्रवद्भासयामि च ॥५५॥

योगान्तरायनिहतो वसिष्ठः परमो मुनिः ।
अन्तश्चन्द्रमयीं शुद्धां चिदानन्दमहोदधिम् ॥५६॥

[5]नाडीस्थां मामनुस्मृत्य [6]पुनः स्वं योगमाप्तवान् ।
आनन्दजनकः सद्यो मन्त्रोऽयं मे षडक्षरः ॥५७॥

भवदावाग्निदग्धानां निर्वृतिं प्रकरोत्ययम् ।
आधाराब्जाद् द्विपद्कान्तं सूर्यभासा हिरण्मयी ॥

उदेमि सततं प्रोक्ता शब्दसंकल्पकोरकैः ।
प्रकृतेश्च परे व्योम्नि मण्डले च त्रयीमये ॥५९॥

हिरण्मयेऽवतिष्ठेऽहं हिताय जगतां सदा ।
तां मां हिरण्मयीत्येव मुनयो वेदपारगाः ॥६०॥

स्तुत्वा समाप्नुवन् कामं योगिनो योगमुत्तमम् ।
सप्ताक्षरो ह्ययं मन्त्रः सर्वकामार्थसाधकः ॥ ६१ ॥ ✓

हारिणीति च निर्वचनद्वयम् । ओं हरिण्यै नमः । ४८. सुवर्णस्रक् रजतस्रगिति नामद्वयम् । ४९. सृजामीत्यादिना निर्वचनान्तरम् । सुष्ठु विश्वमित्यादिना तृतीयं निर्वचनम् । "विश्वं विष्णुः" इति नामपाठात् विष्णुं पतित्वेन वृणे इति वा, विश्वं लोकं वासस्थानतया वृणे इति वा निर्वचनं भाव्यम् । स्रक्शब्दनिर्वचनमाह—सृता इति । ५०. उपाख्यानमुच्यते—गुह्यकानामिति । ५१. रजतस्रगिति नाम निरुच्यते—राजतैरिति । निर्वचनान्तरं राजन्त इति । राजिता इति च निर्वचनान्तरम् । ५२. उपाख्यानमुच्यते—रुद्राणामिति । ५३. ओं सुवर्णस्रजे नमः । ओं रजतस्रजे नमः । ५४. चन्द्रेति नाम निरुच्यते—चक्रम्यमाणेति । क्रमुधातोर्यङि चक्रम्येति रूपम् । तत्र च इति पदमादाय द्रा इत्यनेन योगे चन्द्रेति भवति । द्रा इति पदं निर्वक्ति—द्रावयामीति । द्रा इत्यस्यैव निर्वचनान्तरं चन्द्रवदिति । ५५. निर्वचनान्तरमाह—उदेमीति । चतुर्थी दशा तुरीयावस्था । ५६. उपाख्यानमुखेन निर्वचनान्तरमाह—योगेत्यादिना । ५७. ओं चन्द्रायै नमः । ५८. हिरण्मयीति नाम निरुच्यते—आधारेत्यादि । द्विपद्कान्तम्, द्वादशान्तम् । सूर्यस्येव भासा यस्या इति आकारान्तः शब्दः । ५९. शब्दसंकल्पाः पश्यन्त्यादयः । तदात्मनोदेमीति इत्थंभूतलक्षणे तृतीया । निरुक्त्यन्तरं प्रकृतेरित्यादि । ६१. ओं

[1] सृष्टुं A G
[2] राजिताश्च I
[3] कैलासे I
[4] सतारं A. B
[5] नाभिस्थां I
[6] पुनस्तं A G

साक्षिणी सर्वभूतानां लक्षयामि शुभाशुभम् ।
लक्ष्मीश्चास्मि हरेर्नित्यं लक्ष्यं सर्वमितेरहम् ॥६२॥

ददती क्षेपणी चास्मि नित्या त्रिप्रेरणी तथा ।
तथा ज्ञानस्वरूपाहं लक्षणीया मितौ मितौ ॥६३॥

लये निवासे निर्माणे प्रेरणी प्रकृतेरहम् ।
लक्षणाख्यस्य भावस्य कलाकाष्ठादिरूपिणी ॥६४॥

अव्यक्तव्यक्तसत्त्वस्था प्रेरयित्री सदास्म्यहम् ।
लक्षं नयामि चात्मानं लामि चान्ते क्षिपामि च ॥

क्षिपामि क्षपयाम्येका क्षिणोमि दुरितं सताम् ।
क्षमे क्षमा हि भूतानां मिमे मन्ये च मामि च ॥

इत्येतान् मयि दृष्टार्थान् परमर्षिरुदारधीः ।
[1]लक्ष्मीर्लक्षय मेत्येव कपिलो मुनिरुक्तवान् ॥६७॥

पञ्चाक्षरो ह्ययं मन्त्रः पातालगतिसाधनः ।
दिव्यान्तरिक्षभौमानां भोगानामुपपादनः ॥ ६८ ॥

तनुर्ज्ञानमयी सा मे [2]विष्णोर्हृदि च वर्तते ।
आत्मज्ञानमिदं पुण्यं [3]योगज्ञानमिदं परम् ॥६९॥

[4]भानामिव गता कान्तिः शीतरश्मौ सदा तथा ।
शक्तिः शक्तिमतो विष्णोः स्थिताहमनपायिनी ॥

अपश्चाहमयाम्येका द्रवो भूत्वा गुणो महान् ।
अपावाहयमादौ च मुनिं भूत्वा सरस्वती ॥ ७१ ॥

सारस्वते जले पूर्वं [5]विश्वामित्रोदिता सती ।
अपोवाह वसिष्ठं तं सत्यसन्धा सरस्वती ॥ ७२ ॥

ऋषयः प्राहुरेवं मां वसिष्ठे स्रोतसा हृते ।
सत्ये सत्यप्रियं पाहि वसिष्ठं शास्त्रवादिति ॥७३॥ ✓

हिरण्मय्यै नमः । ६२. इत आरभ्य सप्त श्लोकाः लक्ष्मीनामनिर्वचनपराः । दर्शनार्थात् लक्षधातोर्निर्वचनमाह—साक्षिणीति । लक्ष्मीश्चेति । हरेः लक्ष्मीः सर्वसंपदित्यर्थः । अत्र "श्रद्धया देवो देवत्वमश्नुते" "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इत्यादिकं भाव्यम् । लक्ष्यमिति । सर्वप्रमितेः प्रमेयेत्यर्थः । ६३. क्षिपधातोर्निर्वचनमाह—क्षेपणीति । तस्यैव विवरणं त्रिप्रेरणीति । कायवाङ्मनसानां प्रेरयित्रीत्यर्थः । अत्र "ला दाने" "क्षिप प्रेरणे" इति धातुद्वयान्निष्पत्तिरभिप्रेता । तथाहं ज्ञानस्वरूपा लक्षणीया । ६४. लये इति । सृष्टिस्थितिसंहारेषु प्रकृतिं प्रेरयामीति लक्ष्मीरहम् । लक्ष्यन्ते प्रमीयन्ते इति लक्षणानि सर्वे भावाः । तेषां क्षेपणी इति निरुक्तिः । ६५. लक्षमित्यादि निरुक्त्यन्तरम् । तथा लामीत्यपि । लीना भवामीत्यर्थः । क्षिपामि; प्रेरयामि । लीधातुं क्षिपधातुं चादाय निर्वचनम् । ६६. निर्वचनान्तरमाह—क्षिपामीति । क्षमधातोः व्युत्पत्तिमाह—क्षमे इति । मीशब्दव्युत्पत्तिमाह—मिमे इत्यादिना । ६७. हे लक्ष्मीः मा मां लक्षय कटाक्षयेति कपिलो मुनिरुवाचेत्यर्थः । ६८. ओं लक्ष्म्यै नमः । ६९. अनपगामिनीति नाम निरुक्तिः—तनुरिति । विष्णोरनपायित्वात् अनपगामिनीति नाम । ७१. निर्वचनान्तरमाह—अपश्चेति । अप्सु द्रवाख्यो गुणोऽहम् । तस्मात् ताभ्यो नापैमीत्यर्थः । निर्वचनान्तरमाह—अपावाहयमिति । अपोपसर्गात् वाहयतेर्लङ् । ७२. विश्वामित्रेणोक्ता सती तत्प्रतिद्वन्द्विनं वसिष्ठं जले अहमपोवाहेति स्मृः । ७३. एवमपगामिनीशब्द

[1] लक्ष्मीरक्षत्व लक्ष्मी मां I.    [2] विष्णोरपि हृदीति I.    [3] योगमनुत्तमम् I.
[4] I. omits this line.    [5] विश्वामित्रे क्षिप्तवती I.

साह सरस्वती भूत्वा तमपोवाह शात्रवात्।
ऋपयो नाम चक्रुर्मे तदा ह्यनपगामिनीम् ॥७४॥

नवाक्षरो ह्यय मन्त्र सर्वापद्विनिवारण ।
अश्वा पूर्वाहनी चास्मि वसामि च पुरे सदा॥

बुद्धिप्राणशरीराख्ये त्रिविधे त्रिविधात्मना ।
अश्वाना [1]हेपनाद् योगारम्भे करोमि च ॥७६॥

नाडीमध्य समायाता करोमि रथनद् ध्वनिम्।
व्योमरन्ध्रमनुप्राप्ता हस्तिनादविनादिनी ॥ ७७ ॥

योगिनो यतमाना मा त्रिधैव प्रतिपेदिरे।
आद्यावष्टाक्षरौ मन्त्रावन्त्य एकादशाक्षर ॥७८॥

अभीप्सितप्रदा ह्येते त्रयो मन्त्रा हि मन्मया ।
शृणोमि करुणा वाच शृणामि दुरित सताम्॥

शृणामि च गुणैर्विश्व शरणं चास्मि शाश्वतम्।
शरीर च हरेरस्मि श्रद्धया [2]चेप्सिता सुरै ॥८०॥

शान्ताधारपदस्थास्मि [3]पश्या रन्ती च नामिजा।
प्रेरणी च धिया मध्या सृष्टिर्वक्त्रे तथार्णसाम्॥

चतु स्थानस्थिता चैव शान्तापश्यादिभेदिनी।
श्रयामि श्रयणीयास्मि शक्तिभी[4] रेमि रामि च॥

शक्तेरुज्ज्वलिनी चास्मि शतमा रतिरीप्सिता।
इति त्र्यन्ततत्त्वज्ञा श्रियं मा विदुरञ्जसा॥

[5]अपि नाथो विभूतिर्मे त्रैलोक्य सेश्वरामरम्।
परा मदीयवर्णस्य कला नार्हति षोडशीम्॥ ८४॥

आद्ये पदत्रये वर्णा श्रींह्रीमोमिति मन्मया ।
[6]एष वैभिश्चतुर्भिस्तैर्मदीय धार्यते वपु ॥ ८५॥

निष्पाद्याधुना तद्विपर्ययवाचितामाह—ऋपय इति। शात्रवात् पाहीति मा प्राहुरित्यन्वय । ७४. अह त वसिष्ठ शात्रवादपोवाह अपावाहयम्, अपासारयमित्यर्थ । ७५. ओ अनपगामिन्यै नम । अह बुद्ध्यादिरूपे पुरे अश्वरूपा पूरूपा वाहनी चास्मि। तत्र वसामि च। बुद्धि नानाविषयेष्वाकृष्य धावनात् अश्वा। प्राणावासस्थानभूता पू । आत्मतया शरीरवहनात् वाहनी। अन अश्वपूर्वेति नाम। ७६. पक्षान्तरमाह—अश्वानामिति। पूर्वं योगारम्भे अश्वेव नदामि। अश्वपूर्वायै नम । ७७. रथमध्यानामनिर्वचनम्—नाडीति। हस्तिनादप्रबोधिनीति नाम निरुक्ति—व्योमेत्यादि। ओं अश्वपूर्वायै नम । ओ रथमध्यायै नम । ओं हस्तिनादप्रबोधिन्यै नम । ७० . श्रीनामनिर्वचनमारभते—शृणोमीत्यादिना। "श्रु श्रवणे" "शॄ हिंसायाम्" "शॄ निस्तारे" इति धातव । ८०. श्रद्धयेति। अस्मात् शकार रेफ चादाय ईप्सितपदादीकार सयोज्य श्रीशब्द इति भाव ८१. शान्तेत्यादि। शान्तापदात् शकार रन्तीपदात् रेफ प्रेरणीपदादीकार चादाय श्रीशब्द इति भाव । अर्णसा वर्णाना सृष्टिरिति वैखरीरूपमुच्यते। ८२. श्रयामि विष्णुम्। श्रयणीया, शक्तिभि जयादिभि सेव्या। रेमि, आश्रितपापानि क्षिणोमि। रामि, सर्वान् कामान् ददामि। ८३. शक्ते महाशक्तिरी। शतमा, महत्तमा। रतिरूपा। ईप्सिता, प्रार्थनीया। अत्रापि पदत्रयात् शकाररेफेकारान् सयोज्य श्रीशब्दनिष्पत्तिरभिप्रेता। ८५. एष वेति। ओं श्रियै नम इति मन्त्रश्रेयर्थ । एभिश्चतुर्भि-

[1] हयानाद I
[2] सविता F I
[3] विश्रान्ती I
[4] शक्तिम A
[5] अह नाथो विभूतिश्च त्रैलोक्य च सुरेश्वर I
[6] एषु A G

एकैकशो द्विशो वापि त्रिशो वा सर्व एव वा।
जप्तार्चितहुतध्याताः साधयेयुरभीप्सितम् ॥ ८६ ॥

प्रयत्नेनैव गोप्यं तदेतद्ब्रह्मचतुष्टयम्।
अन्योन्यफलितं सर्वैरशेषैरधिकं गुणैः ॥ ८७ ॥

[1]मिमे मीयेऽखिलैर्मानैर्मयि माति जगत् क्षये।
आत्मेश्वरवती चाहं व्याप्तायां मयि मेति धीः ॥

आत्मवच्चेप्सितात्यर्थमतो मां मद्विदो विदुः।
पञ्चाक्षरो ह्ययं मन्त्रः सर्वकामफलप्रदः ॥ ८९ ॥

प्रदात्री सर्वकामानामवित्री सर्वकर्मणाम्।
देवस्य दयिता चास्मि देवीं मां मुनयो विदुः ॥

पञ्चाक्षरो ह्ययं मन्त्रो भुक्तिमुक्तिफलप्रदः।
शब्दाये सर्वभूतानामन्तःस्था चिन्मयी सदा ॥

काये च निखिलैर्वेदैरन्विष्ये केति चाखिलैः।
ब्रह्मरूपधरा चाहं जटामण्डलधारिणी ॥ ९२ ॥

सृजामि विविधान् [2]भावान्स्वाध्यायाध्यायतत्परान्।
अतः कामिति मां प्राहुर्मुनयो वेदपारगाः ॥ ९३ ॥

पञ्चाक्षरो ह्ययं मन्त्रः स्वाध्यायफलदायकः।
उदिति ब्रह्मणो नाम विकस्तिस्तस्य तु स्मितम् ॥

मय्यायत्ता विकस्तिः सा सोस्मितां मां ततो विदुः।
सप्ताक्षरो ह्ययं मन्त्रो विकस्तिं भूयसीं वहेत्[3] ॥

हिता च रमणीया च मदीया प्रकृतिः परा।
तां सत्त्वरूपामालम्ब्य तरन्ति मुनयस्तमः ॥ ९६ ॥

[4]अतो हिरण्यप्राकारामृषयो मामुपासते।
दशाक्षरो ह्ययं मन्त्रः सर्वकामसमृद्धिदः ॥ ९७ ॥

रिति। श्रीं, ह्रीं, ओं, ओं श्रियै नमः इत्येतैश्चतुर्भिरित्यर्थः। ८८. मेति नामनिर्वचनम्—मिमे इत्यादिना। सर्वं प्रमिनोमि। मीये; प्रमीये। माति; परिमितं भवति। आत्मेत्यादि; अस-च्छब्दान्निष्पन्नं मशब्दमादायार्थ उपवर्ण्यते। मेति धीरिति। अहमर्थधीरित्यर्थः। ८९. आत्मवदिति। म इव मेति व्युत्पत्तिरिति भावः। ओं मायै नमः। ९०. देवीशब्दं निर्वक्ति—प्रदात्रेति। दाधातुमवधातुं चादाय निरुच्यते। देवस्य दयितेति। पुंयोगे ङीषिति भावः। ओं देव्यै नमः। ९१. "कां सोस्मिताम्" इत्यत्र कामिति पृथक् पदम्। केति नाम निर्वक्ति—शब्दाये इति। शब्दं करोमीत्यर्थः। ९२. काये इति। प्रतिपाद्ये इत्यर्थः। किंशब्दमादा-याह—अन्विष्ये इति। क इति ब्रह्मणो नामेति मत्वाह—ब्रह्मेत्यादि। ओं कायै नमः। ९४. सोस्मितेति नाम निर्वक्ति—उदितीति। "तस्योदिति नाम" इति श्रुत्यर्थोऽत्राभिमतः। तस्य ब्रह्मणो या विकस्तिर्विकासो बृहत्त्वमिति यावत्; सा विकस्तिरेव स्मितम्। उस्मितमिति रूपम्। तेन सहिता सोस्मिता। भगवतो नारायणस्य यत् बृहत्त्वं, तत् एतदायत्तमित्युक्तं भवति। यदाहुः—"अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभूत्" इति। ओं सोस्मितायै नमः। ९६. हिरण्यप्राकारेति नाम निरुच्यते—हिता चेति। प्राकारशब्दः प्रकृतिपरः।

[1] शुम्भिणो मेऽखिलैर्मायैर्मंदिमा हि जगत्क्षये I.
[2] धर्मान् A. B. C.
[3] वहेत् A. B. C.
[4] I. omits this line.

आरादशेषदोषाणां द्राविणी मामुपेयुपाम् ।
अधोमुखाच्छिर पद्मात् स्रुतयामृतधारया ॥ ९८ ॥

अभिषिक्ता सदार्द्रास्मि दययार्द्रान्तरास्मि च ।
ज्वलामि [1]सर्वभूतान्तर्गगने परमे सदा ॥ ९९ ॥

शुद्धा निरञ्जना सत्या भासयन्ती जगत् त्विषा ।
अशिखा त्रिशिखा चाहं पञ्चपञ्चशिखावती ॥

सप्तधा च पुनस्त्रेधा ज्वलामि वपुषि स्थिता ।
षडक्षराविमौ मन्त्रौ निर्वृत्यौज्ज्वल्यदायकौ ॥

हरौ प्रीतिमती नित्य तृप्ता भक्तेषु नित्यदा ।
प्राकृतैश्च विना भोगैर्नित्यतृप्तास्म्यहं स्वत ॥१०२॥

ता मा तृप्तामनुध्याय मुनयो [2]वेदपारगा ।
ज्ञानमूला परा तृप्तिं नित्या प्राप्ता सुधामयीम् ॥

षडक्षरो ह्ययं मन्त्रस्तर्पयत्यखिल जगत् ।
तर्पयामि गुणैर्विष्णुमात्मान तद्गुणैरपि ॥ १०४ ॥

द्विसप्तत्या सहस्रेण नाडीनां देहसागरम् ।
तर्पयामि रसैर्नित्यं [3]प्राणाना प्रेरणावशात् ॥१०५॥

सौषुम्नेनाध्वना नित्य पर भावमुपेयुपाम् ।
[4]बिम्बभावमुपेताहं विमले योगदर्पणे ॥ १०६ ॥

आत्मबिम्बसमुद्भूतै परमार्थं सुधारसै ।
चिन्मयैस्तर्पयाम्यन्तर्योगिना सत्त्वमुत्तमम् ॥१०७॥

प्रकृत्यादि विशेषान्त परिणामोन्मुख सदा ।
कार्यभाव समापन्नमक्षिण्वन्ती निजैर्बलै ॥१०८॥

आपगाभिरिवाम्भोधिं प्राणाधानेन[5] तर्पये ।
स्नेहेनेव सदा दीप प्राणिना करणानि च ॥ १०९ ॥

निजसंविद्रसेनैव तर्पयाम्यक्षयात्मना ।
तर्पय तीति मा प्राहुर्योगिनो योगपारगा ॥ ११० ॥

सप्ताक्षरो ह्ययं मन्त्रस्तर्पयत्यखिल[6] जगत् ।
पद्ममान [7]मिनोतीति काल पद्म प्रचक्षते ॥ १११ ॥

ओं हिरण्यप्राकारायै नम । ९८. आर्द्रेति नाम निर्वक्ति—आरादिति । दूरे इत्यर्थ । निर्वचनान्तरम्—अधोमुखादिति । ९९. ज्वलन्तीति नाम निर्वक्ति—ज्वलामीति । १००. शब्दब्रह्मस्वरूपत्वमाह—शुद्धेति । अशिखेति परारूपमुच्यते । पश्यन्तीमध्यमावैखरीभेदेन त्रिशिखा । स्पर्शात्मना पञ्चविंशतिशिखा । १०१. यादिसान्तधारणाव्यूहात्मना सप्तधा । हळ्क्षात्मना त्रिधा चेत्यर्थ । ओं आर्द्रायै नम । ओं ज्वलन्त्यै नम । १०२. तृप्तेते नाम्नो निर्वचनमाह—हराविति । प्राकृतैर्विनेति । अप्राकृतैरित्यर्थ । ओं तृप्तायै नम । १०४. तर्पयन्तीति नामाह—तर्पयामीति । तर्पण च बहूना बहुभि साधनैर्वर्णयति—गुणैरित्यादिना । १०५. देहे द्वासप्ततिर्नाड्य योगशास्त्रप्रसिद्धा । अत्र देहस्य सागरत्वेन, नाडीना नदीत्वेन, प्राणाना वायुत्वेन, रसाना जलत्वेन चाध्यवसायो विवक्षित । १०६. प्रकारान्तरमाह—सौषुम्नेनेति । १०८. प्रकारान्तरमाह—प्रकृत्यादीति । सदा परिणामोन्मुखमित्यनेन प्रकृते नित्यपरिणामस्वभावत्वमुक्त भवति । १०९. तात्पर्यान्तरमाह—स्नेहेनेति । १११. ओं तर्पयन्त्यै नम । पद्मे स्थितेति नाम निर्वक्ति—पद्ममानमिति । सकल प्रमेयमित्यर्थ ।

[1] भूतगगने पराच I
[2] योग F G I
[3] प्राणायामवशात् सदा I
[4] बिम्ब I
[5] प्राणदानेन B C F I
[6] अनिशं A B I
[7] मनोतीति A B

कालमप्यखिलं शश्वत् कलयन्ती स्थिता सदा ।
स्तुत्वा त्वनेन नाम्ना मां कालातीतः कृती भवेत् ॥

पुंप्रधानेश्वराञ्चित्यं वर्णयाम्यात्मतेजसा ।
पञ्चाकारैश्च वर्णैर्मे भूपिता तनुरुत्तमैः ॥ ११३ ॥

पद्मवर्णेति मां स्तुत्वा शास्त्रवैशद्यमाप्नुयात् ।
उद्धृतः प्रथमो योऽशुः क्षीरसागरमन्थने ॥ ११४ ॥

चन्द्राख्यः स मदीयोंऽशुरुद्गच्छन्त्याः पुरःसरः ।
ऋषयो मत्प्रभावज्ञा मां तु चन्द्रां प्रचक्षते ॥

यः स चन्द्रो मदंशूनां कोटिकोट्यंशकोटिजः ।
षडक्षरो ह्ययं मन्त्रो मनोवैमल्यदायकः ॥ ११६ ॥

प्रकृष्यमाणा भासो मे सर्वावस्थासु सर्वदा ।
येनेच्छति तिरोधातुं तन्मे भासा तिरोहितम् ॥

यथा हि स्वशिरश्छाया स्वपदा नैव लङ्घ्यते ।
सा पदादग्रतो याति येन लङ्घनमिच्छति ॥११८॥

नित्योदितचिदानन्दा मत्प्रभाः सततोज्ज्वलाः ।
श्रद्धां सोममपोऽन्नं च वीर्यं हविरिति क्रमात् ॥

भोग्यशक्तिप्रभा एता अस्यन्ती षट्सु वह्निषु ।
प्रभासा मुनिभिः प्रोच्ये तन्त्रवेदान्तपारगैः ॥१२०॥

सप्ताक्षरो ह्ययं मन्त्रस्तेजःसंततिसाधकः ।
यशो यदुज्ज्वलं लोके विद्यादानादिसंभवम् ॥

मदीयं तद्यशस्तच्च नानारूपं विभज्यते ।
मामेव भाजनं विद्धि यशसस्तेजसः श्रियः ॥१२२॥

अतो यशस्विनीं तां मां यशसेति विदुर्बुधाः ।
सप्ताक्षरो ह्ययं मन्त्रो [1]यशोदो जपतो भवेत् ॥१२३॥

स्वर्गपर्जन्यभूपुंस्त्रीवैश्वानरविभागतः ।
आददाना हविः प्राप्तं श्रद्धासोमादिसंज्ञितम् ॥

षोढात्मानं विभज्याहमग्निभावमुपागता ।
ज्वलन्ती मुनिभिर्गीता भोक्तृशक्तिप्रभोज्ज्वला ॥

अग्नीषोमविभागेन विश्वमेवं [2]भजाम्यहम् ।
मन्त्रेणानेन मां स्तुत्वा साधयेद्यदभीप्सितम् ॥

देवेन हरिणा जुष्टा सदा देवैश्च सेविता ।
देवाश्च मामुपाश्रित्य विषयान् प्रत्यवस्थिताः[3] ॥

मिनोति; परिच्छिनत्ति । ओं पद्मे स्थितायै नमः । ११३. पद्यमानत्वात् पुंप्रधानेश्वराः पद्मशब्दार्थाः । तात्पर्यान्तरं पञ्चाकारैरिति । ओं पद्मवर्णायै नमः । ११४. चन्द्रेति नाम निरुच्यते—उद्धृत इति । ओं चन्द्रायै नमः । ११७. प्रकृष्यमाणा इत्यादि । प्रभासानामनिर्वचनमत्र । भासां प्रकर्षमेवाह—येनेति । सूर्यादिर्येन तेजसान्येषां तेजस्तिरयितुमिच्छति, तदपि मत्तेजसा तिरोधीयते । ११८. अप्रधृष्यत्वे लौकिकं निदर्शनमाह—यथेति । ११९. प्रकारान्तरमाह—नित्येत्यादि । श्रद्धामित्यादि । एतच्च छान्दोग्ये प्रसिद्धम् । द्वितीयान्तानां श्रद्धामित्यादीनाम् अस्यन्तीत्युत्तरेणान्वयः । १२०. षट्सु वह्निषु; स्वर्गादिष्वित्यर्थः । प्रभा अस्यतीति व्युत्पत्तिः । ओं प्रभासायै नमः । १२१. यशसेति नाम निरुच्यते—यश इति । १२२. तच्च यशश्च नानारूपं भवति । तदेवाह—यशस इत्यादिना । १२३. ओं यशसायै नमः । एतदनुसारेण "चन्द्रां प्रभासां यशसां ज्वलन्तीम्" इति सूक्तपाठः । १२४. ज्वलन्तीति नाम निर्वक्ति—स्वर्गेत्यादिना । १२५. भोक्तृशक्तीत्यनेन भोग्यशक्तितात्पर्यकप्रभासानामवैलक्षण्यं प्रतिपादितं भवति । ओं ज्वलन्त्यै नमः । १२७. देवजुष्टानामनिर्वचनं देवेनेत्यादिना । देवशब्दस्येन्द्रियपरत्वमादा-

[1] यशस्तेजःप्रदो C. [2] भवाम्यहम् A. B. G. [3] प्रत्यवस्थितान् A. B.

परिणामविशेषत्वात् प्रकृतेस्ते ह्यचेतना ।
अतो मच्छक्तिमादाय शुद्धसंवित्क्रियामयीम् ॥
विषयेषु प्रवर्तन्ते श्रोत्रवाङ्मनआदय ।
[1]वृत्त्यर्थं सेवितामश्चैदेवजुष्टां तु मां विदुः ॥१२९॥
सर्वशक्तिप्रदामन्तर्देवजुष्टामवस्थिताम् ।
शश्वन्मामनुमन्त्रित्य देवान् विजयतेऽखिलान् ॥
मत्त एवोद्गतानीह विज्ञानानि महर्षिणाम् ।
शक्तयश्च क्रियाश्चैव यास्ता उच्चावचा नृणाम् ॥
विश्वक्लेष्टदा चापि मामुदारां विदुर्बुधाः ।
सप्ताक्षरो ह्ययं मन्त्रः सर्वमिष्टं प्रयच्छति ॥१३२॥
तनोमि पञ्च कृत्यानि तायेऽ च जगदात्मना ।
[2]तां मां तामिति तत्त्वज्ञाः प्राहुर्वेदान्तपारगाः ॥
पञ्चाक्षरो ह्ययं मन्त्रस्तनोति शुभविस्तृतिम् ।
प्रकृतिं पुरुषं चैव नयामि स्वेन तेजसा ॥१३४॥
कालाच्चापि बहिर्भूता पद्मनेमीं ततो विदुः ।
सप्ताक्षरो ह्ययं मन्त्रः सर्वसंपत्समृद्धिदः ॥१३५॥
[3]आदित्यं वर्णयाम्येका तेजसा यशसा श्रिया ।
आदित्यस्था च वर्णात्मा भूत्वा दिव्या त्रयीमयी॥
प्रकाशयन्ती सर्वार्थानतीतानागतानपि ।
पितृदेवमनुष्याणां चक्षुरस्मि सनातनम् ॥१३७॥
आदिभूतश्च वर्णो मे तारः प्रथमवाचकः ।
तत्र शान्तोदितानन्दा नन्दाम्यात्मानमात्मना ॥
तैलधारावदच्छिन्ना दीर्घघण्टानिनादिनी[4] ।
प्रणवस्य शिखा सूक्ष्मा सा मे शब्दमयी तनुः ॥
तत्र ब्रह्मणि निष्णातो मां द्रागधिगमिष्यति ।
आदित्यवर्णजातं मे शब्दमय्या उपस्थितम् ॥१४ ॥
शान्तापश्यादिरूपेण वैखरी वर्णनादिनी ।
दुहाना सकलानर्थान् धेनुः कामदुघा स्थिता[5] ॥
एतानादित्यवर्णेति [6]मय्यर्थानृषयो विदुः ।
नवाक्षरो ह्ययं मन्त्रः सर्वकामप्रपूरकः ॥१४२॥
[7]किरन्ती किरणान् लोके किरन्ती चोत्तरोत्तरम् ।
वायुना देवमित्रेण मणिनाधारवह्निना ॥१४३॥

योच्यते—देवाश्चेति । १२९. देवशब्दस्येन्द्रियपरत्वादाह—श्रोत्रेत्यादि । वृत्त्यर्थं, विषयव्याप्तिरूपार्थे । अक्षैः, इन्द्रियैः । ओं देवजुष्टायै नमः । १३१. उदारानामनिरुक्तिः मत्त एवेत्यादिना । ओं उदारायै नमः । १३३. "तां पद्मनेमीम्" इत्यत्र तामिति पृथक् नामाभिप्रेत्य निर्वचनमाह—तनोमीति । पञ्च कृत्यानि सर्गादीनि । तायेऽ, विस्तृता भवामीत्यर्थः । "तायृ सन्तानपालनयोः" इति धातुः । ओं तायै नमः । १३४. पद्मनेमीनामनिर्वचनम्—प्रकृतिमित्यादिना । नयामीति पद्धात्वर्थः । नेमिशब्दार्थः बहिरिति । ओं पद्मनेम्यै नमः । १३६. आदित्यवर्णेति नामाह—आदित्यमिति । वर्णयामि, वर्णवन्तं तेजस्विनं करोमि । वर्णशब्दस्याक्षरपरत्वमभिसंधायाह—वर्णात्मेति । १३७. चक्षुरिति । "चक्षुर्मित्रस्य वरुणस्याग्ने" इति श्रुत्यर्थो ज्ञातव्यः । १३८. आदौ त्यं सिद्धं इत्यर्थं मत्वाह—आदिभूत इति । १४०. तत्र ब्रह्मणीति । प्रणवशिरस्यामित्यर्थः । आदित्यवर्णजातं प्रणवजातं सर्वमपि वाङ्मयमित्यर्थः । ओं आदित्यवर्णायै नमः । १४३. कीर्तिनामनिर्वचनम्—किरन्तीत्यादि । कृ विक्षेपे । विक्षेप

[1] प्रत्यक्ष I
[2] तां तु मामिति I
[3] आदित्यवर्णं B C
[4] स्निनादिनी F
[5] दुधास्मि सा A B
[6] I omits six quarters from here
[7] किरती A B

शनैर्विश्रम्य विश्रम्य पत्रेषु जलजन्मनाम् ।
द्वादशाना ततश्चोर्ध्वं भजामि द्वादशान्तिमम् ॥

कीर्तयन्ति तत कीर्तिं मुनयो मा मनीषिण ।
पञ्चाक्षरो ह्यय मन्त्रो योगवैमल्यदायक ॥१४५॥

[1]ऋद्धास्म्यह गुणैर्विष्णोरर्धय मि च योगिन ।
पत्रेषु योगपद्मानामाधारान्तरचारिणाम् ॥ १४६ ॥

उत्तरोत्तरमृध्यामि [2]भजन्ती विस्तृतिं पराम् ।
[3]ऋद्धिं वृद्धास्तत प्राहुर्योगिनो योगदीपिनीम् ॥

गन्धादय पृथिव्याद्या द्वाराणि मम वेदने ।
सवपा पुण्यगन्धाना द्वारभूतास्मि शाश्वती ॥१४८॥

गन्धद्वारेति मा प्राहुर्विप्रा वेदान्तपारगा ।
दुराधर्षास्मि सर्वेषा दैत्यदानवरक्षसाम् ॥ १४९ ॥

शुद्धा सवित् क्रिया चाह नार्हा वैरपि बाधितुम् ।
सर्वेषामात्मभूताया मम सवित्क्रियात्मन ॥१५०॥

ज्ञातृत्वमपि कर्तृत्व यो नामापनिनीषति ।
ज्ञाता कर्ता निषेधस्य स निर्वक्ष्यति तत् कथम् ॥

शक्तो धर्षयितु कश्चिन्नैव सविद्गति मम ।
तदभावा विचिन्त्यैव ह्यभावे सविदेन सा ॥

दुराधर्षेति मा प्राहु सारयज्ञानविचक्षणा ।
अष्टाक्षरो ह्यय मन्त्रस्तमोगतिविमोचन [4] ॥१५३॥

[5]नित्येन विष्णुना पुष्टा नित्य पुष्टा च सद्गुणै ।
विषयैर्मे विना पुष्टा नित्य सवित् परा तनु ॥१५४॥

सेव पुष्णाति विषयानजडाभिर्जडात्मन ।
नित्यपुष्टा तु मा प्राहु सिद्धा सविद्विचक्षणा ॥

अष्टाक्षरो ह्यय मन्त्रो नित्य पुष्णाति सविदम् ।
करिणो नाम कर्तारस्त्रिशुद्धास्त्रिक्रियापरा ॥ १५६ ॥

तानिच्छामि सदा द्रष्टु मनसा [6]यामि तान् सदा ।
हिमशैलेन्द्रसकाशा गजेन्द्रा मम वाहना ॥१५७॥

विरणाना शब्दाना च । तत्र शब्दानामाह—उत्तरोत्तरमिति । पश्यन्तीमध्यमावैखरीरूपेणेत्यर्थ । श्रुतौ "देवमख" इति व्यत्ययेन तृतीयार्थे प्रथमा । मणिनेत्यस्य विवरणम्—आधारवह्निनेति । १४४. श्रुतौ "उपैतु" इत्यस्यार्थवर्णनम्—मनामीति । ओ कीर्त्यै नम । १४६. ऋद्धिरिति नाम निर्वक्ति—ऋद्धेति । समृद्धेत्यर्थ । अर्धयामि, प्रीणयामि । वृद्धिमेवाह—पत्रेष्विति । १४७. ऋध्यामि, वृद्धिं प्राप्नोमि । ओ ऋद्ध्यै नम । १४८. गन्धशब्दो रूपरसादीनामप्युपलक्षकस्तदाश्रयपृथिव्यादीनि लक्षयति । "अन्न ब्रह्मेति व्यजानात्" इत्यत्रान्नमयकोशो ब्रह्मज्ञानद्वारत्वेन श्रुतौ विहित । "पृथिवी वा अन्नम्" इति श्रुतिरेवान्नशब्द पृथ्वीपरमाचष्टे । अतो देवीज्ञाने पृथिव्यादयो द्वारभूयमापद्यन्ते । ओ गन्धद्वारायै नम । १५१. तत्, अपनयनम् । १५२. तदभावा, धर्षणाभावरूपेत्यर्थ । ओं दुराधर्षायै नम । १५४. नित्यपुष्टानामनिर्वचनम्—नित्येनेत्यादिना । सद्गुणै, ज्ञानशक्त्यादिगुणै । विषयैर्विनापि मे सविद्रूपा परा तनु पुष्टेत्यन्वय । ओं नित्यपुष्टायै नम । १५६. करीषिणीति नाम निर्वक्ति—करिण इति । कर्तार इति । करिन्शब्द कृधातोर्निष्पन्न इति भाव । त्रिशुद्धा, कायवाङ्मनसशुद्धा । त्रिक्रिया, यजनदानाध्ययनरूपा । १५७. इच्छार्थकमुधातुमादायार्थमाह—

[1] ऋध्याम्यह I [2] मनेऽर्द्ध I [3] I omits five lines from here
[4] भीतिविमोचन I [5] नित्या च I [6] धारितान् B

तेरीश्वरा सदा यामि धर्त्री चान्तवती[1] सदा ।
करीषिणीति मा तेन तत्त्वज्ञा सम्प्रचक्षते ॥१५८॥

सप्ताक्षरो ह्यय मन्त्र सर्वकामसमृद्धिद ।
भूतानामीश्वरा चास्मि [2]प्रियेणेशेन सर्वदा ॥१५९॥

वरदा भुवनेशाना वनिता[3] च सदाखिले ।
वृद्धिदा वर्धमाना च क्षपणी च सदाहसाम् ॥१६०॥

ईश्वरीत्येव मे नाम तेन वेदे निरूपितम् ।
षडक्षरो ह्यय मन्त्र सर्वैश्वर्यसमृद्धिद ॥ १६१ ॥

भौमान्तरिक्षदिव्याख्या ये चाप्यप्राकृता परे ।
सदानन्दमयास्त्वेते सर्वे कामा मयि श्रिता ॥१६२॥

मनोरथाना सर्वेषा पराहं विश्रमस्थली ।
विष्णोश्च मनस काम साह सर्वातिशायिनी ॥

मनस काम इत्येव तेन मा तुष्टुवु सुरा ।
नवाक्षरो ह्यय मन्त्र सर्वकामसमृद्धिद ॥ १६४॥

लौकिक्योऽप्यथ वैदिक्यस्तथा बाह्यागमोद्भवा ।
निर्घोषा घोषवत्यश्च या वाच परिकीर्तिता ॥

मामभिप्रेत्य सर्वासा तासामुच्चारणक्रिया ।
मामभिप्रयते सर्वो जन सर्वात्मना स्थिताम् ॥

तेन तेन प्रकारेण वाचामुच्चारणक्रमे ।
आकूतिर्वचसा तेन वेदज्ञैरस्मि भाविता ॥ १६७॥

अष्टाक्षरो ह्यय मन्त्र सर्वशब्दार्थसिद्धिद ।
सच्च त्यच्च जगद् द्वेधा यत् प्रमाणेन दृश्यते ॥१६८॥

तत् सर्वमहमस्मीति सत्य मामृषयोऽब्रुवन् ।
षडक्षरो ह्यय मन्त्र सर्वसत्यफलप्रद ॥ १६९॥

पश्यन्ति पशवो जीवा विधाभिस्तिसृभि स्थिता ।
तेषा रूप तु यच्छक्त चैतन्य हेयवर्जितम ॥१७ ॥

तद्रूपमहमेवास्मि चिद्घनानन्दरूपिणी ।
मच्छक्तिलेशास्ते सर्वे जीवाश्चिच्छक्तिसञ्ज्ञका ॥

आग्नेयी या हि मच्छक्ति सा हि जाता तथा तथा ।
पशूना रूपमित्येव साख्या मा सम्प्रचक्षते ॥१७२॥

नवाक्षरो ह्यय मन्त्र सम्यग्ज्ञानफलप्रद ।
त्रैगुण्य [4]षड्गुणोत्थ च द्विधात्र परिकीर्तितम् ॥

तानिच्छामीति । "इष गतौ" इत्येतदभिसन्धायाह—मनसा यामीति । करिशब्दस्य गजपरत्वप्रसिद्धिमभिप्रेत्याह—गजेन्द्रा इति । ओं करीषिण्यै नम । १५९. ईश्वरीति नाम निराह—भूतानामित्यादिना । ईश्वरेति, ईष्टे इत्यर्थे "स्थेशभास" इत्यादिना वरचि रूपम् । भूतशब्दो निखिलचेतनाचेतनपर । प्रियेणेशेनेति सहयोगे तृतीया । वनिता, ध्यातेत्यर्थ । ओं ईश्वर्यै नम । १६३. मनस काम इति नाम्नो निर्वचनान्तरमाह—मनोरथानामिति । ओं मनस कामाय नम । १६५. वाच आकूतिरिति नाम निर्वक्ति—लौकिक्य इति । १६६. अभिप्रेत्येति । आकूतिशब्दोऽभिप्रायपर इति भाव । सर्ववचसा तात्पर्यभूमिरित्यर्थ । ओ वाच आकूत्यै नम । १६८. सत्यमिति नाम निराह—सच्चेति । "सच्च त्यच्चाभवत्" इति श्रुतिरत्राभिप्रेता । ओं सत्याय नम । १७०. पशूना रूपमिति नाम निराह—पश्यन्तीति । पशुशब्दो जीवपर । तिसृभिर्विधाभिरिति । देवतिर्यङ्मनुष्यरूपाभि , बद्धमुक्तनित्यरूपाभिर्वेत्यर्थ । १७२. आग्नेयी शक्ति , भोक्तृशक्ति । ओं पशूना रूपाय नम । १७३. अन्नस्य यश इति नाम निराह—

[1] अन्नवती I
[2] प्रिया चेशेन I
[3] भुवनेशानामीडिता I
[4] षाड्गुणोत्थं B F

त्रैगुण्यमनुबद्धानामितरेषामथेतरत् ।
द्विविधस्यापि चान्नस्य यद्यशो रूपमुत्तमम् ॥

तदहं सर्वभूतात्मा तत्त्वज्ञैः परिकीर्तिता ।
प्राकृताप्राकृता भोगा मच्छक्तिप्रविजृम्भिताः ॥

सोमशक्तिर्मदीया या सा हि जाता तथा तथा ।
अन्नस्य यश इत्येवं मां विदुस्तत्त्वचिन्तकाः ॥

नवाक्षरो ह्ययं मन्त्रो भोगसर्वस्वदायकः ।
मिमे षडध्वनो व्याप्ता मीये मानैस्तथाखिलैः ॥१७७॥

मितिश्च सर्वमानानां माति चान्तर्ममाखिलम् ।
तारयामि जगत् सर्वमपारं[1] भवसागरम् ॥ १७८ ॥

उत्तीर्णा सर्वदोषाघे प्लवे भूतेषु चेतसः ।
प्लावयामि जगद्विश्वं[2] पयसा मेघतां गता ॥१७९॥

प्रियं हितं च सर्वेषां चिन्तयामि करोमि च ।
तेन मां सर्वभूतानां मातरं योगिनो विदुः ॥१८०॥

पञ्चाक्षरो ह्ययं मन्त्रः सर्वभोगसमृद्धिदः ।
सुषुम्ना नाम या नाडी नाडीचक्रस्य नायिका ॥

मुक्तियानं महायानं योगियानमिति श्रुता ।
शक्तिर्या वैष्णवी सूक्ष्मा मन्मयी परिकीर्तिता ॥

सकलपविषयं सर्वो यामालम्ब्यावतिष्ठते ।
ऊर्ध्वं चाधश्च या भित्त्वा प्रतिजीवं [3]वपुर्गतिम् ॥

व्याप्ता परममाकाशं सा सुषुम्नेति गीयते ।
मुक्तयेऽखिलजीवानां संसाराखिलखेदिनाम् ॥

साहं सुषुम्नारूपेण वर्ते देहेषु देहिनाम् ।
आ वस्तिशीर्षाद्दा मूर्ध्नस्तस्या शक्तौ पुरंदर ॥१८५॥

आधाराख्यानि पद्मानि द्वात्रिंशत् संस्थितानि वै ।
पद्मानां मालया व्याप्ता ततोऽहं पद्ममालिनी ॥

प्रकृतिं पुरुषं चैव कालं चैव सनातनम् ।
धारयामि स्वरूपेण ततोऽहं पद्ममालिनी ॥१८७॥

अष्टाक्षरो ह्ययं मन्त्रः सर्वकर्मफलप्रदः ।
पोषं करोमि सर्वेषां रूपेण यशसा श्रिया ॥१८८॥

पुष्करं च नयाम्येकां कालाख्यं पद्मरूपकम् ।
तेन पुष्करिणीत्येवमृषयो मां प्रचक्षते ॥ १८९ ॥

त्रैगुण्यमिति । त्रैगुण्यमत्र प्राकृतभोग्यजातम् । षाड्गुण्यमन्नम् अप्राकृतभोग्यजातम्, यदभिप्रेत्य "अहमन्नादोऽहमन्नादोऽहमन्नादः" इति मुक्तानां गानं श्रुतिराह । १७६. सोमशक्तिः, भोग्यशक्तिः । ओं अन्नस्य यशसे नमः । १७७. "मातरं पद्ममालिनीम्" इत्यत्रत्य मातेति नाम निर्वक्ति—मिमे इति । भुवनपदमन्त्रतत्त्वकलावर्णाख्यान् षडध्वनः परिच्छिनद्मीत्यर्थः । १७८. मितिः, ज्ञानम् । माति, परिमितं वर्तते । एवं माशब्दार्थमुक्त्वा तृशब्दार्थमाह—तारयामीति । "तॄ प्लवनतरणयोः" इति धातुः । १७९. प्लवनार्थमाह—प्लावयामीति । ओं मात्रे नमः । १८२. सुषुम्नापर्यायनामान्याह—मुक्तियानमिति । १८४. परममाकाशम्, ब्रह्मरन्ध्रम् । १८५. वस्तिः, नाभेरधोभागः । १८६. द्वात्रिंशदिति । योगशास्त्रप्रसिद्धानि आधारपद्मानि । १८७. प्रकृत्यादीनां पद्मशब्दार्थत्वं पूर्वमेवोक्तम् । ओं पद्ममालिन्यै नमः । १८८. पुष्करिणीनाम निर्वक्ति—पोषमिति । पुष्धातुं कृधातुं चादाय निरुक्तिर्विवक्षिता । १८९. पद्मपर्यायात् पुष्करशब्दात् व्युत्पत्तिमाह—पुष्करमिति । ओं पुष्करिण्यै नमः ।

[1] सर्वं परमं I
[2] सर्वं I
[3] पुनर्गतिम् B F

सप्ताक्षरो ह्यय मन्त्र सर्वपापफलप्रद ।
इष्टास्मि सर्वदेवाना सगता हरिणा सदा ॥ १९०॥

दात्री च सर्वकामानामखिलस्यावलम्बनम् ।
मामालम्ब्यावतिष्ठन्ते प्रधानपुरुषादय ॥ १९१ ॥

यष्टिरित्येवमृषयो मा तत सम्प्रचक्षते ।
षडक्षरो ह्यय मन्त्र सर्वयोगफलप्रद ॥ १९२ ॥

पिङ्गलास्मि स्वया भासा प्रतप्तकनकाभया ।
पिङ्गाय चाप्यदा पूर्वं यक्षेशाय महाश्रियम् ॥

यक्षेशो मा पुरा शक्र पिङ्गलेत्येवमूचिवान् ।
सप्ताक्षरो ह्यय मन्त्रो योगतेज समृद्धिद ॥१९४॥

तोषयामि गुणैर्विष्णु तुष्यामि च हरेर्गुणै ।
मयि तुष्टि समस्तानामीडिताया स्वकर्मभि ॥१९५॥

तुष्टिर्निरूपिता तेन साहृ योगाधिपारगै ।
षडक्षरो ह्यय मन्त्रो मन सतोषदायक[1] ॥ १९६॥

सुवर्णयामि ससिद्धानपर परमेव वा ।
अनिदप्रथमा वर्णा शोभना मम वाचका ॥१९७॥

नित्या सरस्वती भूत्वा शोभन वर्णयाम्यहम् ।
सुवर्णेति ततो विप्रैस्तत्त्वज्ञै परिकीर्तिता ॥१९८॥

सप्ताक्षरो ह्यय मन्त्र सर्वसपत्समृद्धिद ।
[2]हैम च पर्वत दिव्य चन्द्रार्कग्रहपूरितम् ॥१९९॥

धारयामि धरा भूत्वा वेधस स्थितिसिद्धये ।
तुष्टाव मा पुरा तेन विरिञ्चो हेममालिनीम् ॥

अष्टाक्षरो ह्यय मन्त्रो मानवाना धृतिप्रद ।
हिताय सर्वजीवाना प्रसूये तत्त्वपद्धतिम् ॥२०१॥

रमयामि पुनस्तत्र भुक्त्या मुक्त्या यथार्हत ।
नियच्छामि तथा काले सजीवा तत्त्वपद्धतिम् ॥

सूरिभ्यश्च हिता नित्य सूर्यरूपार्कमण्डले ।
सूर्येति सूरिभि प्रोक्ता ततोऽह तत्त्वचिन्तकै ॥

षडक्षरो ह्यय मन्त्रो भोगमोक्षफलप्रद ।
इति नाम्ना त्रिपञ्चाशत् सूक्तस्थाना प्रकीर्तिता ॥

कृतार्थयन्ति मा प्राप्य धीरा स्वै स्वैरभीप्सितै ।
यद्यप्येषा मया प्रोक्ता व्यवस्था फलगोचरा ॥२०५॥

१९०. यष्टिरिति नामाह—इष्टासीति । सर्वदेवै पूजितेत्यर्थ । १९१. यष्टिशब्दस्य दण्डार्थ-
कत्वाभिप्रायेणाह—अवलम्बनमिति । ओं यष्ट्यै नम । १९३. पिङ्गलानामाह—पिङ्गायेति ।
"ला दाने" इति धातुमभिसधायाह—अदामिति । ओं पिङ्गलायै नम । १९५ तुष्टिनाम-
निर्वचनम्—तोषयामीत्यादिना । ओं तुष्ट्यै नम । १९७. सुवर्णेति नाम निराह—सुवर्ण-
यामीति । सुव नयामीति छेद । आर्षं णत्वम् । अपर सुव स्वर्ग । पर सुव परमपदम् ।
सु शोभना वर्णा वाचका यस्या इति व्युत्पत्तिमाह—अनिदमित्यादि । १९८. अर्थान्तर-
माह—शोभनमित्यादि । ओं सुवर्णायै नम । १९९. हेममालिनीति नाम निरुच्यते—
हैममिति । महामेरुमित्यर्थ । ओं हेममालिन्यै नम । २०१. सूयेति नाम निर्वक्ति—हिता-
येति । प्रसूये इति सूत्रार्दार्थ । २०२. रमयामीति रेफार्थ । यथार्हत, अधिकारिभेदेने-
त्यर्थ । नियच्छामीति यकाराथ । २०३. अर्थान्तरमाह—सूरिभ्यश्चेति । हितेति, यत्प्रत्य-

[1] वारक I

[2] हेमन B C

न तावदेव माहात्म्यमेषां चिन्त्यं विपश्चिता ।
[1]आ मोक्षान्निर्विचारेण सर्वा सर्वफलप्रदा ॥२०६॥

नामावली यतो ह्यस्याः श्रीरहं देवता परा ।
नक्षत्राणि यथा व्योम्नि यथा रत्नानि वारिधौ ॥

वसुधायां यथा भोगा यथा कामाः सुरद्रुमे ।
महिमानो यथा गोषु तेजांसि ब्राह्मणे यथा ॥२०८॥

यथानन्ता गुणा दिव्या देवदेवे जनार्दने ।
महिमानो ह्यसीमानस्तथास्मिन् सूक्तके मम ॥

यावान् हि भगवान् कालः कलाकाष्ठादिलक्षणः ।
तावता नैव शक्नोमि वक्तुं सूक्तगुणानहम् ॥२१०॥

सैषा वेदविदां निष्ठा सैषा [2]तन्त्रविदां गतिः ।
मां प्रपद्येत सततं सूक्तेनानेन मानवः ॥ २११ ॥

सूक्तार्थमनुसंस्मृत्य चिरं सूक्तमधीत्य च ।
लब्धे चित्तप्रसादे तु मां प्रपद्येत वै गतिम् ॥

प्रपद्यमानो मां नित्यं देवं वा पुरुषोत्तमम् ।
इत्येवमनुसंदध्याच्छ्रद्दधानो जितेन्द्रियः ॥ २१३ ॥

प्रातिकूल्यं परित्यक्तमानुकूल्यं च संश्रितम् ।
मया सर्वेषु भूतेषु यथाशक्ति यथामति ॥ २१४ ॥

अपायेभ्यो निवृत्तोऽस्मि पातकेभ्यो भयोदधौ ।
तथाप्यत्र प्रवृत्तिर्या त्वत्स्मृतेः [3]सापि नश्यतु ॥

अलमस्याल्पशक्तेश्च यथावच्चाविजानतः ।
उपायाश्चोदिताः शास्त्रैर्न मे स्युस्तारकास्त्रयः ॥

तथाप्यत्र प्रवृत्तिर्या त्वदाज्ञापालनं तु[4] तत् ।
ततोऽहमनुपायत्वात् कृपणोऽकिंचनोऽगतिः ॥२१७॥

छायामाश्रित्य वर्तेऽहं त्वदीयां तापहारिणीम् ।
निरुपाधिः स्वतन्त्रा च स्वामिनी नः कृपानिधिः ॥

त्वमेव सर्वशास्त्रेषु शरणत्वेन गीयसे ।
आत्मात्मीयं च यत्किंचिद् दुस्त्यजं दुर्भरं मतम् ॥

[5]तत् सर्वं तव विन्यस्तं शुभयोः पादपद्मयोः ।
उपेयायास्तव प्राप्त्यै त्वामुपायं तथा वृणे ॥२२०॥

उपायो भव मे देवि शरणं भव मेऽम्बुजे ।
पुष्प मे दुरितं सर्वं पुष्य मे त्वद्गतां धियम् ॥२२१॥

यार्थ इति भावः । ओं सूर्यायै नमः । २११. सैषेत्यस्य प्रतिसंबन्धी यदिति शब्द अध्याहार्यः । मां प्रपद्येतेति यत् सैषेति निष्ठाशब्दानुगुणः स्त्रीलिङ्गनिर्देशः; "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत् । २१३. इत्येवमिति । वक्ष्यमाणरीत्येत्यर्थः । २१४. प्रातिकूल्यमित्यादिना सप्तदशोऽध्याये प्रोक्तान्यङ्गान्यत्र स्मार्यन्ते । २१६. त्रयः कर्मज्ञानभक्त्याख्य उपाया इत्यर्थः । २१७. तथापीति । चेदितानामनुपायत्वेऽपीत्यर्थः । अत्र; उपायेषु । आज्ञापरिपालनमिति । "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" "अग्निहोत्रं जुहुयात्" "अग्निष्टोमेन यजेत" "मुमुक्षुर्वै शरणमहं प्रपद्ये" "नियतं कुरु कर्म त्वम्" "मामेकं शरणं व्रज" "[illegible]" इत्यादिविधिवाक्यपरिपालनमित्यर्थः । २१८. छायामिति; स्वरूपमिति भावः । २२०. मां [illegible] उच्यते । २२१. पुष्य धियमित्यनेन फलान्तरं प्रार्थ्यते ।

[1] [illegible] I. [2] मन्त्र I. [3] अस्तु I.
[4] हि I. [5] [illegible]

इत्येवमनुसंधाय मां प्रपद्येत वै गतिम् ।
आदिदेवं जगन्नाथमीशं वा पुरुषोत्तमम् ॥२२२॥

परं स्वस्त्ययनं शक्र सर्वालक्ष्मीनिबर्हणम् ।
श्रावयेत् कर्मकालेषु मत्सूक्तस्य विधिं नरः ॥२२३॥

समर्थयति कर्माणि श्रोतारं पोषयत्युत ।
निर्णुदत्यखिलां मायामलक्ष्मीं च मलैः सह ॥

एतदभ्यस्यमानं हि कर्मणा मनसा गिरा ।
त्रायते महतः पापाच्छ्रियं चावहति ध्रुवम् ॥२२५॥

इति ते कथितं शक्र तन्त्रमेतदनुत्तमम् ।
यत्र सर्वाणि वर्तन्ते विज्ञानानि विपश्चिताम् ॥

मोक्षशास्त्रं यथा श्रेष्ठं शास्त्राणां विविधात्मनाम् ।
द्विपदां ब्राह्मणः श्रेष्ठो यथा गौश्च चतुष्पदाम् ॥

लोहानां कनकं श्रेष्ठं रत्नानां कौस्तुभो यथा ।
माता श्रेष्ठा गुरूणां च पुत्रः प्रवदतां यथा ॥२२८॥

[1]इन्द्रियाणां मनः श्रेष्ठं चलतां च मरुद्यथा ।
मेरुः श्रेष्ठो गिरीणां च त्रिस्रोताः सरितां यथा ॥

आश्रमाणां गृहस्थश्च वसिष्ठो जपतां यथा ।
तत्त्वानां सर्वसंन्यासो धीलाभानां यथोत्तमा ॥

तथोत्तममिदं तन्त्रं तन्त्राणां तत्त्ववादिनाम् ।
भगवान् वासुदेवोऽस्मिन् विष्णुर्नारायणो गुरुः ॥

अहं च कीर्तिता सम्यक् स्वरूपगुणवैभवैः ।
अस्यां हि मन्मतौ सक्ता विशुद्धज्ञाननिश्चयाः ॥

एतां निश्रेणिकां गृह्य ह्यारोहन्ति परं पदम् ।
तन्त्राणां [2]परमं तन्त्रं मुद्रितं मत्समाख्यया ॥२३३॥

नाव्रतस्नायिने देयं न [3]कृतघ्नाय वै तथा ।
न चातन्त्रविदे नित्यं नासूयादूषिताय च ॥ २३४॥

नावासुदेवभक्ताय न चाभक्तिमते मयि ।
देयमेतत् सुशीलाय सुस्नाताय तपस्विने ॥ २३५॥

निर्णीतवेदतन्त्राय मद्भक्ताय विशेषतः ।
[4]भूयसीं वहते भक्तिं वासुदेवे जनार्दने ॥२३६॥

शुचिव्रताय दक्षाय सदनुष्ठानशीलिने ।
एतत्ते कथितं सर्वं यत्पृष्टाहमिह त्वया ॥
प्रीताहं त्वयि देवेश किं भूयः श्रोतुमिच्छसि ॥२३७॥

इति [5]श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रे श्रीसूक्तप्रभावप्रकाशो नाम
पञ्चाशोऽध्यायः[6]

२२४. समर्थयति; फलप्रदानसमर्थानि करोति । मायाम्; प्रकृतिसंबन्धम् । अलक्ष्मीं च मलैः सहेत्यनेन "क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्" इति श्रीसूक्तार्थः स्मार्यते । २२५. त्रायत इत्यादिना अनिष्टनिवृत्तिरिष्टप्राप्तिश्चोच्यते। २३०. आश्रमाणामिति। आश्रमिणामित्यर्थः।

श्रीवासाभिधसंयमीन्द्रवरिवस्यासादिताध्यात्मधीराम्नायान्तनितान्तचिन्तनरतः श्रीकृष्णनामा सुधीः ।
लक्ष्मीतन्त्रमनाविलेन सुपथा व्याचष्ट सत्प्रीतये प्रीणातु प्रियभक्तरक्षणविधादक्षा मुकुन्दप्रिया ॥

## इति पञ्चाशोऽध्यायः

---

[1] I. omits three lines from here.
[2] मे परं तन्त्रं मन्त्रितं I.
[3] व्रत I.
[4] भूय उद्वहते I.
[5] श्रीपद्मरात्र A.; श्रीपाद्मरात्रे B.
[6] B. adds the following after the colophon: लक्ष्मीतन्त्रं समाप्तम् । श्लोकसंख्या ३५००

मद्रपुरीराजकीयप्राच्यलिखितपुस्तकालयस्थे (I) इति संकेतिते कोशे अग्रे निर्दिष्टा अध्याया अधिकाः पठ्यन्ते—

## एकपञ्चाशोऽध्यायः

शक्रः—

[1]उत्पत्तिप्रलयौ चैषां फलं चैवावधारितम् ।
प्रतिपत्तिविशेषाश्च येषु तेषु यथा तथा ॥ १ ॥

नित्यानि पञ्च कृत्यानि कादाचित्कानि चैव ते ।
चर्यापादक्रियापादौ पादौ च ज्ञानयोगयोः ॥ २ ॥

इति नानाविधं तन्त्रं चतुष्पादोपबृंहितम् ।
पुराहत्या पुराकल्पैरितिहासैश्च संमितम् ॥ ३ ॥

रहस्यानेकसंभेदं नानावाक्योपशोभितम् ।
लक्ष्मीतन्त्राह्वयं सम्यक् सद्यः प्रत्ययकं नृणाम् ॥ ४ ॥

मया समाहितेनैव यथावदवधारितम् ।
अस्य विस्मृतरूपत्वात् सम्यक्कालविपर्ययात् ॥ ५ ॥

चेतसोऽप्यप्रसन्नत्वाच्च यथावन्नैव भासते ।
अस्मान्महार्णवाद्देवि स्वज्ञानपरिपूरितान् ॥ ६ ॥

सर्वतः सारमुद्धृत्य लोकानां हितकाम्यया ।
तन्त्रसंक्षेपमाख्याहि नमस्ते पद्मसंभवे ॥ ७ ॥

नारदः—

इति संचोदिता देवी शक्रेणैव पयस्विनी ।
स्निग्धेन मनसा पद्मा पाकशासनमब्रवीत् ॥ ८ ॥

श्रीः—

साधु संबोधिता सम्यक् यत्त्वं पृष्टवानसि ।
शृणु सर्वोत्तमाख्यानि तन्त्रादस्मात् समुद्धृतम् ॥ ९ ॥

अहंता सर्वभूतानामहमस्मि सनातनी ।
आरोहेणावरोहेण विश्वसिद्धिकरी स्मृता ॥ १० ॥

परमं यदहंताख्यं तुर्यातीतं तदुच्यते ।
परं ब्रह्म परं धाम लक्ष्मीनारायणं तु तत् ॥ ११ ॥

न तत्र प्रविभागो नौ भवद्भावव्यवस्थितौ ।
उन्मेषस्तत्र यो नाम यथा चन्द्रोदयेऽम्बुधौ ॥ १२ ॥

अहं नारायणी शक्तिः सिसृक्षालक्षणा तथा ।
तुर्यावस्था च सा मे स्यात् परिणामोद्भवात्मिका ॥

शुद्धाशुद्धमयो भावः सर्वोऽप्यन्तर्गतस्तदा ।
व्यूहाश्च विभवाश्चैव तथा व्यूहान्तरादिकाः ॥ १४ ॥

अयं शुद्धमयो भावो यथान्यद्भगवन्मयम् ।
व्यूहे च विभवे चैव तथा व्यूहान्तरादिके ॥ १५ ॥

सुषुप्ताद्या अवस्था मे प्रत्येकं चैवमुत्प्रथेत् ।
अव्यक्तमहदाद्याश्च तथा वैकारिकं जगत् ॥ १६ ॥

शुद्धेतरस्वरूपं भावस्तिस्रोऽवस्थाश्च तत्र वै ।
प्रत्येकमुभयेष्वेवं तत्र तत्र विभाव्यते ॥ १७ ॥

मूर्ते स्थिते च विज्ञेया दशा एताश्चतुर्विधाः ।
अपरोऽस्ति प्रसङ्गेऽयं शुद्धाशुद्धमयेऽध्वनि ॥ १८ ॥

प्रमाणपक्षोपेतारोहेषु सदा भवेत् ।
सूक्ष्मकालादिभेदेन प्रमाणगणना दश ॥ १९ ॥

[1] Evidently one or two verses are missing in the beginning.

करण द्विविध विद्धि बाह्यमाभ्यन्तर तथा।
उभयोरपि तावद्धि तूर्ष्णीभावादिके क्रमे ॥ २० ॥

ज्ञेय बहुविध प्रोक्त तत्राप्येव समुन्नयेत्।
तुर्यातीतत्वमेतेषा भगवद्भाववेदनम् ॥ २१ ॥

अवरोहोऽयमुद्दिष्ट आरोहमपि मे शृणु।
चरमा कोटिमारभ्य मदन्तोऽभूद्वयवस्थित ॥२२॥

आरोह स तु विज्ञेय शुद्धाशुद्धमयेऽध्वनि।
आरोहमवरोह च सतत भावयन्नर ॥ २३ ॥

मच्चित्तो मद्गतप्राणो मद्भाव समुपाश्नुते।
आकारकालदेशान्मे परिच्छेदोऽस्ति नैव च ॥२४॥

मयैव ज्ञानरूपिण्या व्याप्तास्ते पाकशासन।
आत्मभित्तौ जगत् सर्वमिच्छयोन्मीलयाम्यहम् ॥

तद्रूपतारतम्येन ग्राह्यग्राहकसस्थिति।
वाच्यात्मपरिणामोऽयं लेशतस्ते प्रदर्शित ॥ २६ ॥

वाचकात्मानमस्य त्वं समाहितमना शृणु।
शुद्धसविन्मयी पूर्वं विवर्ते प्राणरूपत ॥ २७ ॥

तत्तत्स्थानप्रसङ्गेन विवर्ते शब्दतस्तथा।
शान्ता सूक्ष्मा तथा मध्या वैखरीति विवेकिनी ॥

चतूरूप चतूरूपवाचि वाच्य स्वनिर्मितम्।
शान्ता विवर्तमानाह प्रपद्ये सूक्ष्मसस्थितिम् ॥२९॥

शक्तिर्नाद इति द्वेधा सूक्ष्मरूपव्यवस्थिति।
सूक्ष्मा विवर्तमानाह प्रपद्ये मध्यमा स्थितिम् ॥३०॥

बिन्दुसस्कारसपत्ति सावस्थाक्षरसतते।
मध्या विवर्तमानाह प्रपद्ये वैखरीस्थितिम् ॥ ३१ ॥

पञ्चाशदादिभेदेन सावस्थाक्षरसतते।
आरोहमवरोह च सततं भावयन्निमौ।
शब्दब्रह्मणि निष्णात शब्दातीत प्रपद्यते ॥ ३२ ॥

इति श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रोद्धारे तन्त्रार्थसग्रहे
एकपञ्चाशोऽध्याय

---

# द्विपञ्चाशोऽध्यायः

श्री —

अथ मन्त्रमयं मार्गं शृणु वत्स पुरंदर ।
प्रकाशानन्दरूपाहं पूर्णाहंता हरेरहम् ॥ १ ॥

मन्त्रमातेति मां विद्धि प्राणाख्यां शुद्धचिन्मयीम् ।
उद्यन्ति मत्त एवैते यान्ति चास्तं मयि ध्रुवम् ॥२॥

अहं च मन्त्रमेतेषां मद्रूपत्वं विदन्ति ते ।
एकधा च द्विधा चैव त्रिधा चैवाहमूर्जिता ॥ ३ ॥

चतुर्धा पञ्चधा षोढा सप्तधा चाष्टधा तथा ।
तथा षोडशधा चैव पञ्चविंशतिधा तथा ॥ ४ ॥

पञ्चाशद्धा पुनश्चैव पुनश्चाहं त्रिषष्टिधा ।
उदेमि बहुधा चैव चिन्तामणिरिवेश्वरी ॥ ५ ॥

स्वराश्च व्यञ्जनाश्चैव स्वरव्यञ्जनसहतिः ।
अक्षराणि पदान्येवं वाक्यप्रकरणैः सह ॥ ६ ॥

आह्निकाध्याययोश्चैव शास्त्रतन्त्रव्यवस्थितिः ।
आगमा बहुधा चैव ग्राह्याग्राह्यव्यवस्थिति. ॥ ७ ॥

लौकिका वैदिकाश्चैवं भाषाश्च विविधास्तथा ।
मन्त्ररूपमिदं विद्धि सर्वं मद्रूपवेदिनाम् ॥ ८ ॥

भावनातारतम्येन ग्राह्यग्राहकसंस्थितिः ।
आसत्तिविप्रकर्षौ च भावनातारतम्यतः ॥ ९ ॥

बीजं पिण्डं पदं संज्ञेति मन्त्राश्चतुर्विधाः ।
तेषां प्रधानतो विद्धि पञ्च रत्नानि वासव ॥ १० ॥

मत्स्वरूपे तानि बीजानि दृष्टि सर्विरियाहितम् ।
सूर्यसोमाग्निखण्डो यं नादयत् पाकशासन ॥ ११ ॥

यदत्र सूर्यरूपं तज्ज्ञाप्रत्पदमुदाहृतम् ।
वह्निः स्थाम सुषुप्तिश्च सोमो माया पराह्वया ॥१२॥

खण्डं यदिन्दुखण्डाख्यं तुर्यं नादस्ततः परम् ।
शक्तिः शान्तात्मिकावस्था नादस्यैव तु संस्थितिः ॥

ततः परं तु यद् ब्रह्म लक्ष्मीनारायणं तु तत् ।
स्वराणां षट्चतु.षट्कं सूर्याग्नीन्दुसमुद्भृतम् ॥१४॥

शेषा वर्णा स्वरोत्पन्ना इतीयं वर्णसंस्थितिः ।
इतीदं परमं बीजं सर्वकामफलप्रदम् ॥ १५ ॥

पुत्रदं पुत्रकामानां राज्यकामस्य राज्यदम् ।
भूतिदं भूतिकामानां मोक्षकामस्य मोक्षदम् ॥१६॥

विध्वंसयति शत्रूंश्चाप्यार्पयति वाञ्छितम् ।
चिन्तामणिरिदं नाम नैव चिन्तामणिर्मणिः ॥१७॥

तस्यैव चानुगं बीजं शराद्यं सर्वकामदम् ।
युग्मैर्मायाक्षरादेशैराद्यन्तरस्वरपद्क्तयोः ॥ १८ ॥

अङ्गक्लृप्तिरियं कार्या जातिमुद्रासमन्विता ।
शिष्टबीजचतुष्कस्याप्येवमेव व्यवस्थितिः ॥१९॥

पूर्णाहंतासमावेशादादिबीजसमन्वयात् ।
नानाविधो मन्त्रगणो मदीयत्वं प्रपद्यते ॥ २० ॥

मन्त्राणां देवता या सा मा मन्त्रस्याधिनिष्ठिता ।
मदाकारभाविनी चैव तस्माद्रूपेयास्मि तत्र वै ॥२१॥

तां तां वै देवतां तत्र नारीरूपामनुस्मरेत् ।
तत्तद्वर्णायुधाकारभूषणादिसमन्विताः ॥ २२ ॥

मदीयत्वं समासाद्य ताः शीघ्रफलदास्तथा ।
इति ते मन्त्रमार्गोऽयं लेशतः शक्र वर्णितः ॥२३॥

इति श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रोद्धारे तन्त्रार्थसमुद्रे
द्विपञ्चाशोऽध्यायः

# त्रिपञ्चाशोऽध्यायः

श्री —

क्रियापाद प्रवक्ष्यामि सक्षेपेण पुरदर ।
परिच्युतमल स्नातो यथावच्छास्त्रदर्शनात् ॥ १ ॥

एकान्त स्थानमासाद्य स्थानशुद्धिपुर सरम् ।
ज्ञानभावनया शक्र भूतशुद्धि समाचरेत् ॥ २ ॥

पृथिव्यादि प्रकृत्यन्त यत् प्रकृत्यष्टक विदु ।
स्थूलसूक्ष्मविभेदेन तत्र रूपद्वय स्मृतम् ॥ ३ ॥

चक्षुर्गोचरसस्थान स्थूलरूप तु वर्ण्यते ।
कारणाकारता तत्र सूक्ष्म तन्मात्रमुच्यते ॥ ४ ॥

स्थूलसूक्ष्मविभेदेन तत्त्वमेतद् द्विरष्टकम् ।
विषयेन्द्रियवृत्तीसु तत्र तत्र निवेशयेत् ॥ ५ ॥

उपस्थघ्राणगन्धादिपञ्चकेषु त्रय त्रयम् ।
पृथिव्यादिमहाभूतपञ्चकैस्तत्क्रमानयेत् ॥ ६ ॥

मनोऽभिमान इत्येतदहकारे शर्म नयेत् ।
प्राणमध्यवसायं च बुद्धितत्त्वे निगृहयेत् ॥ ७ ॥

सत्त्व रजस्तमश्चापि मूलाव्यक्ते शम नयेत् ।
द्विरष्टके तु वर्गऽस्मिन् मूलाष्टकमनुस्मरेत् ॥ ८ ॥

तत्तत्सज्ञा ध्रुनाद्या हुफडन्ता पाकशासन ।
मास मेदस्तथासृक् च रेतो व्योमाक्षरत्रयम् ॥ ९ ॥

पर पर बिन्दुयुत सूक्ष्माष्टकमनुस्मरेत् ।
अस्मिन् बीजाष्टके मायामिन्दुखण्डेन सयुताम् ॥

मन्त्रानिमान् विजानीयाच्छक्त्यष्टकगतान् बुध ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥११॥

शान्त्यतीताभिमाना च प्राणा गुणवती तथा ।
पृथिव्यादिप्रकृत्यन्ता शक्तीरेता स्मरेद् बुध ॥

बीजाष्टके तु तत्रैव वह्निमायार्धचन्द्रकान् ।
सयोज्य मन्त्रान् जानीयादधिष्ठातृगतानिमान् ॥

कालाग्न्यर्कसहस्राभा निर्धूमाङ्गारसनिभाम् ।
मा स्मृत्वा मन्मुखोत्थेन वह्निना निर्दहेद् भुवम् ॥

सोमायुताभमद्वक्त्रजेन सिञ्चेत्तथाम्बुना ।
स्थानशुद्धिर्भवेदेव भूतशुद्धिमत शृणु ॥ १५ ॥

इति श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रोद्धारे तन्त्रार्थसग्रहे
त्रिपञ्चाशोऽध्याय

---

पूर्वोक्तगतिमार्गेण व्युत्क्रमेणानयेद्धृदि ।
महानन्दात् स्वमात्मान सविदानन्दलक्षणम् ॥२५॥

तत करशरीरेषु मन्त्रन्यास समाचरेत् ।
अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीस्थेषु पर्वसु ॥ २६ ॥

तलयो पृष्ठयोश्चैव करयोरुभयोरपि ।
नाभितश्चाङ्घ्रिपर्यन्त नाभेरा मूर्धतस्तथा ॥ २७ ॥*

न्यस्य सधिषु मद्बीज हृदाद्यङ्गानि च न्यसेत् ।
पुनर्हृदादिषट्केन नाभिपृष्ठकरोरुषु ॥ २८ ॥

जङ्घापदोश्च ज्ञानादि षाड्गुण्य विन्यसेद् बुध ।
एवमुत्पादिते देहे शुद्धे लक्ष्मीमये शुभे ।
आधारषट्कविन्यास ज्ञानदृष्ट्या समाचरेत् ॥२९॥

इति श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रोद्धारे तन्त्रार्थसग्रहे
चतुष्पञ्चाशोऽध्याय

---

## पञ्चपञ्चाशोऽध्यायः

श्रीः—

आधारान् संप्रवक्ष्यामि शृणु त्वं पाकशासन ।
अथ मेढ्रान्तरे मेढ्रे नाभिमध्ये धनाधिप ॥ १ ॥

हृदि कूपे भ्रुवोर्मध्ये षट् पद्मानि स्मरेद् बुधः ।
वेदै रसैः प्रजानाथैरर्कैश्चैव विकारकैः ॥ २ ॥

अब्धिभ्यां च दलैर्युक्तान् सूर्यकोटिसमप्रभान् ।
कादितान्तैः स्वरैः सूर्यवर्णान्ताभ्यां च संयुतान् ॥

पङ्कजेष्वेषु मां देवीं रत्नदीपाकृतिं स्मरेत् ।
यत्र यत्र भवेद्वाञ्छा तत्रस्थो योगमभ्यसेत् ॥ ४ ॥

प्रथमाधारमारभ्य द्वादशान्ताम्बुजाततताम् ।
एकां दीपाकृतिं ध्यायेद्देहस्थामादिकां पराम् ॥ ५ ॥

क्रमोत्क्रमाभ्यां स्मरतस्तामिमां चिन्मयीं पराम् ।
यदा लयं मनो याति सा सत्ता वैष्णवी परा ॥६॥

देहबन्धे च वाञ्छा चेद्देहे त्वं मामकं शृणु ।
एकस्मिन् हृदये तोयं माहेन्द्रं मण्डपं स्मरेत् ॥७॥

चतुर्द्वारयुतं तत्र संस्मरेद् द्वारपालिकाः ।
बलाकिनीं पुरः श्यामां वनमालां तथापरे ॥ ८ ॥

श्वेतां विभीषिकां पश्चादुक्तवर्णामनुस्मरेत् ।
उत्तरे शांकरीं शक्र धूम्रवर्णामनुस्मरेत् ॥ ९ ॥

तत्र मण्डपमध्ये तु सहस्रादित्यसंनिभम् ।
अष्टपत्रं स्मरेत् पद्मं कर्णिकाकेसरोज्ज्वलम् ॥ १० ॥

पूर्वे दले वासुदेवं संकर्षं चैव दक्षिणे ।
प्रद्युम्नं पश्चिमे पत्रे त्वनिरुद्धमथोत्तरे ॥ ११ ॥

शङ्खचक्रधरान् सर्वान् वनमालाविभूषितान् ।
युगानुसारिकान्तींश्च स्मरेदमिसुरान् मम ॥१२॥

गुल्गुलुं च गुरुण्यं च मदनं शल्लं तथा ।
गजेन्द्रान् संस्मरेत् कोणे सुधां मामभिषिञ्चतः ॥

कर्णिकाबीजमध्यस्थां सर्वलोकमहेश्वरीम् ।
मां स्मरेत्तप्तहेमाभां पङ्कजद्वयधारिणीम् ॥ १४ ॥

वरदाभयहस्तां च सर्वाभरणभूषिताम् ।
अनिर्देश्यामनौपम्यां विष्णुपत्नीमनिन्दिताम् ॥१५॥

स्मितज्योत्स्नानुगैर्दिव्यैरसितापाङ्गसंभवैः ।
सिञ्चन्तीं किरणैः शीतैस्तप्ततप्तं जगत्त्रयम् ॥ १६ ॥

उत्पाद्य ज्ञानतो भोगांस्तैर्यजेत् परमेश्वरीम् ।
ब्रह्मानन्दमयैः सम्यङ् मन्मयैर्दोषवर्जितैः ॥ १७ ॥

यद्वा नारायणाङ्कस्थां तत्सङ्गाह्लादभूषिताम् ।
करेण दक्षिणेनेशमाश्लिष्यन्तीं निरन्तरम् ॥ १८ ॥

प्रतिपत्तिस्तु कर्तव्या सदा वैमानिकी तनौ ।
दांपत्यं तदमीमांस्यमावयोः श्रुतिगह्वरम् ॥ १९ ॥

बीजस्य स्थान[1] . . . . . . .

[1] It is written in the original MS. that about twelve pages of matter are missing after this. Evidently, the end of the 55th chapter, the whole of the 56th chapter and the beginning of the 57th chapter are missing.

# सप्तपञ्चाशोऽध्यायः

श्री —

को देवः स्थितिकर्ता च भावगा ।
त्रिमूर्तिस्तद्विधा शक्तिरित्ययं परमो जपः ॥ १ ॥

शब्दार्थप्रविभागेन द्विधा लक्ष्मीः प्रवर्तते ।
शान्ता पश्यन्त्यथ मध्या च वैखरी चेति सञ्ज्ञया ॥२॥

शब्दोन्मेषश्चतुर्धायमर्थोन्मेषस्तथाविधः ।
अन्यस्मितसंस्कारा स्वरवर्णादिवर्जिता ॥ ३ ॥

शाब्दी या संस्थितिः प्राच्या सा शान्ता शान्तसाधना ।
अर्थबोधकरूपं यच्छब्दशक्तेरसंस्कृतम् ॥ ४ ॥

केवलो यः समुन्मेषः पश्यन्ती सा प्रकीर्तिता ।
अर्थबोधकरूपं यत् स शब्दः परिकीर्तितः ॥५॥

न हि मयन्ति संस्कारा यदा मध्याथ सा तदा ।
एवं संस्कारसंपन्ना विकल्पशतशालिनी ॥ ६ ॥

त्रिविधं रमते येषु यतो न प्राकृतीष्वथ ।
रूपं शब्दस्य कृत्वा स्थानेष्वष्टसु सा तदा ॥ ७ ॥

वैखरी नाम सा वाच्या त्रिविधं वक्ति वर्णिनी ।
शान्ता नाम परा या सा सर्वत्र समतां गता ॥ ८ ॥

कोटिकोटिसहस्रांशसंस्था वागथ मध्यमा ।
कोटिकोटिसहस्रांशसंस्था वागथ वैखरी ॥ ९ ॥

वर्णाः पदानि वाक्यानि त्रिविधा वैखरीगतिः ।
सङ्कोच क्रमशो यानि सेयं वर्णादिवर्त्मना ॥ १० ॥

इयं चतुर्विधा शक्तिः प्रतिलोमानुलोमतः ।
चतुर्धा सोऽन्यं यानि शान्तापश्यन्त्यादिभिः क्रमात् ॥

चतुर्धास्त्वमयं यानि वैखरीमध्यमादिभिः ।
व्यक्ताव्यक्तसमाख्याता सा विज्ञेया त्रिधा पुनः ॥

व्यक्ता प्राणिशरीरस्था योदेत्यस्तमुपैति च ।
वीणावेणुमृदङ्गाद्यैर्व्यक्ता तद्वदभ्यज्यते हि या ॥१३॥

विवक्षाकरणोद्योगैः प्राणिभिः साथ तत्समा ।
मन्दाघट्टनात् सिन्धुसरिद्गिरिदरीमुखे ॥ १४ ॥

व्यज्यते शब्दशक्तिर्या सा त्वव्यक्ता समीरिता ।
उदयेऽस्तमये चासां पूर्वोक्तौ व्युत्क्रमोत्क्रमौ ॥१५॥

वाच्यं चतुर्विधं ज्ञेयं शान्तादिप्रविभागवत् ।
एवं व्यवस्थिता शक्तिस्तारिकेति निरूपणम् ॥१६॥

जपोऽसौ मध्यमो नाम परितो वर्णवर्णनम् ।
वर्णरूपा च शक्तिर्या या च संयोगसंभवा ॥१७॥

शक्तिरुद्धानुविद्धा या विश्वासभवा च या ।
एतच्छक्तिचतुष्कं तद्विनिर्णयपुरःसरम् ॥ १८ ॥

अर्थाध्यासस्तु शब्दे यश्चरमोऽसौ प्रकीर्तितः ।
वाच्यं बुद्ध्वा पृथग् बुद्ध्वा तां त्रिधाकारसंस्थिताम् ॥

तत्सम्बोधो हि यो मन्त्रे स जपस्तु परावरः ।
लक्ष्मीतन्त्रे समुद्दिष्टा त्वग्नीषोममयी हि या ॥२०॥

तत्तद्रूपमतिक्रम्य वाच्यवाचकसंज्ञितम् ।
लक्ष्मीमयीं निशां तीर्त्वा तारिकारूपरूपिणीम् ॥

निस्तरङ्गमहानन्दसंवित्तारामहोदधौ ।
विशोध्य सकलान् मन्त्रांस्तद्वान्न्यासमंयुतः ॥२२॥

तानुपस्थ तनस्तस्या तत्तत्प्याप्यायनोज्ज्वलान् ।
सामान्यविशेषाभ्यां भावयेन्मन्त्रदेवताम् ॥२३॥

तथा युक्तो जपेन्मन्त्रान् नित्योऽयं पूजितो जपः ।
तत्तच्छास्त्रोक्तमन्थनसंस्कारसमशालिनी ॥२४॥

तैस्तैर्भावै समेताश्च भावयन्मन्त्रदेवता ।
जपेत सर्वदर्शी यज्ञपोऽय परम स्मृत ॥ २५ ॥

नारद —

इद रहस्य परम नापात्रे देयमित्युत ।
उक्त्वा विद्युदिवाकाशे सादर्शनमुपेयुषी ॥ २६ ॥
वित्त प्राप्य पर शक्रो मुमुदे विगतज्वर ।

अत्रि —

इत्युक्त्वा भगवान् भद्रे नारदो विरराम ह ॥२७॥

पूजिता पुरुहूतेन सुभगा श्रीर्वरानने ।
इन्द्रोऽपि विस्मित शश्वद्ब्रह्मण सदन ययौ ॥२८॥

पृष्टश्च ब्रह्मणा तस्मै प्रोवाच विधिवत्तदा ।
ब्रह्मा प्रजापतिभ्यश्च पृष्ट प्रोवाच तत्त्ववित् ॥२९॥

मुनयो नारदेनाथ श्राविता मलयाचले ।
अङ्गिरा श्रावयामास पावक तन्त्रमुत्तमम् ॥ ३० ॥

कात्यायन पावकश्च स च गौतममाश्रमे ।
गौतमोऽथ भरद्वाज स च गर्ग महामुनिम् ॥ ३१ ॥

असित देवल गर्गो जैगीषव्य मुनि स च ।
स मुनि श्रावयामास पितॄन् भेजेऽथ लोभजित् ॥

एकाङ्गनानाम्रपिको (?) मानसी दुहिता च या ।
सा सुत श्रावयामास पाराशर्य महामुनिम् ॥३३॥

पाराशर्य सुत चापि शुक योगिनमुत्तमम् ।
श्रावयामास च शुक स्वर्भान्वाख्य प्रजापतिम् ॥

वसिष्ठोऽरुन्धतीं प्राज्ञा नारदस्य शशास सा ।
तन्त्र लक्ष्म्यास्तत प्रापुर्योगिन कपिलादय ॥३५॥

पार्वतीं श्रावयामास शङ्करश्चन्द्रशेखर ।
हिरण्यगर्भो योगाना वक्ता चापि सरस्वतीम् ॥३६॥

पतिव्रता हि या देव्यो देवब्रह्मर्षियोगिनाम् ।
तासा पारायण शश्वल्लक्ष्मीतन्त्रमिति स्मृतम् ॥ ३७ ॥

सकाशाद्ब्रह्मण श्रुत्वा मया ते कथित वुधे ।
इष्टासि मे प्रिया चेति न किंचिदवशेषितम् ॥३८॥

भूयस्त्व शृणु सक्षेपमनसूयेऽनसूयया ।
श्रुत्वा च कुरु यत्नेन रक्ष चाप्यप्रमादिनी ॥३९॥

लक्ष्मीनारायणाकारा भवित्री तेन मन स्थिति ।
अपायान् सपरित्यज्य पातकान् भवसागरे ॥४० ॥

दैवाद्वा यदि वा मोहादपायस्य परिप्लवे ।
भजमाना तथा चैव लक्ष्मीनारायणावुभौ ॥ ४१ ॥

शश्वच्चाशु कृतान् सर्वानपायान् जहती स्वयम् ।
अलुब्धा करणे तेषा लोकसग्रहणे रता ॥ ४२ ॥

आकिंचन्य समारोप्य बुद्ध्यैव दृढया स्वयम् ।
सर्वदा सर्वदेशेषु सर्वावस्थासु सर्वथा ॥ ४३ ॥

रक्षिष्यति हरि श्रीमानाश्रितानिति निश्चयात् ।
आत्मात्मीय पर सर्वं निक्षिप्य श्रीपते पदे ॥४४॥

उपाय वृणु लक्ष्मीश तमुपेय विचिन्तय ।
इति ते सकल भद्रे शास्त्रशास्त्रार्थतत्फलम् ॥४५॥

दर्शित परम तत्त्व सावधानेन चेतसा ।
सरहस्य ससक्षेप लक्ष्मीतन्त्रमिद परम् ॥

नावासुदेवभक्ताय त्वया देय कथचन ।
लक्ष्मीर्लक्ष्मीपतिश्चैव चेतसोऽनपगामिनौ ॥४७॥

यस्य तस्मै त्वया वाच्य यत्तदेतदनुत्तमम् ।
नास्तिकाना समीपे तु नैवाध्येयमिद भवेत् ॥४८॥

नात्रतस्नायिना तद्वत् मातापितृविद्विषाम् ।
नानाशास्त्रद्विषा चैव न गुरुद्वेषिणा तथा ॥ ४९ ॥

दापत्यविद्विषा चैव वनिताविद्विषा तथा ।
यो हि वेदव्रतस्नातो मातापितृगुरुप्रिय ॥ ५० ॥

अनिन्दकश्च शास्त्राणा परापरविधानवित् ।
आस्तिक श्रद्दधानश्च लक्ष्मीलक्ष्मीपतिप्रिय ॥५१॥

क्रियायज्ञविभागज्ञस्तन्त्रान्तरविधानवित् ।
साङ्गयोगविधानज्ञः सर्वशास्त्रार्थतत्त्ववित् ॥५२॥

वेदवेदाङ्गतत्त्वज्ञो वेत्ता पशुपतेर्मतम् ।
ऊहापोहविधानज्ञो मानतर्कपदार्थवित् ॥ ५३ ॥

सर्वाध्यात्मिकशास्त्रार्थतत्त्ववित् प्राप्तुमर्हति ।
ओं नमो वासुदेवाय तस्मै श्रीर्यस्य सा प्रिया ॥५४॥

ओं नमो विष्णुपत्न्यै च यस्या नारायणः प्रियः ।
नमो नित्यानवद्याय जगतः सर्वहेतवे ।
ज्ञानाय निस्तरङ्गाय लक्ष्मीनारायणात्मने ॥५५॥

इति श्रीपाञ्चरात्रसारे लक्ष्मीतन्त्रोद्धारे (तन्त्रार्थसंग्रहे) रहस्यशास्त्रार्थसारो नाम सप्तपञ्चाशोऽध्यायः

लक्ष्मीतन्त्रं समाप्तम्

---

*** APPENDIX I**

# वर्णानां सकेतनामानि

ओं उद्गीथ , छन्दआदि , तार , ध्रुव , प्रणव , ब्रह्म, ब्रह्मकोश , व्यापी

अ अप्रमेय , ओंकारादि , प्रथम , विष्णु , व्यापक

आ आदिदेव , आनन्द , गोपन , मधुसूदन

इ इद्र , इष्ट , त्रिविक्रम , माया, बिन्दु , राम

ई पञ्चबिन्दु , महामाया, माया, वामन , विष्णु

उ उदय , उद्दाम , भुवनम्, श्रीधर

ऊ ऊर्ज , ऊर्ध्वलोकेश , गुहालय , प्रशाधार , लोकेश , हृषीकेश

ऋ अङ्कुश , ऋतधामा पद्मनाभ , सत्य

ॠ ज्वाला, पीठम्, प्रसारण , योगी विष्टर

ऌ केशव , गोता, तारक , प्रशाधार , भगवान्, महेश्वर , लिङ्गात्मा

ॡ दीर्घघोण , देवदत्त , नारायण विराट् संप्रसारणम्

ए अग्निग्रह , जगद्योनि, त्र्यश्र , देवदत्त , माधव , मृगेश

ऐ ऐरावण , ऐश्वर्यम् गोधन गोविन्द , योगधाता, योगी, वीरसेन

ओ ओतदेव , ओतदेह ओदन, ब्रह्मसाधन , वासुदेवः विक्रमी

औ और्व , औपधम्, भूधर , सङ्कर्षण

अं कपिलाक्ष , चन्द्रार्घ , त्रैलोक्यैश्वर्यद , ध्रुव , प्रद्युम्न , बिन्दु , यष्टि , व्यापक , व्यापी, व्योमेश , संहार

अः अनिरुद्ध , कलान्त , परमेश्वर , विसर्ग , सर्गी, सृष्टिकृत्

क कमल , कराल , प्रकृति , ब्रह्मा, शङ्खिन

ख सर्वदेह , गरुत्मान् , चक्री, विश्वभावन , वेदात्मा

ग गदध्वंसी, गदाधर , गदी, गोविन्द , पञ्चात्मक

घ गजवाहन , घर्मांशु , तेजस्वी, दीप्तिमान्, पञ्चात्मा, पद्मपाणि

ङ एकदंष्ट्र , कपिध्वज , भूतभावन , भूतात्मा, शार्ङ्गपाणि

च खड्गधर , चक्री, चञ्चल , चन्द्रांशु , प्रेत नायक , वक्रतुण्ड.

छ कुण्डली, छन्द , छन्दपति , छलध्वंसी स्वच्छन्द

ज अजित , ककुभ , जन्महन्ता, मुसली शाश्वत

झ झष , झषाशा, सामग , सामपाठक , साम वेदात्मा, सुवर्णमा

ञ ईश्वर , उत्तम , चन्द्रधवल तत्त्वधारक , पाशपाणि , भृगु

ट आह्लाद , खेटकी, चन्द्री, पर्वत , विश्वाप्याय कर , हृदयाह्लादी

* Appendices I and II are prepared in accordance with the *Lakṣmītantra* (ch 25) *Ahirbudhnyasamhita* (ch 17) *Jayakhyasamhita* (ch 6) and *Padmasamhita* (IV, ch 23)

